# ऐतरेयोपनिषत्

श्रीमदानन्दतीर्थभगवत्पादप्रणीतभाष्येण
श्रीविश्वेश्वरतीर्थप्रणीतभाष्यटीकया
श्रीराघवेन्द्रतीर्थविरचितमन्त्रार्थसङ्ग्रहेण च समेता



सम्पादकः
डा. व्यासनकेरे प्रभञ्जनाचार्यः

आनन्दतीर्थप्रतिष्ठानम्
बेङ्गळूरु - ५६० ०२८

# ऐतरेयोपनिषत्

श्रीमदानन्दतीर्थभगवत्पादप्रणीतभाष्येण
श्रीविश्वेश्वरतीर्थप्रणीतभाष्यटीकया
श्रीराघवेन्द्रतीर्थविरचितमन्त्रार्थसङ्ग्रहेण च समेता

# AITAREYOPANIṢAT

With the Bhāṣya of Śrī Ānanda Tīrtha
and the commentary of Śrī Viśveṣvara Tīrtha
and Mantrartha Sangrahaḥ of Śrī Rāghavendra Tīrtha.

सम्पादकः
डा. व्यासनकेरे प्रभञ्जनाचार्यः

आनन्दतीर्थप्रतिष्ठानम्
श्रीपूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पे,
बेङ्गळूरु - ५६० ०२८.

AITAREYOPANIṢAT - With the Bhāṣya of Śrī Madhwāchārya and the commentary of Śrī Viśveṣvara Tīrtha and Mantrartha Sangraḥ of Śrī Rāghavendra Tīrtha. Edited Critically with an introduction and notes by Vidyāvācdhaspati, Śāstra Pravachana Kesari, Darśaṇa Rathna, Sacchāstra Vichakṣaṇaratnam, Paṇḍita Ratna, Mahābhārata Rathnam, Jñāna Ratnākara Dr. Vyāsanakere Prabhanjanāchārya, M.A.,Ph.D., Professor and Head of the department of Sanskrit, Govt. Arts College, Bangalore, and published by Ānanda Tīrtha Pratiṣṭhānam, Śrī Pūrṇa Prajña Vidyāpīṭha, Kattariguppe, Bangalore-560 028.

First Edition : 1997

**Price : Rs** ಬೆಲೆ : 120/-

Typeset at :

**Vāgartha Printonics**
54/4, Police Station Road, Basavanagudi,
BANGALORE - 560 004. PHONE : 627677

# प्रास्ताविकम्

- ० -

श्रुतिशिरांसीति सुप्रथिताभिरुपनिषद्भिरेव श्रुतितात्पर्यमवकलयितुं वयं प्रभवामः । यथा वयं स्वकीयं विचारं मुखद्वारैव प्रकटीकुर्मः तथा उपनिषदपि वेदस्य मुखवाणी भूत्वा वेदान्तरङ्गमवगमयति । उपनिषत्स्वपि ऐतरेयोपनिषत् महत्त्वपूर्णं स्थानं समधिगच्छति । अस्मदीयसमग्रपुरुषायुषनियामकानां भगवद्रूपाणां स्वरूपं महिमानं च निरूपयन्तीयमुपनिषत् श्रीमदाचार्य-भगवत्पादानां विशेषतः प्रीतिभाजनम् । ऐतरेयोपनिषत्प्रवचने आचार्याणां विशिष्टामासक्तिं मध्वविजयादिग्रन्थेषु वयमुपलक्षयामः । अस्याः उपनिषदः श्रीमदाचार्यैः विरचितस्य विशिष्टार्थगर्भितस्य अपूर्वभाष्यस्य अवलोकनेनैव अस्याः आध्यात्मिकार्थवैभवमस्माभिरधिगन्तुं शक्यते । अस्मत्पूर्वाचार्यैः श्रीविश्वेश्वरतीर्थैः विरचिताम् एतावत्पर्यन्तमप्रकटितामपूर्वां टीकां जिज्ञासूनां पुरतः उपस्थापयितुं नितरां प्रहृष्यामः । महता उत्साहेन परिश्रमेण च अस्य ग्रन्थस्य वैदुष्यपूर्णसम्पादनकार्यं विरचितवताम् अस्मत्परमप्रियाणां डा॥ प्रभञ्जनाचार्याणां विशिष्टां सेवामपि वयमिदानीं समभिनन्दामः ।

इति सप्रेम नारायणस्मरणानि ।

श्रीविश्वेशतीर्थश्रीपादाः

पेजावर-अधोक्षजसंस्थानम्, उडुपि ।

१६-२-९७

कर्नूलु

# Introduction

The Present Volume consists of four works viz., (1) The Aitareyopaniṣat, (2) The Bhāṣya on it by Śrī Ānandatīrtha, (3) The commentary on the Bhāṣya by Śrī Viśveṣwaratīrtha and (4) the Mantrārthasangraha of Śrī Rāghavendratīrtha.

## The Aitareyopaniṣat

The Upaniṣats along with the Brahmasūtras and the Bhagavadgīta constitute the triune (प्रस्तानत्रयी) of the Vedānta Philosophy. The Upaniṣats contain the quintessence[1] of the vedic philosophy. Though the Upaniṣats are innumerable in number, 108 have been considered the most significant.[2] Of the 108 upaniṣats 10 belong to the Ṛgveda, 19 to the Śuklayajurveda, 32 to the Kṛṣṇa Yajurveda, 16 to the Sāmaveda and the remaining 31 to the Atharvaṇa veda. Of these 108 Upaniṣats, ten[3] are considered to be the most important as they are representative of all the vedas.

Aitareyopaniṣat belongs to the Ṛgveda, Īśāvāsya and Bṛhadāraṇyaka to the ŚuklaYajurveda, Taittirīya and Kaṭha to the KṛṣṇaYajurveda, Kena and Chāndogya to the sāmaveda, Muṇḍaka, Māṇḍūkya and Śaṭpraśna to the Atharvaṇa veda.

The Aitareyopaniṣat is one of the ten principal upaniṣats. The 7 chapters of the Second Āraṇyaka and the 2 chapters of the Third Āraṇyaka of the Aitareyāraṇyaka of the Ṛgveda constitute the Aitareyopaniṣat. It is also known as महैतरेयोपनिषत्, बह्वृचोपनिषत्,[4] and महाभूतिश्रुति.[5] It is a upaniṣat in prose form consisting of 38 Khaṇḍas

---

1. मन्त्राश्चोपनिषच्चैव ब्राह्मणाद् उत्तमास्ततः ।
तत्राप्युपनिषच्छ्रेष्ठा युक्तावस्थाधिगम्यतः ॥ (प्रमाणविवेक, पृ. १४३)
2. सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम् । -मुक्तिकोपनिषत् । (४४)
3. ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा ॥ । -मुक्तिकोपनिषत् । (३०)
4. बह्वृचोपनिषत्प्रोक्ता तेनैव परमात्मना ॥ (भा. २/३/८)
5. महाभूतिश्रुतिः सैषा महाभूतिर्यतो हरिः- भाष्यम् (२/१/१)

in all (8 Khaṇḍas in First Adhyāya - 4 in the Second - 8 in the Ṭhird - 3 in the Fourth - 1 each in the Fifth, Sixth, and the Seventh, and 6 each - in the first and the second Adhyāyas of the third Āraṇyaka)

Lord Aitareya is the seer and the deity of this upaniṣat. He is the incarnation of Lord Viṣṇu[1], the supreme being.

He is to be distinguished from the sage Aitareya who is also refered to in the same upaniṣat (2/3/5).

As summarised by Sri Madhwa[2] the Aitareyopaniṣat proclaims that all words both vedic and non-vedic along with their syllables,

---

1. महिदासाभिधो जज्ञे इतरायास्तपोबलात् ।
साक्षात्स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात् ॥ ब्रह्माण्डे (सू.भा. १/१/३)
अवतारस्तृतीयोऽस्य देवर्षिः प्रथितो दिवि ।
महिदासस्त्वैतरेयो यस्तन्त्रं नारदेऽवदत् ॥ भा.ता.१/३/८.
ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् ।
यत् प्रापुर्वैष्णवा नान्ये यद्दते न सुखं परम् ॥-इति ब्राह्मे (भा.ता.२/७/१९)
विष्णोरपरिवारत्वदृष्ट्या देवान्तरार्चनात् ।
महिदासो देवऋषिः पातु मां विष्णुरव्ययः ॥
तदनर्पितकर्मभ्यस्तदस्मरणतस्तथा ॥ भा. ता. ६/८/१७
2. अतः सर्ववेदादिशब्दादितः सर्वगुणपरिपूर्णो भगवान् नारायण इति सिद्धम् ॥
- ऐतरेयभाष्यम् ।

पूर्वारण्यके प्रथमाध्यायोपक्रमे एष पन्था इत्यत्र सकलगुणपूर्णत्वेन सर्वोत्तमत्वान्नारायणस्यैव मुमुक्षुभिरुपास्यत्वं प्रतिज्ञाय स एव सर्वोत्कृष्टोऽष्टभिः खण्डैरध्यायशेषेण प्रपञ्चितः ॥ हेतुभूतं गुणपूर्णत्वं समन्वयमुखेन द्वितीयाध्याये प्राण ऋच इत्येव विद्यादित्यन्तेनोक्त्वा तत्रैवाख्यायिका विश्वामित्रमित्यादिनाध्याय शेषेणोक्ता । तृतीयाध्याये च यो ह वाऽऽत्मानमित्यादिना पूर्वाध्यायोक्त बृहतीसहस्रप्रतिपाद्यत्वमत एव तद्व्याख्यानरूपसर्वशब्दवाच्यत्वं प्रपञ्चितम् । तुर्ये चात्मा वा इदमेक एवाग्र आसीदित्यादिना तस्यैव कारणत्वोक्त्या समन्वय उक्तः ॥ पञ्चमे पुरुषो ह वेत्यादिनाऽवान्तरसृष्टिपराणां पुरुषस्त्र्यादिशब्दानां समन्वय उक्तः ॥ षष्ठे च कोऽयमात्मेत्यादिना गुणविशेषलाभाय यदेतद्धृदयं मन इत्यादिना समन्वय उक्तः ॥ सप्तमे च वाङ्मे मनसीत्यादिना स्पष्टं

names of all the deities, the sages, and the metres, basically convey the supreme Lord Nārāyaṇa. Even the inarticulate sounds of rivers, seas, the thunderbolt, the birds, the animals, also are primarily his names.[1] The importance of बृहतीसहस्र, उक्थविद्या, सृष्टिवैभव, अङ्गवैभव, प्राणविद्या, the bad omens and dreams indicative of death along with their remedial measures are some of the important topics covered in this upaniṣat.

## Bhāṣya of Śrī Madhwāchārya (1238-1318)

Śrī Madhwāchārya, also known as Śrī Ānandatīrtha and Śrī Pūrṇaprajña, the Bhāṣyakāra of the upaniṣat, is the founder Philosopher of the Dvaita School of Vedānta. According to the scriptures, he is the third incarnation of the wind God Vāyu.

---

सर्ववाग्विषयत्वमुक्तम् ॥ द्वितीये चारण्यके सर्ववाग्व्याख्येयविष्णुनामसंहिता-प्रतिपाद्यत्वोक्त्या सर्वशब्दसमन्वय एवाध्यायद्वयेनोक्तः ॥ यत एवं सर्ववेदादिशब्दोदितोऽतः सर्वगुणपूर्णो भगवान्नारायणः सर्वोत्तमोऽतः स एवोपास्य इति यदुपक्रमे उक्तं तदुपपन्नमिति सिद्धमिति भावः ॥ (पत्रम् १२८) - इति ऐतरेयभाष्यटीका(रत्नमाला)यां ताम्रपर्णी श्रीनिवासाचार्यविरचितायाम् ।*

1. एवम् ऋषिषु शब्देषु च व्यवह्रियमाणानि सर्वाणि नामानि विष्णवावेव मुख्यतः । किमु देवतानामानि ।... न केवलम् ऋष्यादीनां नाम भगवतः । सर्वे वेदा अपि तस्यैव नाम । किमु वेदाः समुद्र-मेघ-वृक्षपतन - भेरीताडनादि सर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि ।...... (२/२/२)
तस्मात् विजानतः सर्वं भगवन्नामैव (२/३/६) । अतो विष्णुरेव सर्वनामोक्त इति सिद्धम् । तस्मात् सर्वशब्दा विष्णुनामव्याख्यानरूपा एव (३/२/६) । अतः सर्ववेदादिशब्दोदितः गुणगणपरिपूर्णो भगवान् नारायण इति सिद्धम् ।
श्रियो वायोरपि न नारायणादि नामवत्त्वम् ।
सर्वान्तर्यामित्वात् सर्वगुणत्वात् सर्वशक्तित्वात् च सर्वनामवत्त्वमेव विष्णोरुच्यते । न तु सर्वस्वरूपत्वम् ।
सर्वैश्च वैदिकपदैरपि लोकशब्दैर्मेघाग्निवारिधिरवैश्च सर्वैः ।
एकोऽभिधेयः परिपूर्णगुणः प्रियोऽलं नारायणो मम सदैव सुतुष्टिमेतु ॥

---

* जीवमोक्षार्थं प्रवृत्तैषा ऐतरेयी श्रुतिः । इति च तद्वचनम् (पत्रम्. ४)

Born in a small village called pājaka near udupi in Dakṣiṇa Kannada Dist. of the Karnātaka State, he took sanyāsa at a tender age of ten years. He toured extensively all over the country for many times to propagate his philosophy, defeated the rivals belonging to various schools of thought, converted the earnest truth-seekers to his faith by his convincing arguments, trained many disciples to propagate his Philosophy, Installed Lord Śrī Kṛṣṇa's Idol at Udupi, instituted as many as 9 maths to propagate his teachings to the fourthcoming generations, performed miracles of very high mystic order, wrote number of works (of these 37 have come down to us as Sarvamūla) covering all the aspects of spiritual knowledge, and finally disapeared at udupi. Tradition says that he is still in the Uttara Badari, the abode of Lord Vedavyāsa and Nārāyaṇa, worshiping them.[1]

Sumadhwavijaya of Śrī Nārāyaṇapaṇḍitāchārya, sampradāya paddhati of Śrī Hṛśīkeṣatīrtha and other such works give fairly exhaustive information regarding his life works, disciples and teachings.[2]

Śrī Padmanābhatīrtha one of his direct disciples was one of the most outstanding scholars of his time, Śrī Naraharitīrtha, another direct disciple even as an ascetic ruled the kingdom of orissa for over 12 years.[3] The king Jayasimha of Kasaragod was one of his staunch followers. Śrī Jayatīrtha (1365-1388), the celebrated ṭīkākāra of his works, śrī Vyāsatīrtha of the Vyāsatrayī fame, śrī Vādirājatīrtha of the Yuktimallika, śri Raghavendratīrtha of the parimala are some of the prominent exponents of his philosophy.

Śrī Madhwa's works include the commentaries on the Brahmasūtras, the Bhagavadgīta, the Upaniṣats, the Ṛgveda and the

---

1. अद्यापि बदरीशैले बदरीषण्डमण्डिते ।
मध्ये मुनीनामध्यास्ते विद्वान् व्यासस्य सन्निधौ ॥ (सरसभारतीविलासे. ७/१०)
2. A collection of such biographical works are collected by me and published by the Aitareya Prakashana of Vyasanakere. (1997-Second Edition- First Edition pub. S.M.S.O. Sabha, Tirchanoor, 1989.)
3. vide Sri Kurmam Inscription.- Epigraphica Indica - Vol.VI No.25

Bhāgavatamahāpurāṇa. His Mahābhāratha tātparyanirṇaya, of 5108 verses, is an unparalleled work in the history of the post puraṇic literature. His other works Tantrasārasangraha, Kṛṣṇāmṛta mahārṇava, Sadāchārasmṛti, Yatipraṇavakalpa are some of his other works, of great ritual importance. Dvādaśastrotra and Nakhastuti (also Kandukastuti) are the stotras composed by him.

As evident from his works and the biographies and other sources available on him, Śrī Madhwa was a scholar, a philosopher, a poet, a seer, a teacher, a preacher, an orator, a prolific writer, a researcher, a debator, a mystic, a saint, a linguist, an ascetic, a musician, an archealogist, a logician, a geologist - par-excellence. He was an able administrator, extrordinary organiser and a social reformer of the highest order. In all, he was a perfect alrounder, in the truest senes. His physique was so perfect that the experts in samudrika śāstra could notice all the charectarestics of an ideal personality in it. A huge rock weighing about 50 tonnes lifted by him and placed across the river the Bhadra stand as an evidence for his unparalled physical might.[1]

His works are marked by the simplicity of style, precision of thought, brevity of expression and clarity of naration. Profuse quotations from the ancient works is another salient feature of his works.

His Aitareya Bhāṣya is a work in 1500 granthas. It covers the whole of the upaniṣat. Infact, he is the only bhāṣyakāra having commented upon the entire Aitareyopaniṣat. Rāmānujāchārya has not written any commentary on the upaniṣats.[2] Śankarāchārya's commentary is available for the fourth to sixth chapters of the second Āranyaka only[3]. Importance of बृहतीसहस्र, interpretation of

1. vide the Epigraphica Karnatica. Vol. VI, P. 27. Chickmagalur Ins. No. 81.
2. Rangaramanuja's (16th Century) commentaries are available on some of the upanishats (including Itareyopanishat.)
3. However, Upanishad Brahmayogin's commentary is available for the entire upanishat.

the several names occuring in the upaniṣat in favour of Lord Mahāviṣṇu and at places in favour of Śrī Vāyu, are some of its characteristcs.

The following are some of the main contents of his Bhāṣya :

१. द्वितीयारण्यके प्रथमोऽध्यायः - १-३८

मङ्गलाचरणम् - उपनिषदः देवताऋष्यादिकथनम् - तमोयोग्यानां त्रैविध्यम् - मुक्तियोग्यानां त्रैविध्यम् - उक्थशब्दार्थः - शस्त्रमन्त्रमहिमा - अर्कशब्दार्थः - अध्यात्मे उक्थम् - श्रीहरिः स्वस्य स्वयमेवान्नम् - श्रीहरिः सृष्टिकर्ता - प्रपद, ऊरु, उदरादि शब्दानां व्याख्यानम् - वायोः जीवोत्तमत्वम् - इन्द्रियाभिमानिदेवताकथनम् - सत्यशब्दार्थकथनम् - शास्त्रमाहात्म्यम् - हरिवाय्वोः माहात्म्यविशेषः - विष्णोरङ्गानां वैभवम् - यथायोग्यम् उपासना - अनुभवमाहात्म्यम् - तत्त्वाभिमानिदेवताः, तेषां कार्यवैविध्यम् - - देवतानां आपःशब्दवाच्यत्वम् - भगवानेव ब्रह्मगिरिः - वायुमहिमा - हरिरेव जगज्जन्मादिकर्ता - अक्षरविभागस्य सार्थक्यम् - हरेः सर्वोत्तमत्वम् - ब्रह्मादिदेवताकर्तृकभगवदाराधनम् - न जीवस्य जगज्जन्मादिकारणत्वम् - समग्राया उपनिषदः महिदासोपदेशरूपत्वसमर्थनम् ।

२. द्वितीयारण्यके द्वितीयोऽध्यायः - ४२-७९

न सूर्यस्य जीवशरीरे अन्तर्यामिता - श्रीहरेः सर्वशब्दवाच्यत्वम् - हरेः सर्वाधारत्वम् - चेतनानां तारतम्यम् - सर्वेषाम् ऋषिनाम्नां भगवन्नामत्वकथनम् - शतर्चि, गृत्समद, वामदेव, भरद्वाज, वसिष्ठादि शब्दानां विष्णुपरतयां निर्वचनम् - समुद्रादिघोषा अपि भगवद्वाचकाः - हरिवाय्वोः अन्नत्वनिरूपणम् - इन्द्रकर्तृकं महाव्रतम् - विश्वामित्रकर्तृकबृहतीसहस्रशंसनम् - भगवतः सर्वशब्दवाच्यत्वम् - भगवति सर्वनाम्नां समन्वयप्रकारः - बृहतीसहस्रं भगवतोऽन्नम् - इन्द्रे भगवतः विशेषावेशः - अहं- प्राण इत्यादीनां भगवत्परत्वनिरूपणम् - भगवतो रूपाणां परस्परं भेदाभावः - न इन्द्रस्य सर्वशब्दवाच्यत्वम् - नारायणादिनाम्नां नान्यत्र सम्भवः - नान्यो भगवत्समः - लक्ष्म्याः भगवन्मित्रत्वम् - विष्णुरेव बृहतीसहस्रप्रतिपाद्यः - बृहतीसहस्रपठनफलकथनम् - नेन्द्रेण स्वस्य भगवत्त्वकथनम् - अभेदव्यवहारस्तु अन्तर्यामिविवक्षया - पञ्चभेदाः - न भगवतः जगत्स्वरूपत्वम् - मुक्तावपि पञ्चभेदानां सद्भावः - नैकजीवबहुजीववादयोः सामञ्जस्यम् - नाभेदवादस्य शून्यवादात् वैलक्षण्यम् - मुक्तावपि तारतम्यसद्भावः - वेदमन्त्रेषु मुक्तलोकवर्णनम् -

विष्णुलोके देवतावस्थितिप्रकारः - श्रुतिसूत्रेषु मुक्तभेदसमर्थनम् - सूत्रार्थमागृह्यैव श्रुत्यर्थनिर्णयः कार्यः - मुक्तावस्थितिप्रकारः - बृहतीसहस्रपाठात् शतवर्षहरिध्यानफलम् - बृहतीसहस्रोपासनया ब्रह्मप्राप्तिः - इन्द्रस्य बृहतीसहस्रोपसाकत्वम् - बृहतीसहस्रे द्वासप्ततिसहस्रभगवद्रूपाणां सद्भावः - बृहतीसहस्रोपासनेन देवतालोकप्राप्तिः - प्रज्ञामयादिशब्दानां भगवत्परत्वकथनम् - बृहतीसहस्रसम्पादनम्- विष्णुसर्वोत्तमत्वसाधनम् - विष्णुरूपाणाम् अहश्शब्दवाच्यत्वम् - उपसर्गाणां न निरर्थकत्वम् - जीवेश्वराभेदनिरासः - अभ्यासशब्दार्थकथनम् - अहंशब्दस्य जीवपरत्वनिरासः - शरीरे जीवावस्थितिप्रकारः - न उपासकस्य देवतासु लयः - अभेदोपासनस्य अनर्थफलकत्वम् - भगवतः सर्वगुणपूर्णत्वम् ।

३. द्वितीयारण्यके तृतीयोऽध्यायः - ८५-१४५

बृहतीसहस्रे भगवतो नारायणादिपञ्चरूपाणां सद्भावः - पञ्चभूतेषु नारायणादि भगवद्रूपोपासनम् - लीलयैव पञ्चरूपधारणम् तेन - पञ्चरूपोपासनाफलम् - भोजने भगवतो नारायणादिरूपाणाम् अनुसन्धानप्रकारः - स्थावरजङ्गमेषु भगवतः पञ्चरूपाणि - अन्न, अन्नादप्रकरणस्य भगवत्परत्वसमर्थनम् - एतदुपासनायाः प्रामुख्यम् - भगवत्सन्निधानस्य तारतम्यानुसारित्वम् - भगवद्रूपेषु स्वगतभेदविवर्जितत्वम् - भगवतः सर्वोत्तमत्वचिन्तनस्य आवश्यकता - शरीरे पञ्चरूपिणो हरेः अवस्थानम् - यज्ञेषु पञ्चरूपिणो हरेः अवस्थितिप्रकारः - पञ्चरूपभगवद्ध्यानार्थमेव चैतत्पञ्चविधत्वोक्तिः सर्वत्र - स्तोमसामादिषु पञ्चरूपोपासनम् - प्रस्तावादिषु भगवतः पञ्चविधत्वम् - बृहतीसहस्रस्य विष्णुसहस्रनामव्याख्यारूपत्वम् - बृहतीसहस्रं साम च मत्स्यादिरूपव्याख्यानपरम् - दशनामव्याख्यानस्य सर्वनामव्याख्यानरूपत्वम् - बृहतीसहस्रस्य अन्नवत् तृप्तिकरत्वम् - सर्वशब्दवाच्यत्वात् सर्वगुणपूर्णत्वं हरेः - त्रिवृदादिस्तोमनामसमन्वयः - गायत्र्यादिसामनामसमन्वयः - गायत्र्यादिछन्दोनामसमन्वयः - चितौ साम्नि च पञ्चरूपोपासनम् - बृहतीसहस्रस्य च्छन्दस्त्वकथनम् - अनुष्टुप्च्छन्दोमाहात्म्यम् - नृसिंहानुष्टुप्मन्त्रोपासनविधिः - अनुष्टुप्सहस्रपठनफलम् - बृहतीच्छन्दो माहात्म्यम् - अनुष्टुबादि च्छन्दसां महत्वम् - बृहती च्छन्दसां वरा - गायत्रीच्छन्दोमहिमा - बृहतीसहस्रपठनफलम् - बृहतीसहस्रं विष्णोरेव प्रतिमा - प्राणरूपात् वायोः वाग्रूपायाः उमायाः उत्पत्तिः - बृहतीसहस्रं अकारव्याख्यानरूपम् - अकारस्य सर्ववाङ्मयमूलत्वकथनम् - उपांशुजपस्य प्राशस्त्यम् - ॐकारस्य

अकारव्याख्यानरूपत्वम् - नारायणशब्दोऽपि अकारव्याख्यानरूपः - हरेरेकस्यैव अकारवाच्यत्वम् - बृहतीसहस्रस्य हरेः प्रियत्वम् - ऋगादिरूपेण वाङ्मयस्य पाञ्चविध्य कथनम् - अकारार्थविस्तरः - हरेरेव इन्द्रशब्दवाच्यत्वम् - वेदेषु इन्द्रस्यैव विष्णुत्वम् - न महेन्द्रस्य महत्त्वम् - तच्च विष्णोरेव - इन्द्रः वायोरप्यवरः - इन्द्रस्य महेन्द्रशब्दवाच्यत्वे कारणकथनम् - परमात्मनः रतिक्रीडामाहात्म्यम् - भगवतः स्त्रीपुंरूपाणि - हरेः रमारमणप्रकारः - प्रेत्यशब्दार्थः - भूस्वर्गयोः सम्बन्धः - शुक्रशोणितयोः भगवत्प्रतिमात्वम् - नैकीभावस्य स्वरूपैक्यपरत्वम् - अभ्यासः तात्पर्यार्थः - भगवतः सर्वशब्दवाच्यत्वज्ञानेनैव मोक्षः - देवतानाम् उपासनाप्रकारः - विष्णोर्न नपुंसकाकारः - देवताकर्तृकविष्णुरथोत्सवः - अर्धनारीनरात्मना देवानां रमणम् - देवानामेव मुख्यतः सर्वशब्दवाच्यत्वोपासनाधिकारः - भगवतोऽकारवाच्यत्वम् - अकारार्थस्य व्याप्तिः - न अकारो अभाववाची - ॐकारार्थविस्तरः - देहस्य देवरथत्वम् - ऋपिशब्दार्थकथनम् - द्विविधो देवरथः - वायुभारत्योः प्रादुर्भावः - द्वे सुदिने - जीवन्मुक्तिश्च मुक्तिश्च सुदिने ।

४. द्वितीयारण्यके चतुर्थोऽध्यायः - १५४-१६९

प्रलये नारायणस्यैव स्वातन्त्र्येण अवस्थानम् - नारायणकर्तृका आदि सृष्टिः - ब्रह्मणश्शरीरात् देवतोत्पत्तिः - मानुषजन्मनः प्राशस्त्यम् - ब्रह्मवाय्वोः साम्यम् - भगवतः सर्वप्रेरकत्वम् - जीवशरीरे भगवतो अवस्थितिप्रकारः - विष्णोः प्रादुर्भावाः सर्वेऽपि पूर्णाः - विष्णोरिन्द्र-इदन्द्रनामत्वम् - आत्मा नारायणः - विष्णोः सर्वनामता - विष्णोरेव स्वातन्त्र्यम् - न केवलं कालापेक्षया गुणापेक्षयाऽपि हरेरेव जैष्ठ्यम् - लोकनाम्नां निर्वचनम् - अपूशब्दवाच्याः देवताः - देवतातारतम्यम् - देवानां लोकपालकत्वम् - इन्द्रियाभिमानिनाम् अस्वातन्त्र्यम् - न भगवतो जन्मादिदोषाः ।

५. द्वितीयारण्यके पञ्चमोऽध्यायः - १७५-१७९

भगवतः प्रादुर्भावः - भगवतः त्रीणि जन्मानि - जीवदेहजनने देवानामपि जन्म - भगवतः शरीरप्रवेशनिर्गमने - न कृष्णादिरूपेषु देहत्यागः - जीवेश्वरभेदसमर्थनम् - न मूढव्यवहारेण वेदार्थनिर्णयः - मोक्षे एव सर्वकामावाप्तिः ।

६. द्वितीयारण्यके षष्ठोऽध्यायः - १८५-१८८

भगवतो लक्षणानि - भगवतो मुक्तामुक्तस्वामिता - मुक्तभोगप्रकारः - कतरशब्दार्थः - दर्शनादयः सर्वा अपि प्रवृत्तयो भगवदधीनाः - प्रजापतिनाम्नः

शिवपरत्वम् - जीवाः भिन्नस्वभावकाः - अश्मादीनामपि प्राणित्वसमर्थनम् - मुक्तस्यापि भगवदाधीन्यम् ।

७. द्वितीयारण्यके सप्तमोऽध्यायः - १९२-१९३

विष्णुप्रार्थना प्रकारः (शान्तिमन्त्रभाष्यम्) ।

८. तृतीयारण्यके प्रथमोऽध्यायः - १९५-२२०

विष्णुनाम्नि पूर्वोत्तरवर्णसन्धिमहिमा - उपासनायाः नैकविधता - सर्वेषां ग्राह्यत्वम् - लौकिकालौकिकभेदेन द्विविधम् उपासनाफलम् - वराहवामननृसिंहाणां पूर्वोत्तरवर्णमध्यस्थितत्वम् - संहिता, पद क्रमाणां लक्षणानि - क्रमाध्यायिनो निन्दाया अनर्थफलकत्वम् - तामसानां निन्दायाः अवश्यकर्तव्यत्वम् - सात्त्विकाः न निन्द्याः - विद्याभिमानिदेवताकृतवायोस्स्तुतिः - याऽदितिर्द्यौरिति मन्त्रस्य व्याख्यानम् - प्रथश्च सप्रथश्चेति मन्त्रस्य व्याख्यानम् - तेऽविन्दन् मनसा इति मन्त्रस्य व्याख्यानम् - अविन्दन् ते अतिहितं इत्यस्य मन्त्रस्य व्याख्यानम् - चतुष्कपर्दा युवतिः इत्यस्य मन्त्रस्य व्याख्यानम् ।

९. तृतीयारण्यके द्वितीयोऽध्यायः - २२७-२७०

वायोः सर्वदेवताधारत्वनिरूपणम् - न मुनिमतानां परस्परविरोधः - अस्थिमज्जादिशब्दानां भगवत्परत्वम् - विष्णुनाम्नि भगवद्रूपाणि - वायुकृत पुरुषोपासनम् - अयोग्यस्योपदेशे प्रत्यवायः - अयोग्योपदेशस्य भगवत्त्यागरूपत्वम् - भगवत्त्यागानां नैकविध्यम् - तेषां फलकथनं च - तममुक्त्यादीनां तद्योग्यानां च स्वरूपतो भेदः - सृष्टिस्थितिलयादीनां नोच्छेदः - मरणसूचकदुर्निमित्तानि - तेषां परिहारोपायश्च - अरिष्टपरिहारकाः मन्त्राः तेषां देवताश्च - नानाविधदुर्निमित्तानां कथनम् - मरणसूचकदुःस्वप्नाः तेषां परिहारोपायश्च - दुर्निमित्तदुःस्वप्नादिषु परमात्मगुणोपासनायाः आवश्यकता - अतश्शब्दस्य अर्थः - यदन्तीत्यादि ऋचां तात्पर्यम् - आनन्द मोद प्रमोदादीनां शब्दानाम् अर्थभेदः - न मन्त्रेषु पुनरुक्तिः - रात्रीसूक्तव्याख्यानम् - रात्रीसूक्तोपासनस्य मोक्षफलकत्वम् - रात्रिसूक्तं न्यासिभिरपि जप्यम् - सर्वशब्दोपासनम् - पुरुषशरीरस्य दैवीवीणात्वम् - हरिरेव वाग्देवता - वेदपुराणानि संहितप्रतिपादकानि - वेदादयो विष्णुनामव्याख्यानरूपाः - उपदेशे अयोग्याः - सर्वशब्दानां विष्णुशब्दव्याख्यानरूपत्वम् - विष्णुनाम्नि पणयोः प्राशस्त्यम् ।

## Importance of the Bṛhatisahasra

The Bṛhatīsahasra is a compilation of 1000 Ṛgvedic mantras. Of these only 240 mantras are of the Bṛhati metre.[1] Of the remaining, 240 are of Gāyatri, 240 are of Ushnik and 280 of other metres. The total number of syllables of these metres constitute 36 thousands. The number of syllables in Bṛhati is 36. Thus these are equivalent to one thousand Bṛhati mantras. Thus they are called Bṛhati sahasra.[2] In all it has 36 thousand vowels and 36 thousand consonants. Each syllable having a form of the Lord as its deity. Thus the total number of forms of the Lord in Bṛhati sahasra is 72 thousands. Its importance as brought out in the Bhāṣya is as follows:

---

1. अथ छन्दांसि - गायत्री - उष्णिग् - अनुष्टुप् - बृहती - पङ्क्ति - त्रिष्टुप् - जगती - अतिजगती - शक्करी - अतिशक्करी - अष्टि - अत्यष्टि - धृति - अतिधृतयः - चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि - इति सर्वानुक्रमणिका ।

   छन्दोभिमानिदेवताः-

   गायत्री बृहती चैव ताः सर्वा गरुडस्तथा ।
   ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप्स्वाहेति चोच्यते ।
   गायत्री जगती चैव वारुणी रोहिणी तथा ।
   अनुष्टुब्बृहती चैव तारा पङ्क्तिः शची तथा ।
   उष्णिक् सौरी जगत्यश्च सर्वदेवस्त्रियो मताः ।
   विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते ।
   अतिछन्दांसि सर्वाणि सर्वदेव्यः प्रकीर्तिताः ।
   विराडिति च नामासां तास्ता ऊनाधिकेष्वपि ।
   निचृद्भुरिग्विराट्संज्ञा प्रस्तारेत्यादि नाम च ।
   बह्वीनामेकमानेन त्वेकं नाम च युज्यते ।
   सर्वाभिमानिता चैव तिसृणां तु यथाक्रमम् । इति ऋग्भाष्योद्धृत ऋक्संहितावचनम् ।

2. The बृहतीसहस्र portion has been commented upon by Sri Sheshachandrikacharya(Sri Raghunathatirtha) and Sri Bhagavanta raya. Mss. of both are available in my collection (Sri Jayatirtha Sanskrit Manuscripts' Library, Vyasanakere).

बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नम् । तदाज्ञया वायोश्च । तस्मात् तच्छंसनेन भगवान् वायुश्च अतिप्रीयेते । बृहतीसहस्रम् उक्थनामकं मुख्यतः । यावतीभिः ऋग्भिः शंसिताभिः षट्त्रिंशत्सहस्राणि अक्षराणि भवन्ति यस्मात् तस्मादपि छन्दसः तावत्यः शंसनीयाः । तदा सम्पादितं बृहतीसहस्रं भवति । तत्र या व्याञ्जनाभिमानिदेवता सैव सर्वप्राणिनां शरीराभिमानिदेवता स्वायम्भुवो मनुः । घोषाभिमानिदेवता सर्वजीवाभिमानी ब्रह्मा । ऊष्माभिमानी वायुः ।...... षट्त्रिंशत्व्यञ्जनगतविष्णुरूपाणि रात्रीणामधिदेवताः । स्वरगानि हरेः रूपाणि अह्नां दैवतानि । बृहतीसहस्रवर्णानामपि ध्यात्वा अखिलानि शतवर्षहरिध्यानफलं भवति । रमापतेः द्वासप्ततिसहस्राणि रूपाणि स्वरव्यञ्जनभेदतः बृहतीसहस्रसंस्थानि । तेषां पर्युपासनात् विष्णोराधिक्यं ज्ञायते । बृहतीसहस्रसम्पादनानन्तरं भगवदाधिक्यं पुनरधिकैव ज्ञायते । अस्या विद्यायाः उपासने देवाः ऋषय एव योग्याः । परमात्मा नारायणादिरूपेण उक्थे बृहतीसहस्ररूपे पञ्चधा स्थितः । बृहतीसहस्राख्यं शस्त्रमन्त्रं तृचाशीतित्रयं पूर्वापरं तृचाशीत्या पञ्चात्मकम् । प्रथमपञ्चके नारायणः द्वितीयपञ्चके वासुदेवः तृतीये सङ्कर्षणः चतुर्थे प्रद्युम्नः अन्तिमे अनिरुद्धः प्रतिपाद्यः । तत्रस्थ हरेः सर्वाण्यपि रूपाणि पूर्णानि । सङ्कर्षणप्रद्युम्नौ भोक्तृषु संस्थितौ भोक्तृशक्तिप्रदौ । नारायणानिरुद्धौ भोग्यवस्तुषु संस्थितौ । नभःस्थितः वासुदेवः अवकाशप्रदः ।

इन्द्रस्य परमेश्वरस्य विष्णोः सम्बन्धी नितरां प्रियत्वात्यः प्राणदेवता वायुः तस्य प्रतिमारूपमिदं बृहतीसहस्रम् । स च वायुर्विष्णोर्मुख्यप्रतिमा । तस्माद् विष्णोरेव प्रतिमा बृहतीसहस्रम् ।

बृहतीसहस्रं विष्णुसहस्रनामवाचकम् । रूपानन्ताभिधायकं च । मत्स्यादिदशभगवद्रूपाणि बृहतीसहस्रवाच्यानि । बृहत्याः अभिमानी वायुः । माहात्म्याधिक्यतश्चैव तस्या बृहतीति नाम । बृहती चतुर्मुखब्रह्मणो देहमध्यात् जाता । बृहतीसहस्रम् अकारस्य व्याख्यानरूपम् । तस्य नारायणस्य यशोरूपं च ॥

## ऐतरेयभाष्यटीकयोः हरिपरतया निरुक्तानि नामानि

अर्कः, अर्कली, अक्षरम्, अग्निः, अतः, अतिद्युम्नः, अनीकम्, अन्तरिक्षः, अन्तस्थः, अदितिः, अधिदैवम्, अध्यात्मम्, अनकाममारः, अप्, अपानः, अभूतिः, अम्भः, अमृतः, अमृतमयः, अवशः, असि, अस्मि, अस्थि, असुः,

असुरः, अहम्, अहः, अहःसम्मानः, आकाशः, आत्मा, आद्यः, आदित्यः, आणीस्थः, आपः, आज्ञानम्, इतत्, इदन्द्रः, उः, उक्थायुः, उद्गीथः, उपद्रवः, उपः, उपाः, उष्णिक्, ऊर्म्यः, एतत्, ॐकारः, औपधिः, कतरः, कर्म, क्रतुः, कामः, कुली, क्षुद्रसूक्ताः, गन्धर्वः, गायत्रम्, गायत्री, गिरिः, चित्रम्, चक्षुः, चक्षुर्मयः, छन्दोमयः, जातः, जनित्वम्, ज्यूतिः, तृणम्, त्रिवृत्, त्रिष्टुप्, थम्, द्विपदा, देवः, देवत्रादेवः, देवमयः, दुहिता, देवयानः, द्युः, द्युम्नः, धन्याश्चर्यः, धर्मः, धाता, धृतिः, निधनः, पर्जन्यः, पवमानः, पवित्रम्, पन्थाः, पञ्चजनः, परः पितृ, पुत्रः, पुरुषः, पृथिवी, पृथक्, प्रजनम्, प्रजापतिः, प्रतिहारः, प्रतिष्ठा, प्रपदं, प्रसविता, प्रस्तावः, प्रष्टिः, प्रज्ञा, प्रज्ञानम्, प्रज्ञामयः, प्राणः, प्रातः, बलिः, बृहत्, बृहती, ब्रह्म, ब्रह्ममयः, ब्रह्मगिरिः, भद्रम्, भूतिः, मः मज्ञा, मतिः, मनः, मनीषा, महान्, मार्जारः, मातृ, मात्रा, मानुषः, मांसः, मूषकः, मेधा, यज्ञः, यत्, रम्, राजनम्, रात्रिः, लोहितम्, वनस्पतिः, वसिष्ठः, वंशः, वाक्, वामः, वायुः, विज्ञानम्, विष्णुः, वृषः, वृष्टिः, शीः, श्रोत्रम्, श्रोत्रमयः, सः सङ्कल्पः, सत्यम्, सन्धाता, सन्धिः, सर्वः, संज्ञानम्, संहिता, साम, सूर्यः, सूक्तम्, स्कन्नः, स्पर्शः, स्मृतिः, स्वरः, हिरण्मयः, हृदयम् ।

## ऐतरेयभाष्यटीकयोः वायुपरतया निरुक्तानि नामानि

अः, आणी, आयुः, इन्दुः, द्यौः, पवमानः, प्रजापतिः, प्राणः, बाध्वः, बृहत्, बृहती, भृतमः, मतिः, वंशः, वेदाणी, सत्, सत्यम्, संवत्सरः, सविता, हनु ।

## ऐतरेयभाष्यटीकायोः विवृताः शब्दाः

अः, अक्षण्वन्तः, अग्रम्, अर्थिनः, अप्, अभ्यासः, अम्भः, अलोकः, अंशः, आनन्दः, आपः, इरा, ईरपादाः, उरः उल्बणम्, ऋचः, ऋतम्, कर्णसंयुताः, कर्माभासाः, कुम्ब्याः, क्रूरम्, गाथाः, ग्रामाः, तीक्ष्णम्, द्यौः, दक्षिणम्, दश, निगदम्, निर्भुजम्, नेयता, निर्हारी, पद्वन्तः, परः, पशवः, प्रजा, प्रमोदः, मध्यम्, मरः, मित्रम्, मोदः, मुत्, यजुः, रङ्गः, रेतः, लिङ्गम्, वङ्गाः, वङ्गावगधाः, वटरकाः, वयांसि, विभागः, विदलम्, विशदम्, वेदनम्, वैश्वामित्रम्, वृकाः, वृक्याः, शार्कराक्ष्यकाः, शिवः, शिरः, शेपः, श्येनः, सत्, स्वर्गलोकः, स्रक्ति, सायम्, सुदिने ।

## ऐतरेयोपनिषद्भाष्योदाहृतप्रमाणग्रन्थाः

अर्धनारीनारायणतन्त्रम्, आदित्यपुराणम्, ऋक्संहिता, ऋग्वेदसंहिता, ऐतरेयसंहिता, गरूडपुराणम्, चातुरात्म्यम्, तत्त्वसारः, नामनिर्णयः, नरसिंहपुराणम्, पदविवेकः, पद्मपुराणम्, पञ्चरात्रम्, प्रमाणविवेकः, बृहत्संहिता, ब्रह्मसारः, ब्रह्मसूत्रम्, ब्रह्माण्डपुराणम्, ब्रह्मवैवर्तपुराणम्, भगवद्गीता, भागवतपुराणम्, भविष्यत्पर्व, महाभारतम्, महासंहिता, मोक्षधर्मः, वाक्यनिर्णयः, शब्दतत्वम्, शब्दनिर्णयः, शैवपुराणम्, सत्तत्वम्, स्कांदपुराणम्, हरिवंशः ।

The following references in the Sumadhwavijaya Clearly show that Sri Madhva has a special liking towards this upaniṣats;[1] He was just a young boy of about 8 years when he first revealed the inherent meaning of this upaniṣat to his guru Totantillaya as gurudakshiṇa; in a way it can be termed as his first bhāṣya (Madhwavijaya 3/55).

## ऐतरेयोपनिषत्सम्बन्धि वैष्णवग्रन्थाः

(Dvaita works on the Aitareyopaniṣat)

१. ऐतरेयभाष्यम् - आनन्दतीर्थभगवत्पादकृतम्

२. ऐतरेयोपनिषद्भाष्यटीका - व्यासतीर्थकृतम्[2]

---

1. साक्षादथोपनिषदो विभुरैतरेय्याः पाठच्छलेन विजनेऽर्थरसान् ब्रुवाणः ।
अध्यापकाय विततार विमोक्षबीजं गोविन्दभक्तिमुचितां गुरुदक्षिणां सः॥(३/५५)
ऐतरेयमथ किञ्चन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।
श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच ॥ (६/१)
सद्गुरोर्न विरहं सहमानः सत्यतीर्थयतिरन्वगमत्तम् ।
यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमश्रुणोत् पुरुसङ्ख्यात् ॥ (६/५०)
अम्भोधेस्त्वरिततरोर्मिपाणिमृष्टे स्वच्छेऽसौ विकटतटासने निषण्णः ।
व्याचाख्यावतिचिरमैतरेयशाखासूक्तानि प्रभुरतिसुन्दरप्रकारम् ॥ १६/१६)
नाकीन्द्रास्तमवनिभागमावसन्तं सुश्लोकैरपि भुवनानि भूषयन्तम् ।
नेमुः खादुपनिषदं तदैतरेयीं व्याख्यान्तं विविधविशिष्टशिष्यमध्ये ॥ (१६/५४)

2. महैतरेयखण्डार्थो व्यासतीर्थादिभिर्लघु ।
सङ्गृहीतः स एवार्थो विस्तराल्लिख्यते मया ॥ - ऐतरेयखण्डार्थ of कृष्णाचार्य

३. ऐरेयोपनिषद्भाष्यभावबोधः - रघूत्तमतीर्थकृतः
४. ऐतरेयोपनिषद्भाष्यटीका - विजयीन्द्रतीर्थकृता
५. ऐतरेयोपनिषद्भाष्यटीका - विश्वेश्वरतीर्थकृता (अधुना प्रकटिता)
६. ऐतरेयोपनिषद्भाष्यटीका - वरदतीर्थकृता
७. ऐतरेयोपनिषद्भाष्यटीका - रामचन्द्रतीर्थकृता
८. ऐतरेयोपनिषद्भाष्यटीका - वेदेशतीर्थकृता
९. ऐतरेयोपनिषद्भाष्यटीका - बिदरहळ्ळि श्रीनिवासतीर्थकृता
१०. ऐतरेयोपनिषद्भाष्यटीका - ताम्रपर्णीविट्ठलभट्टकृता
११. ऐतरेयोपनिषद्भाष्यटीका - अनन्तभट्टकृता
१२. ऐतरेयोपनिषद्भाष्यटीका - नारायणाचार्यकृता
१३. ऐतरेयोपनिषद्भाष्यटीका (रत्नमाला) - ताम्रपर्णी श्रीनिवासाचार्यकृता
१४. ऐतरेयोपनिषद्भाष्यटीका - श्रीमुष्णं वासुदेवाचार्यकृता
१५. ऐतरेयोपनिषद्भाष्यटीका - सातारराघवेन्द्राचार्यकृता
१६. ऐतरेयोपनिषद्भाष्यदुर्गमवाक्यार्थविवरणम् - श्रीनिवासाचार्यकृतम्
१७. ऐतरेयोपनिषद्भाष्यार्थविचारः - त्यक्तश्रीनिवासतीर्थकृता
१८. ऐतरेयोपनिषन्मन्त्रार्थसङ्ग्रहः - राघवेन्द्रतीर्थकृता
१९. ऐतरेयोपनिषत्खण्डार्थप्रकाशः (अर्थप्रकाशिका) - विद्याधीशशिष्य नृसिंहभिक्षुकृतः
२०. ऐतरेयोपनिषत्खण्डार्थप्रकाशः - धीरेन्द्रतीर्थकृतः
२१. ऐतरेयोपनिषत्खण्डार्थः - स्मृतिमुक्तावलि कृष्णाचार्यकृतः
२२. ऐतरेयोपनिषत्खण्डार्थः - मृत्तिकानारायणाचार्यपुत्र श्रीनिवासाचार्यकृतः
२३. ऐतरेयभाष्यटीका - वेङ्कटवराहाचार्यशिष्यभगवन्तरायकृता ।
२४. ऐतरेयभाष्यटीकाविवरणम् - वेङ्कटवराहाचार्यशिष्यभगवन्तरायकृतम् ।
२५. ऐतरेयोपनिषत्खण्डार्थः वेङ्कटवराहाचार्यशिष्यभगवन्तरायकृतः
२६. ऐतरेयदूषणनिरसनम् - वादिराजाचार्यकृतम्
२७. ऐतरेयरहस्यरञ्जिनी - आरण्यकाचार्यशिष्य मौद्गरबालाचार्यकृता

1. १,३,१३,१८ & २३ - Printed; ३, ८, ९, १४, २१, २६ & २७ - Mss. Sri Uttaradimath Library, Hospet.; १२ & १७ - Mss. Oriental Research Institute, Mysore, No. C. 1626 & C. 2395.; १९ - Ms. Tanjore

## Bhāṣyatika of Śrī Vishveśvaratirtha (1520-1580)

Śrī Jayatīrtha who has writen commentaries on the 18 works of Śrī Madhwa has commented upon two of his upaniṣad Bhāṣyas viz., Iśāvāsyabhāsya, and Shatprashnabhāsya. His desciple Vyasatirtha has commented upon the remaining 8 upanishadbhāshyas. Of these, Sri Vishveshwatirtha's commentary is the most popular and widely read. This is established by the hundreds of manuscripts available at various places almost all the mss., collections have a copy of it. It is also quoted with regard by Tamraparni Srinivasa[1] and others. It has two gloses[2] writen on it by Mankali Dharmacharya,[3] who has a gloss to his credit on the shatprashnabhasyatīka of Sri Jayatirtha.

· Sri Vishveshwaratirtha, also refered to as Vishveshatirtha was the pontiff of Sri Pejavara Adhokshaja Math, one of the 8 Udupi maths founded by Sri Madhwa, wherein flourished Sri Vijayadhwajatirtha, (1380-1440) his seventh predecessor, the

Palace Library. No. 15475; १५, १६ & २५ Mss Sri Jayatirtha Sanskrit Mss Library, Vyasanakere. (My collection).; ५, ६, ७, १०, ११ & २२ - Mentioned in the Gopalavilasa Library Catalogue, Kumbhakonam, not yet attested by Mss.; १३ Reprint of it, Edited by Prof. K.T. Pandurangi, with an introduction has been published by the Dvaita Vedanta Studies and Research Foundation, Bangalore, recently.

1. श्रीपद्मनाभतीर्थादीन् वन्दे विज्ञानवारिधीन् ।
टीकाकृतश्च विश्वेशतीर्थान् वेदान्तकोविदान् ॥
2. Available in my collection.
3. रमारमणमानम्य पूर्णबोधेष्टदैवतम् ।
तथा विश्वेशतीर्थादीन् नत्वा तत्प्रीतिकामुकः ॥
यथाबोधं यथावाक्यं तत्प्रसादानुरञ्जितः ।
महाभूतिश्रुतिव्याख्याविवृतिं विवृणोम्यहम् ॥
विश्वेशतीर्थश्रीमच्चरणाः उपनिषदुक्तगुणविशिष्टरमारमणशरणप्राप्तिरूपं
मङ्गलमाचरन्ति । यत्त्यागादिति । ...(आदि)
विश्वेशतीर्थार्यवचोविशेषान् व्याख्यातुमीशाः विदितार्थसाराः ।
तथापि मय्यल्पविदूहितार्थे सन्तः क्रियासुः करुणां कृपालवः ॥ (अन्त्यम्)

famous dvaita commentator on the entire Bhāgavatapurāṇa. [1]He was the student of Sri Vādirajatirtha,(1480-1600) one of the most celebrated exponents of the Dvaita Vedanta.[2]

The commentary[3] is written in a lucid and simple style. It covers the entire bhasya for each Khanda. After commenting upon the bhasya he gives the Khandartha of the upaniṣat also. (भाष्ये खण्डार्थस्य विक्षिप्यवर्णितत्वात् क्रमेणार्थ उच्यते[4] ।) The influence of Jayatirtha can be seen through out the commentary starting from the introductory verses.

## Mahaitareyamantrarthasangraha

Mahaitareyamantrarthasangraha is the work of celebrated dvaita exponent and great mystic Sri Raghavendratirtha[5] (1623-1671). It covers all the mantras cited in the upanishat.[6] I have edited it[7] on the basis of two manuscripts available in my collection.

1. Sri Vishwapatitirtha the fifth in succession to him is another popular writer of Sri Pejawar math. He has commented upon Sumadhwa Vijaya, Sangraharamayana and Manimanjari of Sri Narayanapanditacharya, and the Chaturdaśa Stotras; a commentary on the Bhāgavata Purāṇa is also ascribed to him.
2. यद्वादिराजयतिवर्यसुसम्प्रसन्न...... हयास्यसुशिष्यसङ्घे ।
   तस्याङ्घ्रिपङ्कजपरागविचित्रितश्रीविश्वेशतीर्थयतिराड् भवतु प्रसन्नः ॥*
3. A work called Bhagavadgitavivaranaṁ is also ascribed to him. (Anup Library, Bikaner mentioned in Vishwajyoti, V.V.R.I. Hoshiyarpur - 1964 - No.1366- Vide A.H.D.S.V. & L by Dr. B.N.K. Sharma
4. This portion of his work is available in some of the manuscripts separately as Aitareya Khandartha of Sri Vishweshvaratirtha.
5. A detailed account about Sri Raghavendra's works is given in my book Sri Raghavendratirthakritimanjari, pub. by Aitareya Prakashana, Vyasanakere. (1990)
6. His disciple smrutimuktavali Krishnacharya's khandartha covers the remaining portion of the upanishat.
7. It was once published by Parimala Research and Publishing House, Nanjanagud (1978).

* cited by Dr. B.N.K. Sharma, in his a history of Dvaita School of Vedanta and its litarature. Vol-2. p. 273

## ऐतरेयोपनिषत्खंण्डानुक्रमणिका


अथ कौण्ठरव्यस्त्रीणि षष्टि (III/2/ii)
अथ खल्वाहुर्निर्भुजवक्त्राः (III/1/v)
अथ खल्वियं सर्वस्यै वाच (III/2/v)
अथ हास्मा एतत्कृष्णहारीतो (III/2/vi)
अथातोऽनुव्याहाराः प्राणो (III/1/iv)
अथातो निर्भुजप्रवादाः (III/1/iii)
अताथो रेतसः सृष्टिः (II/1/iii)
अथातो विभूतयोऽस्य (II/1/vii)
अथातः संहिताया उपनिषत् (III/1/i)
अथ शाकल्यस्य पृथिवी (III/1/ii)
आत्मा वा इदमेक एवाग्रे (II/4/i)
आपाः ३ इत्याप इति (II/1/viii)
उक्थमुक्थमिति वै प्रजा (II/1/ii)
एष इमं लोकमभ्यार्चत् (II/2/i)
एष उ एव बिभ्रद्वाजः (II/2/ii)
एष पन्था एतत्कर्मैतद्ब्रह्म (II/1/i)
कोऽयमात्मेति वयमुपास्महे (1/6/1)
चत्वारः पुरुषा इति बाध्वः (III/2/iii)
तद्वा इदं बृहतीसहस्रं सम्पन्नं (II/3/v)
तद्वा इदं बृहतीसहस्रं सम्पन्नं (II/3/vi)
तद्वा इदं बृहतीसहस्रं (II/3/vii)
तद्वा इदं बृहतीसहस्रं सम्पन्नं (II/2/iv)
तत्रैते श्लोकाः यदक्षरं (II/3/viii)
तं देवाः प्राणयन्त (II/1/v)
तं प्रपदाभ्या प्रापद्यत (II/1/iv)
तस्य वाक्तन्तिर्नामानि (II/1/vi)
तस्य य आत्मानमाविस्तरां (II/3/ii)
ता एता देवताः सृष्टा (II/4/ii)
दुग्धदोहा अस्य वेदा (III/2/iv)
पुरुषे ह वा अयमादितो (II/5/i)
प्राणो वंश इति स्थविरः (III/2/i)
बृहद्रथन्तरयो रूपेण (III/1/vi)
यो ह वा आत्मानं (II/3/i)
यो ह वै यज्ञे यज्ञम् (II/3/iv)
वाङ्मे मनसि प्रतिष्ठिता मनो (II/7/i)
विश्वामित्रं ह्येतदहः (II/2/iii)
स ईक्षते मे नु लोकाश्च (II/4/iii)
स एव पुरुषः समुद्रः (II/3/iii)


The Present edition of the Aitareya Upanishat and its commentary is based on my thesis which secured the Ph.D. degree from the Rashtreeya Samskruta Vidyapeetha, Tirupati. It is being published by His holiness Sri Vishveshatirtha swamiji (of Śri pejawer math, Udupi), whose name and the math are also same as that of the commentator, through his Āanandatirtha Pratiṣṭhāna, Bangalore. My humble praṇāmas to him. Dr. Laxminarasimha Bhatt, Dean, Faculty of Sahitya and Samskriti, Rashtreeya Samskrita Vidyapeeta, Tirupati was the guide for my doctoral work. Typesetting work is done by Vāgartha Printonics, Bangalore. Sri Kalghatki Brothers and Srimati Sandhya have seen the work through the press. I am grateful to all of them.

Bangalore
16-2-1997

**Dr. Vyasanakere Prabhanjanacharya**
Pajaka, No. 67, 50ft Road, Hanumantanagar.

# विषयानुक्रमणिका


INTRODUCTION iv-xxii

I. भाष्यटीकासमेता ऐतरेयोपनिषत् १-२७६

i. द्वितीयारण्यके द्वितीयप्रपट्टके प्रथमोऽध्यायः । १-४१

१. भगवतो महिदासरूपेण अवतारादिनिरूपणम् । (१)

२. भगवानेव पन्थाः इत्युपक्रमः तं न प्रमाद्येत् नातीयात् इत्युपदेशः । (१)

३. पिशाचराक्षसासुरैः (त्रिविधैः तमोयोग्यैः) भगवतोऽतिक्रमणम् । (१)

४. अर्कः बृहत् पवमानः इति विष्णोरुपासनाप्रकारः । (१)

५. उक्थशब्दार्थः - उक्थविद्या अन्तरिक्षाद्यधिदैवतम् उक्थम् (२) मुखाद्यध्यात्ममुक्थम् (२)

६. प्रजापतेः रेतसो देवादीनां सृष्टिकथनम् (३) ।

७. आदिसृष्टौ वासुदेवाख्यब्रह्मणः चतुर्मुखे प्रवेशः (३) ।

८. देवानां विवादः - अहमुक्थमहमुक्थमिति । प्राणस्य श्रेष्ठत्वम् (४) ।

९. सत्यशब्दनिर्वचनं शुक्लं कृष्णं कनीनिकेति चक्षुषः त्रिवृत्त्वम् (५) ।

१०. वाचा सर्वव्यवहारः सर्वे वेदाः नारायणस्य वाक् इति प्रतिपादनम् (६) ।

११. आकाशादि पिपीलिकान्तं सर्वं प्राणेन आवृतम् (६) ।

१२. भगवतोऽङ्गानां वैभवम्- प्राणचक्षुरादिभिः तेन अन्तरिक्षलोकादि सृष्टिः (प्राणेन सृष्टिः चक्षुषा सृष्टिः श्रोत्रेण सृष्टिः मनसा सृष्टिः - इत्यादि) एतदुपासनाफलनिरूपणम् (७) ।

१३. देवानाम् आप इति नाम । तस्य कारणं च (८) ।

१४. ब्रह्मगिरिशब्दार्थकथनम् (भगवानेव ब्रह्मगिरिः) (८) ।

१५. असुः प्राणः भूतिः विभूतिः इति भगवतः उपासनानिरूपणम् (८) दैत्यैः अन्यथोपासनं तत्फलं च (८) भगवानेव मरणप्रदः जीवनप्रदश्च (८) एतदुपासनाफलनिरूपणं च (८) ।

ii. द्वितीयारण्यके द्वितीयोऽध्यायः ४२-८४

१. भगवतः प्राणेन सह ब्रह्मादिसर्वजीवेषु प्रवेशः (१) शतर्चिशब्दार्थनिरूपणम् (१)

२. गृत्समद - विश्वामित्र - भरद्वाज - वसिष्ठ नाम्नां भगवन्नामत्वकथनम् (१) ।

३. प्रगाथ-पावमान्य - महासूक्त - क्षुद्रसूक्त - नाम्नां भगवत्परत्वकथनम् (१) ।

४. सूक्त - ऋक् - अर्धर्च - पद - अक्षर शब्दानां भगवत्परत्वकथनम् (२) ।

५. सर्वनाम्नां भगवत्परत्वसाधनम् (२) ।

६. विश्वामित्रेण बृहतीसहस्रशंसनम् (३) ।

७. अहं -त्वं- अस्मि - प्राण - सर्वभूत - शब्दानां भगवत्परत्वकथनम् (३) ।
८. बृहतीसहस्रस्य अक्षरसङ्ख्यादिनिरूपणम् ।
तदुपासनायाः फलविशेषकथनम् (४) ।
९. योऽहं सोऽसौ योऽसौ सोऽहम् इत्यादि उपासनाविधिः (४) ।

iii. द्वितीयारण्यके तृतीयोऽध्यायः ८४-१५३

१. पञ्चविध - उक्थनिरूपणम् (१) ।
२. बृहतीसहस्राख्ये उक्थे नारायणादिपञ्चरूपेण भगवतोऽवस्थानम् (१) ।
३. पृथिवीवाय्वाकाशादिषु नारायणादिपञ्चरूपेण भगवतोऽवस्थानम् (१) ।
४. पृथिव्यादिपदानां नारायणादिरूपपञ्चकवाचकत्वकथनम् (१) ।
५. अन्न - अन्नादशब्दयोः अर्थकथनम् (२) ।
६. पुरुषपदवाच्यपरमात्मनः पञ्चविधत्वनिरूपणम् (३) ।
७. वायोः प्राणापानादिपञ्चविधत्वनिरूपणम् (३) ।
८. यज्ञस्य अग्निहोत्रादिपञ्चविधत्वनिरूपणम् (३) ।
९. बृहतीसहस्रे गायत्ररथन्तरादि सामसु गायत्री-उष्णिगादि च्छन्दस्सु भगवतोऽवस्थानकथनम् (४) ।
१०. श्येनाकारयज्ञकुण्डे शिरआदिषु भगवतः पञ्चरूपेण अवस्थानप्रकारः (४) ।
११. प्रस्तोतृ- उद्गात्रादिभिः भगवतः पञ्चरूपाणां प्रशंसनम् (५) ।
१२. बृहतीसहस्रे अनुष्टुप् - त्रिष्टुप् - जगत्यादीनां समावेशकथनम् (५) ।
१३. वाचः मित - अमित - स्वर - सत्य - अनृत इति पञ्चविधत्वम् (६) ।
१४. गाथा - कुंब्या - वृथावागादि विभागकथनम् (६) ।
१५. ॐकार-नकारयोः (स्वीकार-निराकरणयोः) सावधानेन उपयोगकथनम् (६) ।
१६. भगवतः इन्द्रनाम कथनम् (७) ।
१७. भगवतो न स्त्रीत्वं न पुंस्त्वं नापि अनुभयरूपत्वं चेति निरूपणं नैनं वाचा स्त्रियं ब्रुवन् इत्यादिना (८) ।
१८. बृहतीसहस्रस्य षट्त्रिंशत्सहस्राक्षरसङ्ख्याकत्वनिरूपणं तत्सम्पादनप्रकारकथनं च (८) ।

iv. द्वितीयारण्यके चतुर्थोऽध्यायः १५३-१७४

१. अग्रे भगवतः एकस्यैव अवस्थानकथनम् । तेन लोकानां लोकाभिमानिनां च सृष्टिकथनम् (१) । ब्रह्मणः सृष्टिः ब्रह्माण्डान्तः पुनः सर्वदेवानां सृष्टिः (१)।

२. देवानाम् अशनायापिपासाप्रदानम् । पुरुषाकारदेहप्रदानं च । तेषां देवानां ब्रह्मणश्शरीरे प्रवेशकथनम् (२) ।
३. भगवता देवानाम् अन्नसृष्टिः (३) ।
४. चक्षुरादीन्द्रियाभिमानिदेवैः अन्नस्वीकारे सामर्थ्याभावः मुख्यप्राणेन अन्नस्वीकरणम् । तस्यैव जीवनहेतुत्वप्रतिपादनम् (३) ।
५. सुषुम्नानाडीद्वारा भगवतः शरीरे प्रवेशकथनम् । तस्य इदन्द्र नामकथनं च (३)।

v. द्वितीयारण्यके पञ्चमोऽध्यायः १७९-१८४

१. देहोत्पत्तिप्रकारकथनम् । अन्नस्थेन परमात्मना पुरुषे प्रवेशः । रेतःस्थेन स्त्रियां प्रवेशः । पुत्रस्थस्य पुत्ररूपेण उत्पत्तिः । पितृगतः परमात्मा पितृगतेन जीवेन सह लोकान्तरं प्रैति इत्यादि निरूपणम् (१) ।

vi. द्वितीयारण्यके षष्ठोऽध्यायः १८४-१९२

१. भगवन्माहात्म्यकथनम् । तस्य कतर(आनन्दतम)त्वनिरूपणम् । तस्य प्रेरणयैव ब्रह्मादिसर्वजीवानां दर्शनश्रवणादिसर्वव्यापारः हृदयं मनः संज्ञानमित्यादि त्रयोविंशत्पदानां भगवद्वाचकत्वसमर्थनम् (१) ।

vii. द्वितीयारण्यके सप्तमोऽध्यायः १९२-१९४

१. (। शान्तिमन्त्रः।) वाङ्मनआदिसर्वाणि इन्द्रियाणि भगवत्येव प्रतिष्ठितानि भवन्त्विति प्रार्थना । मम विद्यागोचर एव सर्वदा भव विस्मृतो मा भव इत्यादि भगवत्प्रार्थना च (१) ।

viii. तृतीयारण्यके प्रथमोऽध्यायः १९४-२२६

१. संहितानिरूपणारम्भः (विष्णुनामाक्षर - तत्सन्धिदेवतायाः तद्व्याख्यान-रूपवेदाद्यक्षर - तत्सन्धिदेवतायाः उपनिषदः रहस्यविद्यायाः निरूपणोप-क्रमः) (१) ।
२. अधिदैवतसंहितानिरूपणम् (१) । अध्यात्मसंहितानिरूपणम् । तयोः फलं च (१) ।
३. पुरुषशरीरस्य अधरभाग- उत्तरभागगतभगवद्रूपाणां निरूपणम् (२) ।
४. संहिता - पद - क्रमस्थ भगवद्रूपाणां निरूपणम् (३) ।
५. तदध्येतॄणां महिमानिरूपणं च (३) ।

६. मुख्यप्राणस्य विष्णोश्च सर्वदेवाद्याधारत्वेन उपासनानिरूपणम् (४) ।
७. तदुपासनाफलकथनम् (५) ।
८. बृहद्रथन्तरसंहितायाः विष्णोः अर्धनारीनारायणरूप प्रतिपादकत्वनिरूपणम् (६) । तदुपासनाफलं च (६) ।
९. अवरपरादिपञ्चसंहितानां कथनम् (६) ।
१०. भगवान् - महालक्ष्मीः, भगवान् - वायुः, वायुः - अन्याः सर्वा देवताः, रुद्रः - अन्याः देवताः, ब्रह्मा - रुद्रः इति पञ्च अवरपरसंहितायाः कथनम् (६) ।
११. वाक्संहिता- प्रजापतिसंहितयोः निरूपणम् (६) ।

ix. तृतीयारण्यके द्वितीयोऽध्यायः २२६-२७६

१. ऊष्म - स्पर्श - स्वर - अन्तस्थ वर्णेषु भगवतोऽवस्थानस्य तत्तदक्षर वाच्यत्वस्य च निरूपणम् (१) ।
२. विष्णुनामगत षकार - णकार सन्धिषु षष्ट्युत्तरत्रिशत भगवद्रूपाणाम् अवस्थितिकथनम् (२) ।
३. भगवतः चत्वारिंशदधिकपञ्चरूपाणां देहस्य दक्षिणभागे तस्य तावतामेव रूपाणां वामभागे च संस्थितिकथनम् (२) ।
४. चतुर्विधपुरुषाणां (शारीरपुरुष - च्छन्दः पुरुष - वेदपुरुष - महापुरुषाणां) निरूपणम् (३) ।
५. वैदिकपूर्ववर्ण - उत्तरवर्ण - संहिताप्रतिपाद्यानां भगवद्रूपाणां निरूपणम् (३)।
६. भगवतः त्यागस्य महानर्थफलत्वनिरूपणम् (४) ।
७. मरणकाले हृदये चक्षुषि च स्थितस्य द्विरूपस्य विष्णोः निर्गमनसमये जायमानानां नानाविधदुर्निमित्तानां कथनम् (४) ।
८. मरणसूचकविविधदुःस्वप्नानां निरूपणम् (४) तेषां परिहारोपाय कथनं च ॥
९. वैदिक - लौकिक सकल वाग्विषयकविद्यायाः निरूपणम् (५) ।
१०. ब्रह्मादिदेहानां विष्णोः वीणात्वकथनम् (५) ।
११. वाचिस्थितस्य स्त्रीरूपस्य परमात्मनः प्रतिपादकमन्त्राणां निरूपणम् (६) ।
१२. विष्णुशब्दार्थनिर्वचनम् । णकारो बलं षकारः प्राणः आत्मा इत्यादिना परिसमाप्तिश्च (६) ।

II. श्रीराघवेन्द्रतीर्थविरचितश्रीमन्महैतरेयोपनिषन्मन्त्रार्थसङ्ग्रहः - २७७

# ऐतरेयोपनिषत्

श्रीमदानन्दतीर्थभगवत्पादप्रणीतभाष्येण तथा
श्रीविश्वेश्वरतीर्थप्रणीतभाष्यटीकया च समेता

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीहयग्रीवाय नमः ।।

## ऐतरेयोपनिषत्

।। हरिः ॐ ।। एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं तस्मान्न प्रमाद्येत्तन्नातीयान्न ह्यत्यायन्पूर्वे येऽत्यायंस्ते परा बभूवुस्तदुक्तमृषिणा

प्रजा ह तिस्रो अत्यायमीयुर्न्याऽन्या अर्कमभितो विविश्रे ।
बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति ।।

प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः न्यऽन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद्भुवनेष्वन्तरसावादित्यः पवमानो हरित आ विवेशेति वायुरेव पवमानो दिशो हरित आविष्टः ।। १ ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

## ऐतरेयोपनिषद्भाष्यम्

नारायणं निखिलपूर्णगुणैकदेहं
सर्वज्ञमच्युतमपेतसमस्तदोषम् ।
प्राणस्य सर्वचिदचित्परमेश्वरस्य
साक्षादधीश्वरमियां शरणं रमेशम् ।।

प्रादुर्बभूव भगवान्स्तपसेतराया
नारायणोऽब्जजसुतस्य विशालनाम्नः ।
तस्मिन्गतेऽध्वरमभूत्सुरविप्रसङ्घो
निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ॥
तेन स्तुतः स भगवान् गिरिशेन्द्रमुख्यान्
सर्वानबोधयदजेन सहैव तेऽथ ।
दासत्वमापुरत एव महत्सुराणां
दासत्वतः स महिदास इति प्रसिद्धः[१] ॥
शृण्वत्सु तेषु भगवानवदद्रमायै
दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।
सा बह्वृचैः प्रपठिता चतुराननास्या
यस्यां रहस्यमुदितं परमं हि विष्णोः ॥
महाभूति(ः)श्रुतिः सैषा महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः ॥–इति ऋक्संहितायाम् ।
एष एव सदा पन्था भगवान्पुरुषोत्तमः ।
नित्यं स्वप्राप्तिहेतुत्वात्कर्तृत्वात्कर्म मातृतः ॥
ब्रह्मैष गुणपूर्णत्वात्सत्यं साधुस्वरूपतः ।
क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत् ॥
पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः ।
मुक्ता श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका ॥
विहायस्ययनात्प्रोक्ता वयांसीति पिशाचकाः ।
वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा ॥
अन्नरूपैर्गुध्रवो हि वङ्गावगधनामकाः ।
राक्षसा असुरा ईरपादा इति समीरिताः ॥

---

१. अत एवोक्तं टीकाकृत्पादैः -
धर्मविज्ञानवैराग्यपरमैश्वर्यशालिनः ।
आनन्दतीर्थभगवत्पादात् वन्दे निरन्तरम् ॥ इति गीतातात्पर्यन्यायदीपिकायाम् ।

धर्मो ज्ञानं च वैराग्यमैश्वर्यं चतुरात्मकः ।
वायुर्देवोऽत्रासुराणामैश्वर्यं गुण एव हि ॥
ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् ।
पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ॥
देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः ।
आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ॥
अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ।
आ जनैरर्चितत्वात्स ह्यर्क इत्युच्यते हरिः ॥
अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः ।
कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ॥
आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ।
तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ॥
आदानात्सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ।
मुच्यन्ते ऋषयो नित्यं नान्यथा तुं कथञ्चन ॥
वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम् ।
संसारात्पावयित्वा यन्महानन्दे मिनोत्ययम् ॥
पवमानस्ततो विष्णुर्व्याप्तः सर्वासु दिक्षु च ।
आश्रितो भगवान्सर्वैः सर्वत्रापि विशेषतः ॥
आश्रयात्पृथगुक्तोऽयं नित्यानन्दो रमापतिः ॥ १ ॥

## श्री विश्वेश्वरतीर्थकृता ऐतरेयोपनिषद्भाष्यटीका

यत्त्यागात्त्रिविधा प्रजा निरयभाग्यस्याश्रयान्मुक्तिभाग्
यः क्षेत्रे प्रपदं प्रपद्य रमते यत्सृष्टमेतज्जगत् ।
योऽन्वाप्यामरवल्लभो जगति यः ख्यातः शतर्च्यादिना
नाम्ना पञ्चविधोऽपि यो निजभिदाराहित्यवान् विस्तृतः ॥ १ ॥

यो यावद्बृहतीसहस्रगणितावर्णादिवर्णात्मना
ध्यातो योग्यजनाय योग्यविशदानन्दं ददात्यञ्जसा ।
यो विष्णवक्षरसंहितां श्रुतिशताम्नातां विजानाति य-
स्तस्मै शं भजते चरातिशरणं यामो रमावल्लभम् ॥ २ ॥
ऐतरेयोपनिषदो व्याकुर्मो भाष्यमुत्तमम् ।
श्रीमदानन्दतीर्थार्यान् नत्वा तत्प्रीतिकामुकाः ॥ ३ ॥
[१]नाम्नायार्थविचारणे कुशलिनो नो शब्दवारांनिधौ
स्नाता न्यायविचारदूरमतयः शिक्षानिरुक्तातिगाः ।
अप्येवं सुरवर्यदैशिकमहाचार्यप्रसादान्महा-
भूत्यर्थग्रहणाय भाष्यविवृतौ यत्नं वयं कुर्महे ॥ ४ ॥

अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तदुपायमजानतां तत्पदवीदीपकपुरुषाभावात् परिखिन्नमनसां पुरुषाणामनुग्रहाय पुण्डरीकाक्षकटाक्षप्रेमामृतपात्रीमन्यैरन्यथा-व्याख्यातामैतरेयोपनिषदं यथावद् व्याख्यातुकामः श्रीमत्पूर्णप्रज्ञाचार्यः शिष्टजन शिक्षणाय प्रचयगमनायाविघ्नेन ग्रन्थपरिसमाप्तये च नारायणाख्यामिष्टदेवतां स्वाभीष्टफलप्रदानसमर्थामितरपुरुषेष्वसम्भवलक्षणविशिष्टां प्रणमति । नारा-यणामिति । अहं नारायणं शरणमियामित्यन्वयः ॥

इतरपरिहारेण नारायणशरणप्राप्तौ किं निमित्तमित्यत आह निखिलेति । वीर्यानन्दादयो गुणशब्देनोच्यन्ते । न सत्वादयः । त एव देहो यस्य स गुणैकदेहः । नारायणशरणप्राप्तौ निमित्तान्तरं चाह । सर्वज्ञमिति । सार्वज्ञ्या-दिगुणानां हानौ देवदत्तसाम्यं स्यादित्यत आह । अच्युतमिति । च्युतिराहित्ये किं निमित्तमित्याशङ्क्य जरादिदोषराहित्यमित्याह ॥ अपेतेति ॥ निमित्तान्तरं चाह । प्राणस्येति । प्राणाधीश्वरत्वमौपचारिकं किं नस्यादित्यत उक्तम् ।

---

१. न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा
न च न्याये प्रौढा न च विदितवेद्या अपि वयम् ।
परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं प्रपन्ना
मान्याः स्मः किमपि च वदन्तोऽपि महताम् ॥
- इति न्यायसुधायाम् टीकाकृत्पादवचनम् ॥

साक्षादिति । एवं कृतेष्टदेवतानुस्मरणो भगवानाचार्यवर्यः ऐतरेयोपनिषदं व्याकरिष्यान्नादावुपोद्घातमारचयति । प्रादुर्बभूवेति । नारायणो विशाल-नाम्नोऽब्जजसुतस्य ऋषेः प्रादुर्बभूवेति षष्ठीवचनं शुक्लशोणितसम्बन्धो न तस्य जन्म किन्तु तद्वारा रूपान्तरेण व्यक्तिमात्रमित्यर्थसूचकम् । अवतारप्रयोजन-माह। तस्मिन्निति । तस्मिन् भगवति अध्वरं यज्ञं गते सति सुरविप्रसङ्घो निश्चेतनः । अदृष्टपूर्वभगवद्रूपदर्शनसमुत्पन्नभक्तिभयाभ्यां कर्तव्यज्ञानहीनोऽ[1]-भूदित्यन्वयः । इमां ज्ञानसङ्कटापदं परिहर्तुं प्रसन्नो हरिरेव प्रभुरिति तत्प्रसादसम्पादनार्थं ब्रह्मा तमस्तौषीदित्याह । तदन्विति । ब्रह्मस्तुतिप्रसन्नस्य हरेः प्रसादप्रकारमाह । तेनेति । अबोधयत् पूर्वं सुप्तप्रायान् तान् प्रबोध-युक्तांश्चकार । दासत्वमापुः । वयं तव दासा इति स्वात्मसमर्पण-मकार्षुरित्यर्थः । महत्सुराणां महतां सुराणां दासत्वतः भगवद्दासभावनिमित्तात् दासभूतमहासुरनिकरनिषेव्यः स भगवान् महिदास इति प्रसिद्धोऽभूत् । महिनः दासा यस्येति विग्रहः । महपूजायामिति धातोः महित्वं नाम पूज्यत्वं तच्च महत्तायामेव घटत इति महत्सुराणामित्युक्तभाष्याविरोधः । तत्त्वोपदेशस्यैवाव-तारमुख्यप्रयोजनत्वात् देवतोद्बोधनानन्तरं तान् प्रति भगवान् तत्त्व-मुपदिदेशेत्याह । शृण्वत्स्विति । भगवदुपदेशश्रोतृत्वं साक्षाद्रमाया एव इतरेषां तद्वारेत्याभिप्रायेण श्रुण्वत्सु तेषु रमायै इत्याह । अतिमुदेत्यनेन वक्तृप्रीति-विषयत्वं श्रोतॄणामाह । अनेन अस्या उपनिषदो ऋषिर्महिदास इति सूचितं भवति । प्रचयप्रकारमाह । सेति । बह्वृचा ऋक्शाखिनः । यस्यामुपनिषदि विष्णोः रहस्यमुदितमित्यनेन भगवानेव देवतेत्युक्तं भवति । ऐतरेयेण प्रोक्तत्वादैतरेयीत्यस्या उपनिषदो नामोक्त्वा नामान्तरमपि निर्वचनपूर्वकं प्रमाणवचनेनाह । महाभूतिरिति । एष पन्था इत्यादि प्रघट्टकं प्रमाणेन व्याचष्टे । एष एवेत्यादिना ।

पन्थाः । कर्म । ब्रह्म । सत्यमित्येतत्पदचतुष्टयस्य भगवति प्रवृत्तिप्रकारं दर्शयति । नित्यमित्यादिना । स्वप्राप्तेः स्वस्यैव हेतुत्वात् स्वयमेव पन्थाः ।

---

१. अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ॥
- इति अर्जुनोक्तिवत् (गी.११/४५)

मातृतः मातृत्वात् ज्ञातृत्वात् । माङ्मान इति धातोः । कर्ता च माता चेति कर्म । साधुस्वरूपतः निर्दोषस्वरूपत्वात् सत्यम् । तस्मान्नप्रमाद्येदित्येतद्व्याचष्टे । क्वापीति । तन्नातीयादित्येतद्व्याचष्टे । त्यक्त्वेति । न ह्यात्यायन् पूर्वे इत्येतद्व्याचष्टे । पूर्वे इति । तानीमानि वयांसीत्यादौ वयांसि वङ्गावगधा ईरपादा इति पदत्रयं व्याचष्टे । विहायसीत्यादिना । वयगताविति धातोः वयनाद्वयांसि विहायसीतियोग्यतया सम्बन्धः । वागतिगन्धनयोरिति धातोर्गत्यर्थानां च ज्ञानार्थत्वात् वं ज्ञानं गमयन्ति वर्तयन्तीति वङ्गा नराः अन्नरूपैस्तै रमन्त इति वङ्गावा राक्षसाः । गृधु अभिकाङ्क्षायामिति धातोः विषयगृध्नुत्वात् गधाः । वङ्गावाश्च ते गधाश्चेति वङ्गावगधाः । असुराणामीरपादत्वं घटयति । धर्म इत्यादिना । धर्मो ज्ञानं च वैराग्यमैश्वर्यमिति चतुरात्मको वायुः । तत्र ईरस्य वायोरैश्वर्याख्यश्चतुर्थः पाद एवासुराणामिति ते ईरपादा इत्युच्यन्ते । या वैता इमाः प्रजास्तिस्रो अत्यायमायन्नित्येतत्ते त्रयो विष्णुमत्यजन्नित्यनेन व्याख्यातं भवति । ते ह पराबभूवुरित्येतद्व्याख्यानरूपस्य पराभूतास्ततस्ते त्वित्यस्य तात्पर्यमाह । तमसीति । न्यन्या अर्कमभितो विविश्र इत्यस्य व्याख्या ता इमाः प्रजा अर्कमभितो निविष्टाम् इति । तद्व्याचष्टे । देवाश्चेत्यादिना । अर्कमित्येतद्व्याचष्टे । विष्णुमिति । त्रिस्थानस्थितमित्येतद्विवृणोति । अग्निस्थमित्यादिना । आजनैरित्यनेनार्कशब्दं विवृणोति । अदउ एव बृहद्भुवनेष्वन्तरित्येतद्व्याचष्टे । बृहदित्यादिना । असावादित्य इत्येतद्व्याचष्टे । आदानादिति । ता इमाः प्रजा इत्यत्र प्रजापदेन त्रिविधा अधिकारिणो विवक्षिताः अधिकारिभेदादेव स्थानत्रैविध्यमपि सूचितम् । तत्राग्निमिति । बृहदित्यनेन च स्थानद्वयमुपनिषदैवोक्तम् अधिकारिणस्तु भाष्यकृता दर्शिताः । वायुरेव पवमानो दिशो हरित इत्यनेन सूचितं स्थानमधिकारिणश्चाह । वायुस्थमिति । पवमानशब्दं निर्वक्ति । संसारादिति । मिनोति क्षिपति डुमित्रक्षेप इति धातोः । स्थानभेदोक्तेर्निमित्तमाह । आश्रित इति । असौ भगवान् विशेषतः त्रिविधप्रजाभिर्विशेषत आश्रयात् आश्रितत्वात् पृथगुक्तः । अग्निस्थमाश्रिता इत्यादिना ।

भाष्ये खण्डार्थस्य विक्षिप्यवर्णितत्वात् क्रमेणार्थ उच्यते । स भगवान् पन्थाः स्वप्राप्तिहेतुः । कर्तृत्वान्मातृत्वाच्च कर्म । गुणपूर्णत्वाद् ब्रह्म । साधुस्वरूपत्वात्सत्यम् । तस्मान्न प्रमाद्येत् तन्न विस्मरेत् । तन्नातीयात् तमतिक्रम्यान्यं न व्रजेत् । पूर्वे एनं नात्यायन् । न तत्यजुः । ये अत्यायन् तत्यजुः ते पराबभूवुः । तमःप्राप्तिलक्षणपराभवं प्राप्ताः । स्वोक्तार्थे प्रमाणमाहोपनिषद्द्रष्टा तदुक्तमिति । ऋषिणा मन्त्रद्रष्ट्रा । तिस्रः प्रजाः पिशाचराक्षसासुरलक्षणाः । अत्यायमीयुर्ह । तदतिक्रमं प्राप्ताः । तिस्र इत्यनुवर्तते । अन्या तिस्रः प्रजाः अर्कं विष्णुम् । नि नितराम् अभितः सर्वतः। विविश्रे विविशिरे आश्रिताः । भुवनेष्वन्तः बृहत्तेजसा जगद्बृंहणात् बृहन्नामकमादित्यस्थितं विष्णुं ऋष्याख्या प्रजा तस्थौ । उपासां चक्रे । पवमानः पवमानस्थो विष्णुः हरितः दिशः । आविवेश । उपनिषदुदाहृतामृचं स्वयमेवानूद्य व्याचष्टे । या वैता इत्यादिना । वयांसि पिशाचाः वङ्गावगधाः राक्षसाः । ईरपादा असुराः । च शब्दः समुच्चये । तिस्रः प्रजाः । ऋषयो मनुष्यसत्तमा देवाश्चार्कमभितो निविष्टाः उपतस्थुः । इममेवाग्निमग्निस्थम् । भुवनेष्वन्तः बृहत् बृहन्नामकसूर्यगतम् अदउ एव बृहद् ब्रह्मैव उपासते ऋषय इति शेषः । बृहद्व्रतोऽसावेव सर्ववस्त्वादानादादित्यनामा । वायुरेव वायुस्थ एव । पवमाननामा । तमाश्रिता ता देवाः इति शेषः ॥ १ ॥

ऐतरेयोपनिषत्

उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुतेऽन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावयन्ति तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुतेऽसावेव द्यौरुक्थ-ममुतः प्रदानद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्नमाशीतयोऽन्नेन हीदं सर्वमश्नुत इत्यधिदैवतमथाध्यात्मं पुरुष एवोक्थमयमेव महान्प्रजापतिरहमुक्थमस्मीति विद्यात्तस्य मुखमेवोक्थं यथा पृथिवी तथा तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते

नासिके एवोक्थं यथान्तरिक्षं तथा तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते तदेतद्‌ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव ललाट- मेवोक्थं यथा द्यौस्तथा तस्य चक्षुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्व- मश्नुते समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेवान्नेन हीमानि सर्वाणि भूतानि समनन्ती३ अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात्स- मानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव तदिदमन्नमन्नादमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च यद्ध किञ्चेदं प्रेता३इ तदसौ सर्वमत्ति यदु किञ्चातः प्रैर्ती३ तदियं सर्वमत्ति सेयमित्याद्याऽत्र्यत्ता ह वा आद्यो भवति न तस्येशे यं नाद्याद्यद्वैनं नाद्युः ॥ २ ॥

भा — उत्थापनादुक्थनाम्ना स एव पृथिवीस्थितः ।
प्रथितः पृथिवीनामा सोऽन्तरिक्षाभिधोऽत्रगः ॥
अन्तरीक्ष्यो यतो द्युस्थो द्युनामाऽतिप्रकाशनात् ।
अध्यात्मे च निविष्टोऽसौ पुरुषाख्यो जनार्दनः ॥
पुर्षु स्थितत्वात्स महान्प्रजानां पतिरेव च ।
अहमुक्थमिति ह्येतां विद्यामनुभवत्यसौ ॥
पृथक्पृथक्च तस्याङ्गान्युक्थानि जगदीशितुः ।
अग्निवातदिनेशानामुत्थानानि पृथक्पृथक् ॥
वदनं नासिका नेत्रमित्येतानि परात्मनः ।
तृचाऽशीतिविभिन्नस्य शस्त्रस्यान्नत्वहेतुतः ॥
विष्णोस्तृचाशीतिवत्स्यात्प्रसिद्धान्नमिति स्फुटम् ।
अन्नाभिमानिदेवश्च तृचाशीत्याश्च देवता ॥
सोम[1] एव ततश्चान्नमशीतय इतीरितम् ।
अदनाघ्राणदृष्ट्याख्यभोगत्रयविभागतः ॥

---

१. अन्नाभिमानी चन्द्रस्तु विचिन्त्यः केशवः परः ॥ - इति पञ्चरात्रे ॥

मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् ।
अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः ॥
श्येन एव तदाकारा चितिरर्कपदोदिता ।
सुपर्णप्रतिमा सा यत्तदारूढो जनार्दनः ॥
तस्मात्तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः ।
योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि ॥
तथा वाक्प्राणचक्षुष्षु तस्मात्तेऽर्काः प्रकीर्तिताः ।
तेषु स्थिते सुपर्णे च रूपभेदैः पृथक्पृथक् ॥
स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः ।
व्यासत्वाज्जीवदेहेषु मुखे विष्णोर्मुखं स्मृतम् ॥
नासयोर्नासिका विष्णोरक्ष्णोरेव तदक्षिणी ।
जीववाक्प्राणचक्षुष्षु तद्भागाद्यास्ततः स्थिताः ॥
विष्णोर्वाग्भार्गवो रामो प्राणोऽस्य नरकेसरी ।
चक्षुस्तु कपिलो विष्णुरग्न्यादीनां च कारणम् ॥
जीववागादिसंस्थं च सुपर्णमधिसंस्थिताः ।
अविशेषोऽपि भगवान् पूर्णैश्वर्यस्वरूपतः ॥
अङ्गाङ्गित्वेनैक एव स्वानन्दानुभवे स्थितः ।
स एव व्यूह्य चात्मानं पृथग्रूप इव स्थितः ॥
सुपर्णनामा भगवान्सुपर्णे च व्यवस्थितः ।
अग्न्यादिषु च तन्नामा वासुदेवः स संस्थितः ॥
अन्ननामा स एवान्ने चेष्टयन्सर्वमास्थितः ॥
अन्ने स्थितः स एवेशो ह्यन्नदातृगतिप्रदः ॥
तस्यान्तरिक्षगस्यैव नियमादनु पक्षिणः ।
पतन्ति धावयन्त्यश्वान् नरादींश्च नरादयः ॥
परस्य विष्णोर्धामत्वात्सूर्यो ब्रध्न इतीरितः ।
निहितश्चैव तल्लोको नासिकायां नतस्थले ॥

पृथिव्यां संस्थितो विष्णुः स्त्रीरूपेण द्युलोकतः ।
पतितं सर्वमेवात्ति तथा दिवि च संस्थितः ॥
इतो गतं सर्वमत्ति[१] द्युनामा भगवान् परः ।
भोग्यत्वादाद्य इत्युक्त एवमाद्यात्तृरूपवान् ॥
एक एव परो विष्णुरत्ताऽन्यैरुपजीव्यतः ।
आद्यो भवति चान्येषां नोपजीव्यो भवेद्यथा ॥
हरिः स सर्वजीवानां न भुज्यन्ते यथाऽमुना ।
सर्वे लोकास्तथा कर्तुं नैवेष्टे कश्चन क्वचित् ॥ २ ॥

टी— उक्थमुक्थमित्येतत्खण्डं व्याचष्टे । उत्थापनादित्यादिना । उक्थशब्दार्थमाह । उत्थापनादिति सृष्टिकर्तृत्वात् । इयमेव पृथिवीति व्याचष्टे । स एवेति । पृथिवीशब्दं भगवति निर्वक्ति । प्रथित इति । अन्तरिक्षमेवोक्थमित्यादावन्तरिक्षपदं व्याचष्टे । सोंऽतरिति । अत्रगः अन्तरिक्षगतः । अन्तरिक्षशब्दं निर्वक्ति । अन्तरिति । असावेव द्यौरुक्थम् इत्यत्र द्युशब्दं निर्वचनपूर्वकं भगवति योजयति । द्युस्थ इत्यादिना । अथाध्यात्ममित्येतद्व्याचष्टे । अध्यात्मे चेति । अयमेव महान् प्रजापतिरित्येतद्व्याचष्टे । स महानित्यादिना । अहमुक्थमस्मीत्येतद्व्याचष्टे । अहमुक्थमिति । विद्यामित्यनुभवतीति विद्यात् । तस्य मुखमेवोक्थं नासिके एवोक्थं ललाटमेवोक्थमिति पुरुषस्य मुखाद्यङ्गानामप्युक्थत्वमुच्यते । तद्व्याचष्टे । पृथगिति । अत्र ललाटशब्देन चक्षुर्गृह्यते । तेषामुक्थत्वं कथमित्यत आह । अग्नीत्यादिना । उत्थानानि उत्थापकानि । पृथक् पृथगुत्थापकानीति । मुखमग्नेरेवोत्थापकं नासिके वायोरेव । ललाटशब्दोपलक्षितचक्षुः सूर्यस्यैवेत्यभिप्रायः । अन्नमशीतय इत्येतद्व्याचष्टे । तृचाशीत्यादिना । तिसृणां ऋचां समाहारस्तृचम् । तृचस्याशीतिः तृचाशितिः तृचाशीतिभिन्नस्य तृचाशीतिरूपेण तया स्थितस्य शस्त्रस्य शस्त्रं शंसनस्यान्नत्वहेतुतः तर्पकत्वात् । प्रसिद्धान्नतृचाशीतिवद्विष्णोरन्नमिति

१. अत्ता चराचरग्रहणात् (१/२/११) । इति ब्रह्मसूत्रम् ।

स्यात् । अर्थान्तरमाह । अन्नाभिमानीति । तृचाशीतीनां प्रसिद्धान्नस्य स सोमाख्यैकदेवताकत्वाच्चान्नमशीतय इति सामानाधिकरण्यमिति भावः । तस्यान्नमित्यत्र षष्ठ्यर्थसम्बन्धं विवृणोति । अदनेत्यादिना । भोग्यं श्रुतमित्यन्वयः । तत्र मुखस्यादनाख्यभोग्यं विषयः । घ्राणस्याघ्रेयतया भोग्यं चक्षुषो दर्शनेनेति विभागः । तस्याग्निरर्क इत्युच्यते । गतिमत्वेन तस्यैवार्कत्वं कुत इत्यत उक्तम् । शीघ्रगतित्वत इति । तदाकाराश्येनाकाराचितिरिष्टकासंनिवेशविशेषो यज्ञे उदिता लक्षणया प्रतिपादिता । सा च सुपर्णप्रतिमा यस्मात्तस्मात्सुपर्णोऽप्यर्कपदोदितः । तदारूढश्चित्यभिमानि सुपर्णारूढः अधिष्ठितो यस्मात् सा चितिस्तस्य विष्णोरर्क इत्युच्यते चित्यारूढगरुडसम्बन्धादधिदैवम् । अग्निवातरवीणाम् अध्यात्मं च वाक्प्राणचक्षुषां च । तस्यार्कत्वं साधयति । योसाविति । चितिगतो वीन्द्रः । अग्निवातरविषु तथा वाक्प्राणचक्षुष्ववस्थितो यस्मात् तस्मात् ते तस्यार्काः प्रकीर्तिताः । तदेव विवृणोति । तेष्विति । अग्न्यादिषु । चशब्दश्चितिस्थितसुपर्णसमुच्चयार्थः । पृथक् पृथक् तस्याङ्गान्युक्थानीत्युक्तम् । कानि च तान्यङ्गानि कुत्र चावस्थितानीत्यपेक्षायामाह । व्याप्तत्वादिति । विष्णोर्जीवदेहेषु व्याप्तत्वात् जीवमुखादौ विष्णोर्मुखादि स्मृतम् । एवं जीवेन्द्रियेषु भगवदिन्द्रियाणां जीवेन्द्रियाभिमानिषु भगवदिन्द्रियाभिमानिनां स्थितिमाह । जीववागिति । ततः जीवदेहव्याप्तत्वादेव । भगवदिन्द्रियदेवता आह । विष्णोरिति । अग्न्यादीनां कारणम् । एवं त्रिरूपो विष्णुरिति शेषः । जीववागादिसंस्थं च सुपर्णसन्धिसंस्थिताः भार्गवादय इति शेषः । किमेते भार्गवादयो भगवतो भिन्ना उताभिन्ना यदि भिन्नास्तर्हि भगवतोऽन्यनियम्यत्वं स्यात् । यद्यभिन्नास्तर्हि कथमङ्गाङ्गिभाव इत्यत आह । अविशेषोऽपीति । अविशेषोऽपि अभिन्नोऽपि स एवात्मानं पृथग्रूप इव पृथक् व्यूह्य स्थितः सुपर्णादिशब्दवाच्यत्वं च विष्णोरेव मुख्यमित्याह । सुपर्णनामेत्यादिना । अन्नेन ह्रीमानि सर्वाणीत्यादि व्याचष्टे । अन्ननामेत्यादिना । अन्नेनेमं लोकं जयत्यन्नेनामुमित्येतत् व्याचष्टे । अन्ने स्थित इति । अन्तरिक्षं वा अनुपतन्तीत्येतद्व्याचष्टे । तस्येति । अन्तरिक्षगतस्यान्तरिक्षनाम्नस्तस्य नियमान्नियमनानुसारेण पक्षिणोऽनुपतन्ति । तदेतद्ब्रध्नस्य विषयमित्येतद्व्याचष्टे । परस्येति । तल्लोकः ब्रध्नलोकः । यद्

किञ्चातः प्रैतीं तदीयं सर्वमत्तीत्येतद्व्याचष्टे । पृथिव्यामिति । स्त्रीस्वरूपेणेत्यनेन तदियमित्यत्रेयमित्युक्तार्थं भवति । द्युलोकतः पतितमित्यनेनातः प्रैतीम् इत्येतद्विवृतम् । यदु किञ्चेदं प्रेता इत्येतद्व्याचष्टे । तथा दिवि चेत्यादिना । इतः पृथिव्याः । सेयमित्याद्यात्रृत्वेत्यत्र आद्यशब्दार्थमाह । भोग्यत्वादिति । आद्यात्तृरूपवानित्यनेनाद्यात्रीति समुदायार्थ उक्तो भवति । भोग्यत्वादाद्य इत्युक्तम् । किमिदं भोग्यत्वमित्यत आह । अन्यैरिति । उपजीव्यत्वमेव भोग्यत्वमिति भावः । न तस्येशे यं नाद्यादित्यादिव्याचष्टे । अन्येषा-मित्यादिना । स हरिरन्येषां सर्वजीवानाम् उपजीव्यो यथा न भवेत् । अमुना च सर्वलोका यथा न भुज्यन्ते न भुज्येरन् तथा कर्तुं कश्चनापि नैवेष्टे इत्यन्वयः ॥

विद्यान्तरत्वान्नपूर्वखण्डेनास्य सङ्गतिः । उत्तरत्राप्येतदनुसन्धेयम् । प्रजा भगवद्रूपमुक्थमिति वदन्ति वै । तदुक्थनामकं रूपमिदमेव । इयं पृथिव्येव स्त्रीरूपेण पृथिव्यां स्थितं पृथिवीनामकं भगवद्रूपमेव । तत्रोक्थशब्द-प्रवृत्तिनिमित्तमाह । इतो हीति इतः पृथिव्यां हीदं सर्वमङ्कुराद्युत्तिष्ठति । उत्पद्यते । अग्निरग्निगतः अर्कोऽर्कनामा गरुडः । तस्य पृथिव्यां स्थितस्यो-क्थनामकहरेरधीनः । एवमुत्तरत्रापि तस्यार्क इत्यस्यार्थो द्रष्टव्यः । तस्याशीतयोऽन्नं तृचाशीतयोऽन्नं तृचाशीतयो यथान्नं तर्पकं तथा प्रसिद्धान्नमपि तर्पकम् । अतृत्वादन्ननाम्ना मुखगतेन भार्गवेण घ्राणगतेन नरसिंहेन चक्षुर्गतेन कपिलेनेदं सर्वं प्रसिद्धमन्नमश्नुते । अदनाघ्राणदृष्टिभेदेन स्वीकरोति हि यस्मात् तस्मादशीतय इव प्रसिद्धान्नमपि तस्यान्नमिति । अन्तरीक्ष्यत्वादन्तरिक्ष अन्तरिक्षमनु अन्तररिक्षनामकमन्तरिक्षगतं रूपमुक्थम् । प्रेरणानुसारेणाश्वनरा-दीननुधावयन्ति द्रावयन्ति । वायुरर्कः वायुगतो गरुडस्तस्याधीनः अन्नमशीतय इत्यभ्यासस्तात्पर्यार्थः । असौ द्यौः द्युलोकस्थोऽतिप्रकाशनात् द्युनामा उक्थम् । तस्योक्थत्वमुपपादयति । अमुत इति अमुतः प्रदानात् तत्कर्तृकवृष्टिप्रदानादिदं सर्वं सस्याद्युत्पद्यते यस्मात् तस्मादुक्थमित्यन्वयः । आदित्यः आदित्यगतोऽर्कः गरुडः तस्य इत्यधिदैवस्थितानां भगवद्रूपाणामुक्थत्वमेवमनुवर्णितम् । अथाध्यात्ममिति । अध्यात्मगतभगवद्रूपाणामुच्यत इत्यर्थः । पुर्षु स्थित-त्वात्पुरुषनामा भगवानुक्थम् अयमेव महान् अयं पुरुषनामैव महान्प्रजानां

पतिः । अहमुक्थमस्मीतिविद्यात् विद्यामनुभवन् । तस्य पुरुषनाम्नो हरेर्जीव-मुखगतं मुखाख्याङ्गम् उक्थमेव । यथा पृथिवी पृथीवीगतं रूपं यथोक्थं तथा वागर्कः जीववाग्गत गरुडः तस्य नासिके जीवनासिकागतभगवन्नासिका-ख्यमङ्गमुक्थमेव । प्राणोऽर्कः । जीवप्राणगो गरुडः । तस्या विद्यान्तरमाह । तदेतत् ब्रध्नस्य ब्रध्ननाम्नः सूर्यस्य विष्टपं स्थानं नासिकायै नासिकायां विनतमिव किञ्चिद्विनतं तन्नासिकामूलमिति यावत् । तद्विष्टपं स्थानम् । ललाटं जीवललाटगतं भगवल्ललाटाख्यमङ्गम् । चक्षुश्चक्षुर्गतो गरुडः तस्य । अध्यात्म-मधिदैवतं चाशीतयोऽन्नसमानमशीतयो यथाऽन्नं तथा प्रसिद्धान्नमपीति भावः । अन्नेनान्ननाम्ना इमानि सर्वाणि भूतानि समनन्ति चेष्टन्ते । अन्नेनान्नगते-नान्ननाम्ना इमम् अमुं च लोकं जयत्यन्नदातेति शेषः । तदिदं पृथिवीगतं भगवद्रूपमन्नम् आद्यम् अन्नादम् अन्नोत्पादकत्वाच्चान्नम् तदुपपादनम् । इतो हीति इदं पृथिव्यां विद्यमानं यच्च किञ्च प्रेताई । प्रेत्यवगच्छत्येव । तत्सर्वमसौ द्युलोकगतात्तिः । अतः द्युलोकात् । यदु किञ्च भुवं प्रैत्यागच्छति तत्सर्वमिमं पृथिवीगतस्त्रीरूपो भगवानत्ति । सेयं पृथिवीगतस्त्रिमूर्तिरिरिति अनेन प्रकारेण आद्या । अत्त्री । अत्ता सर्वस्यात्ता आद्यः । सर्वोपजीव्यो भवति ह वै । यस्मात्तस्मादाद्यात्तृरूपः । अयं भगवान्यथा सर्वलोकान् नाद्यात् यथैनं सर्वे नाद्युः । नोपजीवेयुः । तस्य तथा करणस्य कश्चनेशे नेष्ट इत्यर्थः ॥ २ ॥

ऐतरेयोपनिषत्

अताथो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग्वाचो रेतः कर्म तदिदं कर्म कृतमयं पुरुषो ब्राह्मणो लोकः स इरामयो यद्धीरा-मयस्तस्माद्धिरणमयो हिरण्मयो ह वा अमुष्मिंल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ॥ ३ ॥

भा— स एव(ष) भगवान्विष्णुः प्रजापातिरितीरितः ।
तस्माज्जाताः सर्वदेवा ब्रह्माद्यास्तेभ्य एव च ॥
वृष्टिः सञ्जायते तस्याः सर्वा ओषधयोऽभवन् ।
ओषधीभ्योऽन्नमन्नाच्च रेतो रेतस एव च ॥
सर्वाः प्रजाः प्रजायन्ते सङ्कल्पो हृदयाभिधः ।
प्रजाभ्यो जायते तस्माद्विकल्पाख्यं मनस्तथा ॥
विकल्पाद्वाक्प्रचारश्च वाचा नामादिवेदनात् ।
कर्म सञ्जायते तस्मात्कर्मणश्च जगत्पुनः ॥
कर्माभिमान्ययं जीवः परस्य ब्रह्मणो हरेः ।
आवासस्थानमुद्दिष्टो विशेषात्स इरामयः ॥
इच्छानुरूपं तु सुखमिरेत्येव प्रकीर्तितम् ।
इच्छानन्दप्रभूतत्वात्स एव च हिरण्मयः ॥
हिरुक्सुखं हिरण्यं स्याद्बाह्यानन्दात्पृथग्यतः ।
आधिक्यार्थे मयड्यस्मादधिकानन्दरूपक(त)ः ॥
उत्सृज्य कर्मजं रूपं निजानन्दैकरूपकः ।
एवं नारायणं जानन्सर्वलोकैककारणम् ॥
तल्लोके दृश्यते भूतैर्मुक्तैरानन्दरूपकः ॥ ३ ॥

टी— अथातो रेतस इत्यत्र प्रजापतिशब्दं व्याचष्टे । स एष इति । अत्र सर्वत्रापि तद्रेत इत्यनेन तज्जन्यत्वमुच्यते । हृदयमनःशब्दयोरर्थभेदमाह । सङ्कल्प इति । वाक्प्रचारो वाक् प्रवृत्तिः । तदेवोपपादयति । वाचेति । तस्माद्वाक्प्रचारात् । तदिदं कर्म कृतमित्यस्य हि विवरणम् । कर्मणश्च जगत्पुनरिति । अयं पुरुष इत्येतत् स्पष्टयति । कर्माभिमानीत्यादिना । लोकशब्दार्थः । आवासस्थानमिति । स इरामय इत्येतदनूद्य व्याचष्टे । स इरामय इति । इच्छानन्दप्रभूतत्वादिरामय इत्यन्वयः । हिरण्मयशब्दार्थमाह । स एवेति । इरामय एवेति हिरुक् विलक्षणं सुखम् । अधिकानन्दरूपतः हिरण्मय इत्यर्थः । हिरण्मयो हवा अमुष्मिन् लोके सम्भवतीत्येतद्व्याचष्टे ।

उत्सृज्येति । रूपं देहं भौतिकमिति शेषः । एवं नारायणं जानन् कर्मजं रूपमुत्सृज्य निजानन्दैकरूपको भवतीत्यन्वयः । सर्वेभ्यो भूतेभ्यो ददृश इत्यस्य व्याख्या । मुक्तैरिति । मुक्त इति शेषः ।

अथातो रेतसः सृष्टिरितिरेतःसम्बन्धिनी सृष्टिरुच्यते । प्रजापतेर्हरेः । देवाः ब्रह्माद्याः । सङ्कल्पात्मकमन्तःकरणं हृदयम् । विकल्पात्मकं मनः । वाक् वाक्प्रचारः । कर्मादृष्टं क्रिया च । तदिदं जगत् कर्मकृतं कर्मनिर्मितम् । अयं पुरुषो जीवो ब्रह्मणो लोकः निवासस्थानं स ब्रह्मशब्दोक्तो भगवानिरामयः इच्छानुरूपः सुखपूर्णः यद्धि यस्मादिरामयः तस्मात् इरामयः बाह्यानन्द-विलक्षणसुखपूर्णः । यो भगवन्तमेवं वेद । सोऽमुष्मिन् लोके परलोके विष्णुलोक इत्यर्थः । हिरण्मयः सम्भवति निजानन्दैकरूपको भवति । हिरण्मयः सन् सर्वेभ्यो भूतेभ्यो मुक्तसर्वभूतैर्ददृशे दृश्यते ॥ ३ ॥

ऐतरेयोपनिषत्

तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनां तदूर्ध्वमुदसर्पत्ता ऊरू अभवतामुरु गृणीहीत्यब्रवीत्तदुदरमभव-दुर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवदुदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्माहैव ता३ई ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत यच्छि-रोऽभवत्तच्छिरसः शिरस्त्वं ता एताः शीर्षंच्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः श्रयन्तोऽस्मिंच्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद । ता अहिंसताहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन्हन्तास्माच्छरीरा-दुत्क्रामाम तद्यस्मिन्न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति वागुदक्रामदवदन्नश्नन्पिबन्नास्तैव चक्षुरुदक्रामदपश्यन्नश्नन् पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन्पिबन्नास्तैव मन उदक्रामन्मीलित इवाश्नन्पि-बन्नास्तैव प्राण उदक्रामत्तात्प्राण उत्क्रान्तेऽपद्यत तदशीर्यताशारीर्ती३ तच्छरीरमभवत्तच्छरीरस्य शरीरत्वं शीर्यते ह वा अस्य द्विषन्पाप्मा

भ्रातृव्यः पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद ता अहिंसन्तेवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन्हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति वाक्प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्तदेतदुक्थं प्राण एव प्राण उक्थमित्येव विद्यात्तं देवा अब्रुवन्स्त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति तदप्येतदृषिणोक्तं[1] त्वमस्माकं तव स्मसीति ॥ ४ ॥

भा— तमिमं प्रथमज्ञानिपुरुषं चतुराननम् ।
वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ॥
यस्मात्प्रपेदे भगवान्प्रपदा चतुराननम् ।
तस्मात्प्रपदनादेव प्रपदं नाम कीर्तितम् ॥
चतुर्मुखाकारवतां नृणां पादतलोपरि ।
प्रपदाख्या वर्ततेऽतो न तु पश्वादिनां क्वचित् ॥
अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च ।
स्थित ऊरू च तावास्तामूरूर्ध्वगमनाद्धरेः ॥
किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः ।
वायुमाहोरुगरणं कुर्वत्र स्थित इत्यपि ॥
उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा ।
तत्स्थानमुदरं नाम पुनराह जनार्दनः ॥
उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् ।
तथाऽकरोत्स वायुश्च तदुरोऽभूदुरुत्वतः ॥

---

१. त्वयेदिन्द्र युजा वयं प्रतिब्रुवीमहि स्पृधः ।
त्वमस्माकं तव स्मसि ॥ २ ॥ (ऋग्वेद. ८-९२-३२)

उरोमध्ये च हृदयं तत्रावासो हरेः सदा ।
सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराख्यकाः ॥
उदरे ते परं ब्रह्म वासुदेवमुपासते ।
हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ॥
उदरस्थं च हृद्रं च ते उभे ब्रह्म तत्परम् ।
एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ॥
तत उर्ध्वं गतो विष्णुर्वायुना सह दैवतैः ।
स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः ॥
तत्र प्राणात्मना वायुर्मनोरूपेण शङ्करः ।
शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक्पृथक् ॥
अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रकम्(त्रिकः) ।
वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः ॥
श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।
एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः ॥
उपासते महाविष्णुं परमात्मानमच्युतम् ।
वाचा हिंसामकुर्वंस्ते विनिन्दन्तः परस्परम् ॥
ते विष्णोराज्ञयाऽवोचन्नुत्क्रमाम पृथक्पृथक् ।
देहादब्जभवस्यास्माद्यस्मिन्नुत्क्रान्त एव हि ॥
शरीरं पद्यते श्रेयान्स न इत्यवधार्यताम् ।
ततः क्रमेण चाग्न्याद्या निष्क्रान्तास्तेषु सर्वशः ॥
निष्क्रान्तेषु न वै पातः शरीरस्याभवत्क्वचित् ।
वायावुत्क्रान्त एवैतच्छरीरमपतत्क्षितौ ॥
उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः ।[१]
तेषां बलपरीक्षार्थं वाय्वादीनां च सर्वशः ॥

---

१. लोकात्मकं पद्ममुष्य मध्ये पुनर्विरिञ्चोऽजनि सद्गुणात्मा ।
तस्मात् पुनः सर्वसुराः प्रसूतास्ते जानमाना अपि निर्णयाय ॥

भ्रातृव्यः पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद ता अहिंसन्तेवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन्हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति वाक्प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्तदेतदुक्थं प्राण एव प्राण उक्थमित्येव विद्यात्तं देवा अब्रुवन्स्त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति तदप्येतदृषिणोक्तं[1] त्वमस्माकं तव स्मसीति ॥ ४ ॥

भा— तमिमं प्रथमज्ञानिपुरुषं चतुराननम् ।
वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ॥
यस्मात्प्रपेदे भगवान्प्रपदा चतुराननम् ।
तस्मात्प्रपदनादेव प्रपदं नाम कीर्तितम् ॥
चतुर्मुखाकारवतां नृणां पादतलोपरि ।
प्रपदाख्या वर्ततेऽन्यो न तु पश्वादिनां क्वचित् ॥
अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च ।
स्थित ऊरू च तावास्तामूरूर्ध्वगमनाद्धरेः ॥
किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः ।
वायुमाहोरुगरणं कुर्वत्र स्थित इत्यपि ॥
उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा ।
तत्स्थानमुदरं नाम पुनराह जनार्दनः ॥
उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् ।
तथाऽकरोत्स वायुश्च तदुरोऽभूदुरुत्वतः ॥

---

१. त्वयेदिन्द्र युजा वयं प्रतिब्रुवीमहि स्पृधः ।
त्वमस्माकं तव स्मसि ॥ २ ॥ (ऋग्वेद. ८-९२-३२)

उरोमध्ये च हृदयं तत्रावासो हरेः सदा ।
सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः ॥
उदरे ते परं ब्रह्म वासुदेवमुपासते ।
हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ॥
उदरस्थं च हृद्रं च ते उभे ब्रह्म तत्परम् ।
एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ॥
तत उर्ध्वं गतो विष्णुर्वायुना सह दैवतैः ।
स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः ॥
तत्र प्राणात्मना वायुर्मनोरूपेण शङ्करः ।
शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक्पृथक् ॥
अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रकम्(त्रिकः) ।
वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः ॥
श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।
एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः ॥
उपासते महाविष्णुं परमात्मानमच्युतम् ।
वाचा हिंसामकुर्वंस्ते विनिन्दन्तः परस्परम् ॥
ते विष्णोराज्ञयाऽवोचन्नुत्क्रमाम पृथक्पृथक् ।
देहादब्जभवस्यास्माद्यस्मिन्नुत्क्रान्त एव हि ॥
शरीरं पद्यते श्रेयान्स न इत्यवधार्यताम् ।
ततः क्रमेण चाग्न्याद्या निष्क्रान्तास्तेषु सर्वशः ॥
निष्क्रान्तेषु न वै पातः शरीरस्याभवत्क्वचित् ।
वायावुत्क्रान्त एवैतच्छरीरमपतत्क्षितौ ॥
उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः ।[१]
तेषां बलपरीक्षार्थं वाय्वादीनां च सर्वशः ॥

---

१. लोकात्मकं पद्ममुष्य मध्ये पुनर्विरिञ्चोऽजनि सद्गुणात्मा ।
तस्मात् पुनः सर्वसुराः प्रसूतास्ते जानमाना अपि निर्णयाय ॥

पुनस्ते प्राविशन्सर्वे वह्निसूर्यौ शशी शिवः ।
नोत्थानमभवत्तेषु प्रविष्टेष्वपि सर्वशः ॥
वायौ प्रविष्टे तूत्थानं कायस्यासीत्तदैव च ।
उच्चैः स्थितत्वादुक्थोऽभूद्वायुरेव ततः प्रभुः ॥
उच्चत्वं च गुणाधिक्यं त्वमुच्चोऽसीति तेऽब्रुवन् ।
भृत्या वयं तवैव स्म त्वमस्माकं पतिः सदा ॥
स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् ।
इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् ॥
वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद्दिवौकसाम् ॥ ४ ॥

टी— तं प्रपदाभ्यां प्रापद्यत इत्येत्खण्डं व्याचष्टे । तमिममित्यादिना । साधारणोऽपि पुरुषशब्दः चतुर्मुखस्य ज्ञान्युत्तमत्वात् तस्मिन्नेव मुख्यः इत्याशयेनोक्तम् । प्रथमेति । पुरा प्रथमम् । प्रपदयोः संयोगेन चतुराननं प्रापेत्यन्वयः । तस्मात् प्रपदे इत्येतद्व्याचष्टे । यस्मादिति । प्रपदा प्रपद-संयोगेन पदनाद्गतेः । तदूर्ध्वमित्यादि व्याचष्टे । अयादित्यादिना । अत्र च ऊरौ ऊरू आस्ताम् ऊरुशब्दवाच्यावभूताम् । ऊरूत्वेनोर्ध्वगमनम् ऊरूर्ध्व-गमनम् । उरु गृणीहीत्यब्रवीत् इत्यतेद्व्याचष्टे । किञ्चिदिति । ततो ऊरुतः गरणं निगरणम् अभ्यवहारं स्तुतिं वा । उर्वेव मे कुर्वित्यब्रवीत् इत्येतदर्थमाह । उरुस्थानमिति । उर्वित्येदनूद्य विस्तारसंयुतमिति व्याख्याति । हृदयं हृदयाख्यं निवासस्थानं चाकरोदिति शेषः । शार्कराक्ष्यपदं व्याचष्टे । सूक्ष्मेति । शर्करापदेन सूक्ष्मं वस्तूच्यते । तत्सम्बन्धि सौक्ष्मं शार्करं तेन युक्तम् अक्ष्यं ज्ञानं एषां ते शार्कराक्ष्याः । ब्रह्मा हैव ता इत्येतद्व्याचष्टे । उदरस्थमिति । तद्विदः ब्रह्मविदः । ऊर्ध्वं त्वेवोदसर्पदित्येतद्व्याख्याति । तत इति । दैवतैश्च सः

---

निःसृत्य कायादुत पद्मयोनेः सम्प्राविशन् क्रमशो मारुतान्ताः ।
पपात वायोर्गमनाच्छरीरं तस्यैव चावेशत उत्थितं पुनः ॥
तस्मात्स एको विबुधप्रधान इत्याश्रिता देवगणास्तमेव ॥
- इति महाभारततात्पर्यनिर्णये ३/२४-२६

तच्छिरो श्रयतेत्यस्य व्याख्या । स्थितो मूर्धनीति । चक्षुः श्रोत्रं मनो वाक् प्राण इत्यत्र प्राणादिपदार्थमाह । तत्रेत्यादिना । प्राणाख्यरूपेण श्रित इति शेषः । पृथक्पृथक् विषयभेदात् । तद्विवरणमाह । भावेत्यादिना । अहिंसन्ते-त्येतद्व्याचष्टे । वाचेति । हिंसां विवादम् । उच्चैः स्थितत्वात् उक्थोऽभूदित्येतद् तदुक्थमित्यस्य व्याख्या । ततः उक्थत्वात् प्रभुः पतिः सर्वेषाम् इति शेषः । त्वमुच्चोऽसीति तं देवा इत्यादेर्विवरणम् ।

तं प्रथमज्ञानिपुरुषं ब्रह्माणं प्रपदाभ्यां प्रपदयोः संयोगेन । ब्रह्म परं ब्रह्मेति कर्तृनिर्देशः । यत् यस्मात् अन्येषां चतुर्मुखपुरुषाकारसादृश्यरहितानां तदूर्ध्वं ताभ्यामूर्ध्वम् उदसर्पत् प्राप । ऊरु इति शेषः । ऊरुनामकौ उरु गृहीणीत्यब्रवीत् । उरोरुपरिगत्वेनेति शेषः । ततोऽप्यूर्ध्वं गत्वा उरु विस्तारसंयुतम् । निवासं कुर्वित्यब्रवीत् । उदरं हृदयमिति च द्वितीया सप्तम्यर्थे । शार्कराक्ष्याः सूक्ष्मदृष्टयः आरुणय इति केचिदृषयः । ते हृदुदरगते उभे रूपे अपि ब्रह्मैव ह । नाणुरपि भेद इत्यर्थः । ह इति प्रसिद्धौ । उर्ध्वम् उरसः इति शेषः । तद्ब्रह्मा यद्यस्मात् तस्मात् शिरोऽभवत् शिरस्संज्ञमभूत् । शिरस्त्वं शिरश्शब्दप्रवृत्तिनिमित्तम् । तच्चक्षुरादिभिः श्रितत्वं यत् । ता एताश्चक्षुरादिदेवताः । शीर्षन् शीर्ष्णि श्रयन्त इति श्रियः । यः एवमेतच्छिरसः शिरस्त्वं शिरश्शब्दप्रवृत्तिनिमित्तं वेद । अस्मिन् श्रियः सम्पदः श्रयन्ते । ताः चक्षुराद्याः अहिंसन्त वाचा विवादमकुर्वन् अब्रुवन् (विष्ण्वाज्ञया अस्मात् चतुर्मुखशरीरात् नः अस्माकं मध्ये यस्मिन् उत्क्रान्ते सति इदं शरीरं पत्स्यति पतिष्यति तदुक्थं भविष्यति) प्राण उत्क्रान्ते तत् शरीरमपद्यत अपतत् अशीर्यत विनाशोन्मुखमभवत् । अशारीति अशीर्यत इत्यस्माद्धेतोः शरीरशब्दवाच्यमभवत् । य एवं वेद अस्य वेत्तुः द्विषन् द्वेषी भ्रातृव्यः भ्रातृवत् सह स्थितः पाप्मा पापं पराभवति । शीर्यते नश्यति । भ्रातृव्यः शत्रुः पाप्मा पापी पराभवति । तमसि पतति । ता अहिंसन्तैव पुनरपि विवादमकुर्वन्नेव । तत्प्राणाख्यं वस्तु उक्थमभवत् । तदेतद्धेतोः प्राण एव उक्थम् । इदं सर्वं त्वमसि । अस्य सर्वस्य त्वमेव प्रभुरसि । वयं तव भृत्या स्मः त्वमस्माकमसि । ईश इति शेषः ॥ ४ ॥

ऐतरेयोपनिषत्

तं देवाः प्राणयन्त स प्रणीतः प्रातायत प्रातायीती३तत्प्रातरभवत्समागादिर्ती३तत्सायमभवदह्रेव प्राणो रात्रिरपानो वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवत्येतद्धस्म वै तद्विद्वानाह हिरण्यदन्वैदो न तस्येशे यं मह्यं न दद्युरिति प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तदनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद तत्सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत्त्रिवृत्त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत्सत्यस्य सत्यत्वं वेद ॥ ५ ॥

भा— तस्मात् श्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ।
शिष्यप्रशिष्यादिषु च तेऽनयन्वायुनोदितम् ॥
वायुमप्यनयन्सर्वे यशसा तद्गुणोक्तितः ।
ये ये गुणान्विजानन्ति वायोस्तानाविशन्मरुत् ॥
तत्र तत्र प्रविष्टत्वात्प्रततोऽसौ बभूव ह ।
प्रततत्वात्प्रातरिति तस्य नामाभवद्विभोः ॥
सङ्गतश्चाभवज्जीवचिता रूपान्तरेण सः ।
सङ्गतत्वात्सायमिति तद्रूपं नामतोऽभवत् ॥
वायोस्तत्पुनरध्यात्मं प्राणापानाभिधं द्वयम् ।
अध्यात्ममग्निर्वागाख्यश्चक्षुः सूर्यः प्रकीर्तितः ॥
यज्ञादिसाधने यत्तु मनश्चन्द्रः प्रकीर्तितः ।
मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः ॥
श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम् ।
श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम् ॥

यम एव षडङ्गानां विषयश्रवणोचितम् ।
श्रोत्रं तु वरुणः काम्यशास्त्रार्थे मित्र एव च ॥
श्रोत्रं यन्नीतिशास्त्रार्थे कुबेरश्च प्रकीर्तितः ।
विष्णुना प्रहितानां हि संयोगोऽध्यात्ममेष हि ॥
शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरा ।
एतास्सर्वा देवता हि ब्रह्मवायुसुपर्णकाः ॥
शेषशङ्करशक्राश्च चन्द्रसूर्ययमा अपि ।
अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः ॥
अधिदैवं स एवैक आधिक्यात्पुरुषोत्तमः ।
देवमात्रास्तदन्ये तु स आविः पुरुषोत्तमः ॥
पूर्णज्ञानस्वरूपत्वादेतावत्कथितं भवेत् ।
तात्पर्यात्सर्ववेदैश्च तज्ज्ञानन्नवदन्मुनिः ॥
हिरण्यदन्नाम वैदो भूतेषु हि सुरानृते ।
मदभीष्टं ममादातुं नैवेष्टे कश्चनाञ्जसा ॥
विष्णुना प्रहितानां हि देवानामहमुत्तमम् ।
वेद संयोगमाध्यात्मं ततो मुक्तो यथेष्टभुक् ॥
स्यान्नैवात्रास्ति सन्देहः स्वेच्छाविहृतिरेव च ।
मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा ॥
अधिदैवेन सहिता विष्णुना प्रभविष्णुना ।
एतद्धि तेन कथितं मुनिना तत्त्ववेदिना ॥
विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा ।
वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् ॥
एतादृशोपासनाया योग्यः सन् सततं सुधीः ।
स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि ॥
मुक्तस्य वैष्णवे लोके मुक्तानि च न संशयः ।
इत्येतद्ध्यानयोगाश्च मुनयो देवतास्तथा ॥

मानुषा ज्ञानमात्रेण स्वावरैः पूज्यतामियुः ।
मुक्तामुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः ॥
स एष भगवान्विष्णुः सत्यमित्यभिधीयते ।
सर्वोत्तमत्वात्पूर्णत्वात्सर्वज्ञत्वात्तथैव च ॥
देवतात्रयमन्यच्च पृथक्सत्यमितीर्यते ।
शेषवीन्द्रशिवादिभ्य उत्तमत्वात्सदैव हि ॥
वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः ।
तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् ।
अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत ।
अतिनादात्सदा वेदैरप्यन्नं स चतुर्मुखः ॥
यमित्यादित्य उद्दिष्टो यमयेयत्प्रकाशनात् ।
देवतात्रयमेतत्तु सहितं सत्यमुच्यते ॥
शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः ।
एवं सत्यपदार्थं हि विज्ञायोपास्त आदरात् ॥
योग्यस्तस्या उपासाया नैवासत्येन दुष्यति ।
देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् ॥
मनुष्याणां ज्ञानमात्राद्दोषो नातितरां भवेत् ॥ ५ ॥

टी— तं देवाः प्राणयन्तेत्येतत्खण्डं व्याचष्टे । तस्मात् श्रुत्वेत्यादिना । तस्मात् मुख्यप्राणात् । सः प्रणीतः प्रातायतेत्यादिविवरणम् । ये य इत्यादि । जीवचिता जीवस्वरूपचिता जीवचिता सङ्गतत्वात् । सायं सायंशब्दवाच्यमभूत् । अहरेव प्राणो रात्रिरपान इत्येतद्व्याचष्टे । वायोरिति । वागग्निरित्यादि व्याचष्टे । अध्यात्ममित्यादिना । अध्यात्मम् अग्निर्वागिति प्रकीर्तितः । सूर्योऽध्यात्मं चक्षुश्चन्द्रो मनः । तस्य विषयमाह । यज्ञादीति । दिशः श्रोत्रमित्येतद्व्याकरोति । मित्र इति । तेषां विषयविभागमाह । वैदिकेत्यादिना । काम्यशास्त्रार्थं काम्यशास्त्रश्रवणार्थं स एष प्रहितामित्यादि विवृणोति । विष्णुनेति । प्रहितानां प्रेरितानां मनआद्यभिमानिनां सर्वेषामपि देवतामात्रत्वं

वक्तुं मनोभिमानिनः सङ्गृह्णाति । शिवादीनामिति । पुरा पूर्वं एताः सर्वा देवताः देवतामात्राः । देवता कास्ता इत्यत आह । ब्रह्मेत्यादिना । अनेनेमा देवता इत्युक्तार्थं भवति । अद उ आविरोधिदैवतमित्येतद्व्याचष्टे । अधि-दैवमिति । आविःपदार्थमाह । पूर्णज्ञानस्वरूपत्वादाविरिति । तत्तदुक्तं भवतीत्येतद्विवरणमेतावत् । कथितमिति । एतद्धस्म वै तद्विद्वानित्ये-तद्विशदयति । तज्ज्ञानन्निति । भूतेषु जीवेषु आदातुम् आदापयितुं प्रहितां वा अहमित्येतद्व्याख्यानं विष्णुनेति । एतद्धेत्यादि व्याचष्टे । विष्णुप्रहितदेवा-नामित्यादिना । स्वस्वाम्यन्यन्यानि स्वेषां ये स्वामिनः तेभ्योऽन्यानि मुक्तियोग्याः । मानुषा मुक्ताः सन्तः स्वावरैः मुक्तैः पूज्यतामियुरित्यर्थः । तत्सत्यमित्यादि व्याचष्टे । स इत्यादिना । पृथगित्युक्तं विवृणोति । शेषे-त्यादिना । सत्वात् उत्तमत्वात् सत् ततत्वात् ति । तद्विवरणम् । जीवेषु तु सुपूर्णत इति । स एव ब्रह्मैव अन्नाभिमानित्वादन्नमित्युक्तम् । इतोऽ-प्यन्नमित्याह । अत्तीति । तदेतत् त्रिवृत्सहितं मिलितं त्रिवृदिव वै चक्षुरि-त्यादि विवरणम् । शुक्लेत्यादि । स यदि ह वा इत्यादि विवृणोति । एवमित्यादिना ॥

तं नारायणं वायुं च देवाः प्राणयन्त । प्रकर्षेणानयन्त । शिष्यादिषु उपदिदिशुः । स नारायणो वायुश्च प्रणीतः । प्रातायत । व्याप्तोऽभूत् । प्रातायीति यत् । तत् तस्मात् प्रातर्नामाऽऽसीत् । समागादिति जीवचिता सङ्गतोऽभूत् इति यत् तस्मात् सायंनामकोऽभूत् । अहः अहर्नियामको वायुः अध्यात्मं प्राणनामाऽभूत् । रात्रिः रात्रिनियामको वायुः अपानसंज्ञोऽभूत् । अध्यात्मम् अग्न्यादयो वागादिनामानः दिशः दिगभिमानिनो मित्राद्याः प्रहितां प्रहितानां विष्णुना प्रेरितानाम् अध्यात्मसंयोगः इमाः पूर्वोक्ताः ब्रह्माद्या देवताः देवतामात्रम् अद उ असौ विष्णुरेव आविः परिपूर्णज्ञानः अधिदैवतमित्युच्यते । इत्यनेन प्रबन्धेन तदेतदन्येषां देवतामात्रत्वं विष्णो-रधिदैवत्वमित्येतावदुक्तं भवति । तदेतद्विद्वान् हिरण्यदन् इति कश्चिदृषिरित्याह स्म वै । मदभीष्टं मह्यं न दद्युरिति यो मन्येत अयं तस्य तथाकरणस्य नेशे नेष्टे । अहमध्यात्मं प्रहितां प्रहितानां देवानां संयोगं वेद हि तस्मान्नेश इति

पूर्वेणान्वयः । य एवं वेद तस्मै वेत्त्रे तदनीशानानि तस्य वेत्तुरीशानादन्यानि स्वावराणीत्यर्थः । बलिं हरन्ति तत्सत्यं तद्ब्रह्म सत्यम् । अथ देवतात्रयं च सत्यमित्याह । सदित्यादिना । तदेतत् प्राणोऽन्नमादित्य इति त्रिवृत् त्रित्वसङ्ख्योपेतं मिलितं सत्यमित्यर्थः । त्रित्वेन वर्तत इति विग्रहः । चक्षुः शुक्लकृष्णकनीनिकारूपेण त्रिवृदिव वै । एतद्देवतात्रयं च त्रिवृति चक्षुषि क्रमेण वर्तत इति सम्बन्धः । य एवमुक्तप्रकारेण सत्यत्वं वेद । स यदिहात्रापि मृषा वदति । अस्योदितं सत्यमेव भवति ॥ ५ ॥

ऐतरेयोपनिषत्

तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामानी३सर्वं वाचाऽभिवदति वहन्ति ह वा एनं तन्तिसम्बद्धा य एवं वेद तस्योष्णिग्लोमानि त्वग्गायत्री त्रिष्टुम्मांसमनुष्टुप्स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स च्छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणो यस्यां कस्याञ्चिद्दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद तदुक्तमृषिणाऽ[1]पश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायत्यनिपद्यमानमिति न ह्येष कदाचन संविशत्या च परा च पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति स सध्रीचीः स विष्णूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिश आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्त्यथो [2]आवृतासोऽवतासो न कर्तृभिरिति सर्वं हीदं प्राणेनावृतं सोऽय-

---

१. अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसानऽ आवरीवर्ति भुवनेष्वन्तः ॥
(ऋग्वेद. १-१६४-३१)

२. अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥
(ऋग्वेद. १-५५-८)

माकाशः प्राणेन बृहत्या विष्टब्धस्तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात् ॥ ६ ॥

भा— तस्य नारायणस्यैव सर्ववेदात्मिका हि वाक् ।
तन्तिरूपा जगद्बन्धे नाम ब्रह्मादिकं च यत् ॥
विप्रक्षत्रियवैश्यादिरूपं चाखिलमेव तु ।
दाम तेनैव बध्नाति सकलं जगदच्युतः ॥
सर्वे हि नामवन्तोऽत्र सर्वे वेदोदिता अपि ।
वेदात्मिक्या यतो वाचा विष्णुर्वदति सोऽखिलम् ।
य एतद्विष्णुवाचैव बद्धं नामाख्यदामभिः ।
ज्ञात्वा जगदुपास्ते तु योग्यः संस्तदुपासने ॥
तं प्रत्येवाखिलान्येव भूतानि सह दैवतैः ।
बलिं हरन्ति पश्चाथ भूतान्येनं वहन्ति च ॥
योग्यश्चास्या उपासाया योग्यो ब्रह्मपदस्य यः ।
भूतयुक्ते रथे तस्मांत्स तिष्ठति सुरार्चितः ॥
मुक्तः संश्च तदन्येषां ज्ञानमात्राद्विमुक्तिगैः ।
स्वावरैः सेव्यतैव स्यात्कैश्चिदेव कचित्कचित् ॥
तथैव वायुना बद्धं जगदेतत्ततोऽवरम् ।
सुपर्णशेषगिरिशशक्रसूर्याद्यमञ्जसा ॥
विष्णोर्वायोश्च लोमादौ छन्दांस्येवाश्रितानि च ।
विष्णोर्विमुक्तवायोश्च लोमाद्यं तु चिदात्मकम् ॥
लोमप्राणादिभेदश्च नैव कश्चिच्चिदात्मनि ।
छन्नश्छन्दोभिरेवं स केशवस्तेन चाभिधा ॥
छन्दांसीत्येव तेषां हि य एवंविदुपासकः ।
निवारयन्ति पापेभ्यश्छन्दांसि किमु केशवः ॥

योग्या अस्याश्च विद्याया भृग्वाद्या देवतास्तथा ।
छन्दस्सु संस्थितो विष्णुर्गोपायत्येव तद्विदः ॥
मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्म ह ।
एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः ॥
छन्दस्सु संस्थितो वायुर्वायौ च स जनार्दनः ।
वायुश्च वायुसंस्थश्च कदाचिन्नैव तिष्ठतः ॥
वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान् ।
चोदितः केशवेनैव तत्स्थेनामितशक्तिना ॥
आसमन्तात्पराक्चापि पञ्चभूतेभ्य ईश्वरः ।
वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ॥
सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ।
नित्यदा वसतः कोणदिक्ष्वथासु विषूचिषु ॥
अन्तश्च सर्वलोकेषु चरतो लोकसाक्षिणौ ।
हस्तयोरेतयोरेव नित्याक्षीणं वसु स्थितम् ॥
तद्ध्यसह्यं बलं वायोरनन्तं किमु तद्धरेः ।
वायोराधारभूतस्य ताभ्यां हि ऋतुनामकाः ॥
आवृताः सर्वजीवा हि यथैव कनकावटाः ।
आच्छाद्यन्ते वित्तवद्भिस्ताभ्यामेवं च चेतनाः ॥
आवृता महदाद्यास्तु देहे तिष्ठन्ति चैतयोः ।
विष्टब्धाश्चैव सर्वेऽपि जीवा आकाश एव च ॥
स वायुः प्रकृतिश्चैव विष्टब्धौ केशवेन हि ।
बृहत्त्वाद्बृहतीत्येव तयोर्नाम प्रकीर्तितम् ॥
वायुकेशवयोः प्राणनाम सर्वप्रणायनात् ।
विशेषतो बृहत्प्राणो भगवांस्तत्र केशवः ॥
इति विद्यात्.................... ॥ ६ ॥

टी— तस्य वाक्तन्तिरित्येतत् खण्डं व्याचष्टे । तस्येत्यादिना । यद्ब्रह्मादिकं नाम ब्रह्मेत्यादि नाम । सर्वं सितमित्यस्यार्थो । बध्नातीति । सर्वं हीदं नामनीत्यस्य अभिप्रायः । सर्वे हीति । नामाख्यदाम्नां वेदाख्य-तन्तिसम्बन्धं दर्शयति । सर्वे वेदोदिता अपीति । सर्वं वाचाऽभिवदतीति वाक्यं विवृणोति । वेदात्मिकेति । वहन्ति ह वा इत्येतद्व्याचष्टे । य एतदिति । विष्णुवाचा वेदाख्यतन्त्या ब्रह्मादिनामाख्यदामभिः जगद्बद्धं ज्ञात्वा (यः) विष्णुमुपास्ते एनं प्रति भूतानि बलिं वहन्ति हरन्तीत्यर्थः । पञ्चभूतान्येनं वहन्ति च । भूतयुक्ते पञ्चभूतैः ऊढे । वायुविषयतयाऽपि अयं खण्डो व्याख्येय इत्याह । तथैवेति । तस्योष्णिग्लोमानीत्येतद्व्याचष्टे । विष्णोरिति । विष्णोर्लोमादिमत्वे प्राकृतशरीरं स्यादित्याशङ्कां परिहरति । विष्णोरिति । स च्छन्दोभिश्छन्न इत्यादि व्याख्या । च्छन्न इत्यादि । तेन केशवाच्छादकत्वेन तेषामुष्णिगादीनां छन्दांसीत्यभिधा । छादयन्ति ह वा एनमित्यस्य व्याख्या । एवंविदिति । तदुक्तमृषिणेत्यादि विवृणोति । मन्त्रोऽपीति । एष गोप्तेति गोपामित्यस्यार्थः । अनिपद्यमानमित्यस्य व्याख्या । वायुश्चेति । तत्स्थेन वायुस्थेन आ च परा च पथिभिश्चरन्तमित्येतद्व्याचष्टे । आसमन्तादित्यादि । पञ्चभूतेभ्यः पराक् बहिश्च । सध्रीचीश्च ह्येष इत्यादि व्याचष्टे । सध्रीचीनास्विति । एष ह्यन्तर्भुवनेष्वावरीवर्तीत्यादि व्याचष्टे । अन्तरिति । अथो आवृतास इत्युदाहृतमन्त्रमादित आरभ्य व्याचष्टे । हस्तयोरिति । अथाहं सहस्तन्विभृतो दध इत्येतद्व्याचष्टे । तदिति । आवृतास इत्यस्य व्याख्यानम् । ताभ्यामिति । अवतासो नेत्यस्यार्थो । यथैवेति । कनकावटाः कनकनिक्षेपसाधनानि । कर्तृभिरित्यस्यार्थो वित्तवद्भिरिति सर्वं हीदं प्राणेना-वृतमित्येतद्व्याचष्टे । ताभ्यामिति । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्ध इत्येतद्व्याख्याति । विष्टब्धा इति । धृताः वायुकेशवयोः बृहत्वात् बृहती नाम । सर्वप्रणायनात् प्राणनामा । तत्र केशवो भगवान् विशेषतो बृहत् प्राणश्च ।

तस्य केशववायोश्च वाग् वेदलक्षणा तन्तिः अवान्तरदामाधारभूतदीर्घरज्जुः । नामानि ब्रह्मादिनामानि । तदिदं सर्वं ब्रह्मादिजगत् अस्य प्राणस्य वाचा

वेदलक्षणया अत्यन्तं सितं बद्धम् । इदं सर्वं नामनी नामवदेव हि । वाचा वेदात्मिक्या अभिवदति विष्णुः य एवं ब्रह्मादिजगत् तन्तिसम्बद्धं वेद । एनं प्रति बलिं हरन्ति । पञ्चभूतान्येनं वहन्ति च । तस्य केशवस्य वायोश्च लोमानि लोमसु उष्णिक्संज्ञं च्छन्दः । एवम् उत्तरत्रापि प्रथमा सप्तम्यर्थे । स भगवान् च्छन्दोभिः छन्नः । आवृतः । यत् यस्मात् छन्दोभिः छन्नः तस्मात् छादकत्वात् य एवं छन्दसाम् एतत् छन्दस्त्वं छन्दश्शब्दप्रवृत्तिनिमित्तं वेद स यदि यस्यां कस्यां चिदिशि कामयते वस्त्विति शेषः । तर्हि तस्यां तस्यां दिशि च वसन्तमेनं छन्दांसि पापात्कर्मणः छादयन्ति निवारयन्ति । एष भगवान् इदं सर्वं गोपायति रक्षति । तस्माद्गोपाः गोप्तारम् अनिपद्यमानम् इत्यस्यार्थो न ह्येष इति संविशति तिष्ठति ।

आ च परा चेत्यनूद्य व्याचष्टे । आ च ह्येष इति । आ च समन्ताच्च परा च पञ्चभूतेभ्यो बहिश्च सध्रीचीरित्यनूद्य सध्रीचीश्च ह्येष इति व्याचष्टे । सध्रीचीः इमा दिशः सध्रीचीन्यासु पूर्वादिदिक्षु विषूचीः इमाः विदिशः विषूचीः तासु कोणादिदिक्षु । द्वितीया सप्तम्यर्थे । वस्ते वसति । आवरीवर्ति भुवनेष्वन्तरित्यनूद्य व्याचष्टे । एष हीति । भुवनेष्वन्तः आवरीवर्ति चरति केशवो वायुश्च । अथो इत्युक्तार्थे प्रमाणान्तरमुच्यत इत्यर्थः । तदाह । आवृतास इति । अस्य पूर्वार्धः अप्रक्षितं वसु बिभर्षि हस्तयोः अषाह्लम् । स हस्तन् विभृतो दधे आवृतासो न कर्तृभिः । तनूषु तक्रतवः इदं सूरयः । अप्रक्षितं नित्याक्षीणं हस्तयोर्बिभर्षि अषाह्लम् असह्यं सहो बलं तन्वि तनौ श्रुतः प्रसिद्धः । दधे दधासि । हे इन्द्र ते तनूषु भूरयो अनन्ताः कर्तृत्वात् क्रतुनामका जीवाः क्रतुभिः धनिकैः अवतासो न । कनकावटा इव आवृतासः आच्छन्नाः । एतन्मन्त्रतात्पर्यमाह । सर्वं हीदमिति । सोऽयमकाशः बृहत्वात् बृहती नाम्ना प्रणयनात् प्राणनाम्ना विष्णुना वायुना च विष्टब्धः धृतः । आपिपीलिकाभ्यः पिपीलिका आरभ्य ॥ ६ ॥

ऐतरेयोपनिषत्

अथातो विभूतयोऽस्य पुरुषस्य तस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वादयतीदमाहरतेदमाहरते-

त्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोंऽतरिक्षं च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यतेंऽतरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद चक्षुषा सृष्टौ द्यौश्चादित्यश्च द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चाऽदित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायन्तीं ३ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मणे एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद मनसा सृष्टा आपश्च वरुणश्चापो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ॥ ७ ॥

भा— ............तस्य विष्णोरङ्गानामथ वैभवम् ॥

उच्यते तस्य वाचा हि सृष्टावग्निः क्षितिस्तथा ।
शुश्रूषार्थ(र्थे) तस्य पृथ्वी जनयत्योषधीः प्रभोः ॥

ताः पचत्यग्निरुद्युक्त आहृता आहृताः पुनः ।
आहरेति वचोऽस्यापि शृण्वन्त्येव महर्षयः ॥
मुखजत्वात्तयोर्विष्णोर्मुखं जनकमिष्यते ।
आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा ॥
सर्वैर्यद्भुज्यते चान्नं तत्र तत्र स्थितो हरिः ।
तद्भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतस्सदा ॥
विष्णोर्वाग्विभवं वेद य उपास्ते च सर्वदा ।
योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः ॥
समं तयोर्व्याप्तिमांश्च तद्वन्मुक्तश्च नित्यदा ।
योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः ॥
समं तयोर्व्याप्तिमांश्च तद्वन्मुक्तश्च नित्यदा ।
अनष्टलोको वसति समीपे केशवस्य च ॥
योग्या अस्या उपासायाः पृथिव्यग्निपदस्य ये ।
योग्यास्ते वै मुख्यतया तदन्ये तत्र तौ स्थितौ ॥
तत्र चर्तुं समर्थाः स्युर्मुक्तिं प्राप्य यदृच्छया ।
कादाचित्कोपासने तु तावत्येषां च योग्यता ॥
वेदनं ह्यापरोक्ष्येण मुख्यं भवति नान्यथा ।
एकदेशविदो यस्मात्परोक्षज्ञानिनोऽखिलाः ॥
आपरोक्ष्यं भवेद्यस्मान्नैवोपासामृते क्वचित् ।
तस्मादुपासापूर्वं तु योऽपरोक्षं प्रपश्यति ॥
स एव वेद नान्यस्तु योग्यस्यैवापरोक्षदृक् ।
तस्माद्योग्यस्योक्तफलमन्येषां किञ्चिदेव हि ॥
प्राणादिभ्यश्च वाय्वाद्या एवं विष्णोः प्रजज्ञिरे ।
ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः ॥
ते विष्णोर्मनसा जाताः सर्वे चाबभिमानिनः ।
वैश्वदेव्यस्ततो ह्यापो वरुणश्च मनोभवः ॥

प्राणिनां पूर्तपुण्येषु श्रद्धारूपमनोऽधिपः ।
एवं हि सर्वदेवा हि विष्ण्वङ्गेभ्यः प्रजज्ञिरे ॥
स्वोत्पत्त्यङ्गं च ते विष्णोः शुश्रूषन्ते पृथक्पृथक् ।
विष्णोर्विषयधर्मेषु ज्ञानादिषु चतुर्मुखः ॥
श्रद्धां ददाति भूतानां वैदिकश्रवणे विपः ।
तान्त्रिके शेषरुद्रौ च शक्रो यज्ञादिकर्मणि ॥
वायुर्गन्धवहश्चास्य भक्तिज्ञानप्रदस्तथा ।
भूतानां तस्य विषये त्वन्तरिक्षं च कर्मणः ॥
तदीयस्यैव भोगार्थं जीवानां श्रुतिचारदम् ।
अन्तरिक्षं च विघ्नेशः सूर्यस्तत्कर्मसिद्धये ॥
भूतानां ज्योतिषो दाता द्यौरप्यन्नाद्यदायिनी ॥ ७ ॥

टी— अथात इत्येतद्खण्डप्रतिपाद्यं दर्शयति । तस्य विष्णोरित्यादिना । तयोः कार्यमाह । शुश्रूषार्थमित्यादिना । पचति पाकेन स्वादुयुक्ताः करोति । इदमाहरतेत्यस्य तात्पर्यमाह । आहृता इत्यादिना । वाचं पितरमित्यादौ वागादीनां पितृत्वमुपपादयति । मुखजत्वादित्यादिना । मुखाश्रितवाचो जनकत्वात् मुखं जनकमित्युच्यते । ततो मुखजत्वात् आस्यभोग्यम् आस्येन भोग्यं ताभ्यां सृष्टस्य भगवदन्नत्वमुपपादयति । सर्वैरिति । यावदनुपृथिवीत्यादि फलकथनवाक्यतात्पर्यमाह । विष्णोरित्यादिना । नास्य तावल्लोको जीर्यत इत्यस्यार्थः । अनष्टलोक इति । तदन्ये कादाचित्कोपासने कृते तत्र चर्तुं समर्थाः स्युः । एषां योग्यता तावत्येव । कादाचित्कोपासने एव ।वेदेति पदतात्पर्यमाह । वेदनं हीति । आपरोक्ष्येण वेदनं हि मुख्यं मुख्यवेदनशब्दार्थो भवति । उपासां निरन्तरोपासां प्राणेन सृष्टावित्यादिस्थानचतुष्टयगतवाक्यतात्पर्यमाह । प्राणादिभ्य इति । आपश्च वरुणश्चेत्यत्र अप्शब्दार्थो । ब्रह्मेति । विश्वे समस्ता देवा देवता यासां ता वैश्वदेव्यः । आपो हास्मै इत्येतद्व्याचष्टे । विष्णोरित्यादिना । विष्णोः विषयधर्मेषु विष्णुविषयधर्मेषु भूतवायुरस्य भगवतो गन्धवहः मुख्यप्राणो भगवद्विषये

भूतानां भक्तिज्ञानप्रदः । अन्तरिक्षं च तदीयस्य भगवद्विषयस्य कर्मणो भोगार्थं श्रवणाख्यभोगार्थं भृतिचारदं श्रोत्रेन्द्रियव्यापारप्रदं तच्छ्रवणं च जीवानां सुख-भोगार्थं जीवश्रोत्रनियामकभगवतश्च ॥

तस्य विष्णोर्वाचा वागिन्द्रियेण अस्यां पृथिव्याम् एना ओषधीः स्वदयति । आस्वादनार्हाः करोति । पचतीति भावः । इदमाहरतेदमाहरतेति वदति । वादयति च । पृथिवी यावदनु यावद्देशे वर्तते तावान्लोकः प्रदेशः आवासस्थानं भवति । तावान् तल्लोकपरिमितो लोकः तावल्लोकः न जीर्यते । न नश्यति एतयोः पृथिव्यग्न्योः यावत् यावान् वाचो विभूतिं भगवद्वागिन्द्रियमाहात्म्यम् । एवमुत्तरत्रापि । अन्तरिक्षमनु अन्तरिक्षानुकूल्येन तत्प्रेरणयेत्यर्थः । श्रुण्वन्ति भगवद्विषयं कर्म अस्मै विष्णवे वृष्टिमन्नाद्यं च । ज्योतिः प्रकाशं तेजसा पदार्थप्रकाशनम् । एनं भगवन्तं प्रत्यायन्ति आगच्छन्ति । दिग्भ्यः दिक्प्रेरणया विश्रुणोति विविधं शृणोति । विचिनोति विवेचयति । पुण्याय कर्मणे भगवद्विषयपुण्यकर्मकर्तुः आपः अब्भिमानिनो ब्रह्माद्याः श्रद्धां विष्णु-विषयधर्मादिश्रवणादि श्रद्धां सन्नमन्त उत्पादयन्ति । अस्य धर्मेण भगवद्विषयपूर्तादिधर्मेण तच्छ्रद्धाजनकत्वेन ॥ ७ ॥

ऐतरेयोपनिषत्

आपाः ३ इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत्पितुर्यत्र वा पितुस्तद्वा पुत्रस्येत्येतत्तदुक्तं भवत्येतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय आऽहं मां देवेभ्यो वेदा ओमद्देवान्वेदेतः प्रदाना ह्येत इतः सम्भृता इति स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणस्तं ब्रह्मगिरिरित्याचक्षते गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपा-साञ्चक्रिरे ते बभूवुस्तस्माद्धप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरि-त्यसुरास्ते ह पराबभूवुर्भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो

भवति य एवं वेद स एष मृत्युश्चैवामृतं च तदुक्तमृषिणा[१]ऽपाङ्प्राङेति स्वधया गृभीत इत्यपानेन ह्ययं यतः प्राणो न पराङ्भवत्यमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३अमृतैषा देवता ता शश्वान्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न निचिन्वन्ति हैवेमानि शरीराणी३अमृतैवैषा देवताऽमृतो ह वा अमुष्मिंल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद ॥ ८ ॥

॥ इत्यैतरेयोपनिषत्सु द्वितीयारण्यके प्रथमोऽध्यायः ॥ २ ॥ १ ॥

भा— आप इत्येव देवानां ब्रह्मादीनां कथं भवेत् ।
नामेत्यपृच्छल्लक्ष्मीस्तं महिदासं जनार्दनम् ॥
आप इत्येव नामैषां भवतीत्याह स प्रभुः ।
इदं मदाख्यं यद्ब्रह्म ह्याप इत्यभिधीयते ॥
आ पूर्णत्वाद्गुणैः सर्वैस्तन्मूलमखिलस्य च ।
तूलभूतं तदन्यत्तु पिता ह्येष जनार्दनः ॥
पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत् ।
स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात्परमेशितुः[२] ॥

---

१. अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम् ॥
(ऋग्वेद. १-१६४-३८)

२. सर्वाभिमानिनो देवाः सर्वेऽपि ह्युत्तरोत्तरम् ।
आधिक्यं वक्तुमेवैषां पृथक्स्थानमुदीर्यते ॥
आधिक्यक्रम एवात्र शास्त्रतात्पर्यमिष्यते ।
स्थानेषु त्ववरेषां च परे सन्ति न चेतरे ॥
तथापि पितुरर्धो यः पुत्रस्याप्युपचर्यते ॥
अव्याकृतादिपदार्थानां सर्वे तदभिमानिनः ॥
- इति गीतातात्पर्योद्धृत (३/४२) प्रमाणवचनम् ॥
(इदं ब्रह्मतर्कवचनमिति तत्त्वप्रदीपाज्ज्ञायते -४/२/२ - प.४५२)

तन्नामाप इति ह्येतद्ब्रह्मरुद्रादिनां भवेत् ।
यथा यदव इत्येव रघवः कुरवस्तथा ॥
पुत्रनाम पितुश्च स्यात्तत्तन्त्रत्वात्सुतस्य हि ।
यथा पितामहाद्याश्च पितरो नाम कीर्तिताः ॥
तथापि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः ।
आप इत्येव देवानां सर्वेषां प्रददौ हरिः ॥
स्वकीयमेवमन्यानि पृथक्पृथगदात्प्रभुः[१] ।
नारायणादिनामानि ददौ नान्यस्य केशवः ॥
एवं स भगवान्विष्णुर्महिदासाभिधः प्रभुः ।
जानन्नित्योदितज्ञानादाह देवीमिदं वचः ॥
देवपर्यन्तमा व्याप्तिं वेदाहं मम सर्वदा ।
मत्पर्यन्तं यथा व्याप्तिं देवानामपि सर्वशः ॥
मयि देवास्तेषु चाहमिति विद्धि वरानने ।
मयैतानि प्रदत्तानि पदानि ब्रह्मपूर्वकाः ।
अधितिष्ठन्ति सत्ताद्या अप्येतेषां मदाज्ञया ।
ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वदे ॥
सम्भृता मत्त एवैते स एष भगवान् गिरिः ।
गिरणात्सर्वभूतानां चक्षुर्नामास्य दर्शनात् ॥
सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः ।
प्राणनामा प्रणेतृत्वात्तमेनं गुणपूर्तितः ॥
गिरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम् ।
य एवं वेद तं विष्णुमापरोक्ष्येण शाश्वतम् ॥
गिरत्येवाखिलं पापं भ्रातृवत्सह संस्थितम् ।
पराभवति पाप्माऽस्य द्वेष्टा निरयगः सदा ॥

---

१. वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः ।
नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः ॥
- इति महाभारत शान्तिपर्वणि । (२२३/२६)

असनाद्भगवान्सोऽसुः सर्वस्यापि जनार्दनः ।
प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते ॥
स एष भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः ।
अज्ञानादिप्रदातृत्वात्स एवाभूतिनामकः ॥
सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् ।
उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः ॥
बभूवुः सुखसज्ज्ञानपूर्वैः सर्वगुणैर्युताः ।
देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः ॥
स्थित्वा सुप्तेषु विष्णुं तं भूर्भुरित्येव शंसति ।
भूःशब्दार्थो भूतिरिति वैपरीत्येन चासुराः ॥
अभूतिकारकोऽस्माकमैश्वर्यादिगुणोज्झितः ।
इत्येवोपासते तस्मात्पराभूताश्च सर्वशः ॥
ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ ।
य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम् ॥
भावाभावं च देवानां दैत्यानां चैवमेव तु ।
ज्ञानैश्वर्यादिभिः सोऽपि भवेत्तस्य परात्मनः ॥
प्रसादात्तस्य पाप्मा च पराभवति सर्वशः ।
स एष भगवान्विष्णुर्मृत्युदो मोक्षदस्तथा ॥
स एव जीवनकरो यदाऽपानेन संयुतम् ।
प्राणं नियमयत्यस्मिंच्छरीरे पुरुषोत्तमः ॥
शरीराद्बहिरेतौ तु यदा निःसारयत्यजः ।
तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम् ॥
प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः ।
अवाक्प्राक्च सदा गच्छेद्वायुरानन्दरूपिणा ॥
अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः ।
अनेन हरिणा यस्मान्नियतो न पराग्भवेत् ॥

अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः ।
अनित्या अपि देहास्ते शश्वत्सन्त्याविमोक्षतः ॥
स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः ।
नानागती तु तावेतौ वायुः प्राप्नोति केशवम् ॥
शरीरं तु विनष्टं स्यात्पञ्चत्वमुपगच्छति ।
जडं तज्जडतामेति चेतना वायुदेवता ॥
चेतनेशं हरिं याति विरुद्धगमनौ च तौ ।
ऊर्ध्वं गच्छति देवः स देहोऽधः पतति क्षितौ ॥
दृश्यमेतच्छरीरं चाप्यदृश्या वायुदेवता ।
य एवं वेद तं वायुममृतं सर्वनायकम् ॥
पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा ।
स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च दृश्यते ॥ इति च ।

ब्रह्मपन्थाः सत्यं कर्मेति तस्य नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः । नासिकायां यन्नेत्रयोर्मध्ये विनतमिव किञ्चिन्नतस्थानं तत्सूर्यलोकस्थानीयं विद्यात् । तथेति निर्णयः । इरामया इति दैर्घ्यमवधारणार्थम् । 'दैर्घ्यं प्लुतं च हिंकारो बिन्दुरप्यवधारण' – इति शब्दनिर्णये । ब्रह्मा हैव ता३ईते ।

देशतः कालतोऽर्थाच्च बलतो गुणतस्तथा ।
स्वरूपतोऽपि नैव स्याद्भेदोऽत्यल्पोऽपि यत्र हि ॥
केवलैश्वर्ययोगेन यत्र सङ्ख्यादिवद्भवेत् ।
स्वरस्पर्शविभागेन तत्रोक्तिः स्याद्विभक्तिषु ॥
अचिन्त्यात्तु तथैश्वर्यादेकोऽपि बहुरूपवान् ।
प्रकाशयेद्यतो विष्णुः सर्वत्राप्यविशेषवान् ॥
न विशेषो हि रूपाणां मत्स्यादीनां कथञ्चन ।
नैश्वर्ये न बले चैव नानन्दादिगुणेष्वपि ॥

इत्यादि शब्दनिर्णयवचनात् । द्विवचनमत्र व्यवहारमात्रमिति दर्शयितुं ता इत्युक्तम् ।

[1]'संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते ।'
उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ॥

इत्यतो ब्रह्माहेति दैर्घ्यमपि परब्रह्मत्वविवक्षया । 'अद उ एव नारायणाख्यमधिदैवतम् अन्यानि दैवतमात्राणि । स्थानान्तरेऽन्येषामप्यधिदैवत्वकथनं कर्मजदेवाद्यपेक्षया । मुख्याधिदैवतं नारायण एव । तस्योष्णिग्लोमानीत्यादि लोमसूष्णीगित्याद्यर्थे । 'सप्तसु प्रथमे'ति सूत्रात् । सच्छन्दोभिश्छन्न इति वाक्यशेषात् । 'ब्राह्मणोऽस्य मुखमासी'-दित्यादिवच्च ।

अङ्गेषु यस्य छन्दांसि देवा लोका मखा अपि ।
तद्वशा नियता नित्यं नमस्तस्मै परात्मने ॥ इति स्कान्दे ।

अस्मै पुण्याय कर्मण इत्येतमुद्दिश्य जीवानां पुण्यकर्म कर्तुम् । तैर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण श्रुणोति भगवान् । दिग्भ्योऽप्यन्य एव विश्रुणोति जीवः । अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेनैव भगवान् भुङ्क्ते । न च जीववागादिना पृथिव्यग्न्यादिकं सृष्टमित्यत्र किञ्चिन्मानमस्ति । मुखादिन्द्रश्चाग्निश्चेत्यादिना भगवतः सकाशाद्धि सर्वेषां सृष्टिः प्रसिद्धा । सृष्टिभेदादन्यथावचनम् । न च मुख्यकारणाङ्गीकारेऽविरोधे औपचारिकं कारणमङ्गीकर्तुं युक्तम् । अतिप्रसङ्गात् । न हि यत्किञ्चित्कारणत्वमस्तीत्येतावता ब्राह्मणस्य चण्डालः पितेत्युच्यते । पितृत्वं चात्रोक्तं वाचं पितरमित्यादिना ।

मनुष्याणां तु यत्कर्म न देवोत्पत्तिकारणम् ।
दैवतैरुपकारस्तु क्रियते नरकर्मणाम् ॥

---

१. संहितायां तु दैर्घ्यादिरुक्ताधिक्ये पदेऽन्यथा ॥
अनन्यार्थत्वविज्ञप्त्यै..........॥ इति ऋग्भाष्ये ।
-यः संहितायां दैर्घ्यादिः पदे त्वन्यथा स उक्ताधिक्ये उक्तार्थस्याधिक्यज्ञापनार्थम् । अनन्यार्थविज्ञप्त्यै उक्तस्यावधारणार्थं चेति यावत् ॥ - इति तट्टीका ।

देवानां कर्मणैवैते जायन्ते सर्वमानुषाः ।
प्रधानत्वान्न देवानां नृकर्मोत्पत्तिकारणम् ॥ इति च ब्रह्माण्डे ।

आह महिदास ऐतरेय इति तु सर्वस्य वचनस्य तदीयत्वज्ञापनार्थं न तु सन्निहितस्यैव । यथेन्द्रं कुत्स इत्यादि । यथा च [1]'पूर्वं तु बादरायणो हेतुव्यपदेशा'दिति ॥ ८ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके प्रथमोऽध्यायः ॥ २ ॥ १ ॥

टी— आपाः इत्यादिखण्डं व्याचष्टे । आप इत्यादिना । आपा इति प्रश्नभागं व्याचष्टे । आप इत्येवेति । आप इति परिहारांशं व्याख्याति । आप इत्येव नामैषामिति । तदिदमाप एवेति व्याचष्टे । इदमिति । इदं वै मूलमित्यस्यार्थः । तन्मूलमिति ब्रह्माखिलस्य मूलं कारणम् । अधस्तूलमित्यस्यार्थः । तूलभूतमिति । तूलं कार्यम् । मूलमित्युक्त्या प्राप्तां विकारिकारणत्वप्रतीतिं निवारयति । नैवेति । भगवतः पितृत्वोक्त्या फलितार्थकथनरूपं यत्र ह इत्यादि व्याचष्टे । पितृत्वादित्यादिना । तर्हि पितृपुत्रनाम्नां सांकर्यं स्यादित्यत आह । तथापीति । एतद्धस्य वै इत्येतद्विवृणोति । एवमिति । आह मां देवेभ्यो वेदा ओमदेवान् वेदेति वाक्यद्वयं विवृणोति । देवपर्यन्तमित्यादिना । अहं देवपर्यन्तं मम व्याप्तिम् आवेद । तथा देवानां मत्पर्यन्तं व्याप्तिं वेद । इतः प्रदाना ह्येत इत्यस्यार्थो । मयैत इति । इतः सम्भृता इति व्याचष्टे । सम्भृता इति । मत्तः मया सम्भृताः पुष्टाः गिरणात् संहरणात् । चक्षुरित्यादि व्याख्या । चक्षुर्नामेत्यादि । अस्य विष्णोः ब्रह्मगिरिशब्दार्थमाह । तं एनमिति । गिरति ह वै इत्यादि व्याचष्टे । य एवमित्यादिना । स एषो असुरित्यादि व्याख्या । असनादित्यादि । तं भूतिरित्यादि व्याचष्टे । सुखज्ञानादित्यादिना । पराबभूवुरित्यस्यार्थो । ज्ञानैश्वर्यादिभिरिति । देवानां दैत्यानां च भावाभावम् । ऐश्वर्यादिगुणभावं तदभावं च । सोऽपि वेत्ताऽपि ज्ञानैश्वर्यादिभिर्युक्तो भवेदिति शेषः । स एष

१. ब्रह्मसूत्रम् (३/२/४२)

मृत्युश्चैवामृतं चेत्येतद्विवृणोति । स एष इति । अमृतमित्यस्य मोक्षप्रदत्वम् अर्थमुक्त्वाऽर्थान्तरमाह । स एवेति । तदुपपादनं यदेत्यादि । यदा अपानेन संयुतं प्राणं शरीरे नियमयति अवस्थापयति । मृत्युप्रदत्वमुपपादयति । शरीरा-दित्यादिना । एतौ प्राणापानौ । संसार इव मोक्षेऽपि जीवनप्रदत्वमस्तीत्याह । मुक्तानामिति । प्राणात् मुख्यप्राणात् अपाङ्प्राङिति ऋचं व्याख्याति । अवागित्यादिना । आनन्दरूपिणेति । स्वधयेत्यस्यार्थः गृभीत इति । मन्त्र-गतपदविवरणरूपस्य यत इत्युपनिषद्गतपदस्यार्थो गृहीत इति । अनेन हरिणा यतः नियतो यस्मात् तस्मात् पराङ् न भवेदिति नञ्अध्याहारेण नार्थान्तरम् । पराभवं न गच्छतीति वा । देहान्न निर्गच्छतीति वा तस्यार्थः । अमर्त्यो मर्त्येनास योनिरित्येतद्विवृणोति । अमर्त्य इति । तत्प्रसादेन आनन्द-रूपभगवत्प्रसादेन अमर्त्यः सन् वायुः । मर्त्येना सयोनिरित्यस्यार्थो देहैः सह स्थित इति । देहैः सह स्थितत्वमुपपादयति । अनित्या इति । ता शश्वदि-त्यस्यार्थः । शश्वदिति । वायोर्देहा अपि नित्याः किमु वायुर्नित्य इति वाच्यम् । विषूचीना इत्यस्यार्थो । नानागतीति विरुद्धगती तावेतौ वायुस्तद्देहश्च वियन्तावित्यस्योपसंहारवाक्यस्य विवरणं विरुद्धगमनौ च ताविति । तदुप-पादनमूर्ध्वमिति । अन्यं चिक्युरित्यादि विवृणोति । दृश्य इति । अमृतो ह वा अमुष्मिंल्लोके सम्भवतीति फलकथनरूपं वाक्यं विवृणोति । य एवं वेदेत्यादिना । अत्र प्रकरणे वायुरिति ब्रह्मोच्यते ।

एष पन्था इत्यादौ प्रतिपाद्यमूर्तीराह । ब्रह्मेत्यादिना । क्रमेण ब्रह्मेत्यादि क्रमेण उक्तैव निरुक्तिः तदेतद्ब्रध्नस्य विष्टभ्यामित्यादिना योजयति । नासिकाया इति । सूर्यलोकस्थानीयं विद्यादिति शेषयोजना । यथा पृथिवी तथा तस्येत्यादौ तथा शब्दस्यार्थः तथेति निर्णय इति । ताई इत्यस्य प्रतिपदं ते इत्यादि । ताई इत्यस्य स्वरविभागाभिप्रायं प्रमाणेनाह । देशत इति । स्वरस्पर्शविभागेन स्वराणां स्पर्शानां च विभागेन । ब्रह्माहेत्यत्र दैर्घ्यप्रयोजनं सप्रमाणमाह । संहितायामिति । अद उ अविरोधिदैवतमित्येतद्योजयन् विवृणोति । अद एवेति । अकारार्थ एवेति । अन्येषामधिदैवत्वकथनस्य विषयमाह । स्थानान्तर इति । कर्मदेवताः पश्वाद्याः । फलितार्थमाह ।

मुख्येति । तस्योष्णिग्लोमानीत्यादौ सामानाधिकरण्यप्रतीतिं निवारयति । तस्येति । ज्ञापकमाह । सप्तस्विति । अस्मै पुण्याय कर्मण इत्यत्र भगवतः कर्म कर्तुमित्यन्यथाप्रतीतिं निवारयति । अस्मा इति । जीवानां कर्म कर्तुं चेत् पितरं परिचरत इति कथं युज्यत इत्यतो दिग्भ्यो विश्रुणोतीत्यस्य तात्पर्यमाह । तैरिति । दिगभिमानिभिः मन्त्राधिदेवैः अस्यैवार्थान्तरमाह । दिग्भ्य इति । अन्यो जीवोऽपि दिग्भ्य एव । तत्प्रेरणयैव शृणोति । अनेन तेषां जीवश्रोत्रनियामकत्वेनापि पितृपरिचर्याकर्तृत्वमुक्तं भवति । जीवेश्वरयोः श्रवणजभोगविभागमाह । अन्येषामिति । तस्य वाचा सृष्टावित्यादेरपव्याख्यां प्रत्याख्याति । न चेति । भगवता सृष्टत्वे प्रमाणसद्भावात् । प्रमाणविरुद्धं च तदित्याह । मुखादित्यादिना । मुखादिन्द्रश्चाग्निश्च इति इन्द्राग्न्योः मुखजत्वमुच्यते । वाचा सृष्टौ पृथिवी चाग्निश्चेत्यत्रोच्यते । तयोर्विरोधं परिहरति । सृष्टिभेदादिति । जीवस्याप्यौपचारिककर्तृत्वसद्भावात् । तदङ्गीकारे को विरोध इत्यत आह । न चेति । अतिप्रसङ्गमेव विवृणोति । न हीति । नृणां कर्म नृकर्म । आह महिदास ऐतरेय इत्युक्त्या एतदेव महिदासवचनं नान्यदिति प्रतीतिः स्यात् तां निवारयति । आह महिदास इत्यादिना । अत्रोदाहरणमाह । यथेन्द्रमिति ।

आपाः इति रमायाः प्रश्नः कथं सर्वेषां देवानाम् आप इति नामेति रमायाः प्रश्नार्थः । आप इति । भगवतः परिहारवाक्यम् आप इति नाम देवानां भवेदेवेत्यर्थः। तदुपपादयति । तदिदमिति । मत्स्वरूपमाप एव । अम्नामकमेव । इदम् अम्नामकं मत्स्वरूपं मूलकारणं वै । अदो ब्रह्मादि जगत् तूलं कार्यम् । कथं तूलमित्यत आह । अयं पितेति पितृत्वेन कारणम् । एते ब्रह्माद्याः यत्र ह क्व च यत्किञ्चित्पुत्रस्य नामादि तत्पितुर्भवति । यत्र वा पितुः यत्किञ्चिन्नामादिकं पितुर्भवति । तत् पुत्रस्य वै । एतत् एतेन । तद्देवानाम् अम्नामवत्वमुक्तं भवति । ऐतरेयो महिदासः विद्वान् तदेतदाह स्म वै । आ अहं मां देवेभ्यः आदिवपर्यन्तं व्याप्तिमन्तम् इति शेषः । आ वेद सम्यग्जानाति । ओमत् आ उ मत् देवान् देवोन्मत् आमतृपर्यन्तं व्याप्तिमन्त इति शेषः । वेद उ जानाम्येव । ते देवाः ईतः प्रधानाः मद्दत्तपदादिमन्तः । इतः सम्भृता हि । मत्तो भरणवन्तः मयैव पुष्टिमन्त इति । अस्माद्धेतोः तेषामम्नामेत्यर्थः । स एष भगवान् गिरिः

सर्वस्य गिरणात् संहरणात् गिरिः । सर्वदर्शनात् चक्षुः । सर्वश्रोतृत्वात् श्रोत्रम् । सर्वमन्तृत्वात् मनः । सर्ववक्तृत्वात् वाक् । सर्वप्रणेतृत्वात् प्राणः । तमेनं गिर्यादिनामानं गुणपूर्णत्वात् सर्वस्य गिरणाच्च ब्रह्मगिरिरित्याचक्षते । यो भगवन्तमेवं वेद स भ्रातृव्यं भ्रातृवत् सहस्थितं द्विषन्तं पापं गिरति नाशयति । अस्य एव उपासकस्य भ्रातृव्यः शत्रुः द्विषन् पाप्मा पापी पराभवति । तमस्यन्धे पतति । स एष भगवान् असनान् निरसनाद् असुनामा । स एष प्रकृष्टानन्दरूपत्वात् प्राणः । ज्ञानैश्वर्यादिभूतिदातृत्वात् भूतिः । अज्ञानादि-अभूतिप्रदातृत्वात् अभूतिः । ते बभूवुः ज्ञानैश्वार्यादिमन्तो अभूवन् । तस्मात् एतस्मादेव हरिणा एतर्हि । इदानीमपि सुप्तः सुप्तेषु स्थितो मुख्यवायुः भूर्भूरित्येव भूतिर्भूतिरित्येव प्रश्वसिति । श्वासैः स्तौति । पराबभूवुः । ज्ञानैश्वर्यादिहीनाः य एवं भगवन्तं सुरासुराणां भूत्यभूतिदं वेद । अस्य द्विषन् पाप्मा आत्मना परमात्मना तत्प्रसादेन । स एष भगवान् मारकत्वान्मृत्युः । मोक्षदत्वादमृतनामा । जीवनप्रदत्वाच्चामृतम् । स्वधया आनन्दरूपिणा गृभीतः नियतः प्राङ्ङेतीति प्राङ्शब्दवाच्यः । प्राणो मुख्यवायुः अपानेति । अपाङ्शब्दवाच्येन अपानेन संयुतः । अपागवाक् प्रागूर्ध्वम् उपर्येति । गच्छति । प्राणस्तूर्ध्वं गच्छति । अपानस्त्ववागेतीत्यर्थः । अमर्त्यः मरणरहितः । मर्त्येन शरीरेण सयोनिः सहितो वर्तते । यावन्मोक्षमिति शेषः । ततौ वायुस्तद्देहश्च शश्वद्विद्यमानौ आविमोक्षं वियन्ता ईदृशौ विषूचीना विषूचीनौ नानागती विरुद्धगमनावित्यर्थः । मोक्षसमये । एतदुपपादयति । अन्यं देहं निचिक्युर्ददृशुः। अन्यं वायुं न निचिक्युः न ददृशुः इति मन्त्रार्थः । उपनिषदेतन्मन्त्रपदान् प्रत्येकमनूद्य तात्पर्यमाह क्रमेण । अपाङ् प्राङ्ङेतीत्यादिना । इदं सर्वं मर्त्यशरीरम् एतेन प्राणेन एषा वायुदेवता [१]अमृता । अमर्त्यपदविवरणमेतत् । इमानि शरीराणि मोक्षसमये वायुत्यक्तशरीराणि निचिन्वन्ति ह वै । पश्यन्ति वै । एषा देवता अमृतैव । यस्मात् तस्मात् अमुक्तैर्नैव दृश्यते इति तात्पर्यार्थः । य एवं वेद स अमुष्मिन् लोके विष्णुलोके अमृतो मुक्तो भवति । अमृतः सन् सर्वेभ्यो भूतेभ्यः मुक्तसर्वभूतैः ददृशे ॥ ८ ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायाम् ऐतरेयभाष्यटीकायां द्वितीयप्रघट्टके प्रथमोध्यायः ॥

---

१. वायुरनिलममृतम् - इति ईशावास्ये ।

# द्वितीयोऽध्यायः

ऐतरेयोपनिषत्

हरिः ॐ ॥ एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं स इदं सर्वं मध्यतो दधे यदिदं किञ्च स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव सन्तं प्राणो वै गृत्सोऽपानो मदः स यत्प्राणो गृत्सोऽपानो मदस्तस्माद्गृत्समदस्तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तं तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तं तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षत एतमेव सन्तं स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥ १ ॥

भा— ॥ ॐ ॥ एष नारायणो देवो वायुना सहेमं लोकमभ्यार्चत् । ब्रह्मादिशरीरेषु प्रविवेश । [१]पुरुष इत्यन्तर्यामिरूपस्याख्या पुरि शेत इति ।

१. अन्तःस्थः पुरुषो नाम ज्ञानदः सर्वदेहिनाम् ।
बहिस्थ ईश्वरो नाम ज्ञानादिफलदो हरिः ॥ इति मात्स्ये ।
पुरुषाख्यो हृद्गतस्तु विष्णुर्जीवविबोधकः ।
फलदात्रा तु बाह्येन य ईशेन भिदां वदेत् ॥
तथैवान्यस्वरूपेषु विष्णोर्यो भेददर्शकः ।
यश्च जीवेष्वराभेदं पश्येत् तेऽनर्थभागिनः । इति ब्राह्मे ।
- इति भागवततात्पर्यनिर्णये (११/१२/१२)

प्रसिद्धत्वाच्च पञ्चरात्रेषु । य एष सूर्यमण्डले स्थित्वा तपति स भगवान् नारायणः । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेदे'-त्यादिश्रुतिभ्यः । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्युक्त्वा 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्युक्तत्वान्न शिवादयः । शिवो हि विरूपाक्षः । प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान्नारायणः । यमादित्यो न वेदेत्युक्तत्वान्नादित्यः । 'भेदव्यपदेशाच्चान्य'[१] इति भगवद्वचनम् ।

वृत्रं[२] यदिन्द्र शवसाऽवधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ।
यत्सूर्यस्य हरितः पतन्तीः पुरस्सतीरुपरा एतसे कः ॥
सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतस्सूर्यमारोहयो दिवि ।
चन्द्रमा मनसो जातश्चक्षोस्सूर्यो अजायत[३] ।
यस्सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः[४] ।
उद्वेति प्रसवीता जनानां महान्केतुरर्णवः सूर्यस्य ।
येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च ॥
यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ।
तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः ।
इत्यादौ सूर्यस्य सर्वत्र पराधीनत्वावगतेश्च ।
ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः[५] ॥
इति नारसिंहपुराणे ।

तापनी पाचिका चैव शोषणी च प्रकाशनी ।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य सा ॥ इति पाद्मे ।

---

१. ब्रह्मसूत्रम् (१/१/२१)
२. आवृतेरेव वृत्राणि - इति ऋग्भाष्ये (१/४/३)
३. ऋ. १०/९०/१३
४. ऋ. २/१२/७.
५. अ. ६२, श्लो. १७

यदादित्यगतं तेजो जगत्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्[१] ॥ इति च ।

न च विष्णोरन्याधीनत्वं श्रुतिषूक्तं कुत्रचित् । उत्पत्तिस्तु प्रादुर्भावापेक्षया । 'एको नारायणा आसीन्न ब्रह्मा न च शङ्कर' इति महाप्रलये तस्यैवावस्थानश्रुतेः । [२]'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधामि'ति ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वं [३]'मम योनिरप्स्वं१तः समुद्रे ततो वितिष्ठे भुवना नु विश्वा परो दिवा पर एना पृथिव्येत्याह । [४]'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं सुवे पितरमस्य मूर्धन्नि'ति ब्रह्मरुद्रयोर्देव्यास्सकाशात्सृष्टिसंहारौ चोक्तौ ।

अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः[५] ।
विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्

इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च । 'तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षँल्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः' इत्यादिना शिवादिसर्वदेवोपास्यस्य वायो'रयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति मध्यमशब्दोक्तस्य 'प्राणः स्थूणे'ति प्राणशब्दोदितो नारायण आश्रय उक्तः । तस्मात्सर्वोत्तमो भगवान् नारायणः प्राणशब्दोदित आदित्यमण्डलस्थस्तपतीत्यादि सिद्धम् ।

क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च ॥
शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।
मुक्ता उक्ताः शतगुणा बलज्ञानसुखादिभिः ॥

---

१. गीता (१५/१२) २. ऋ. १०/१२५/५ ३. ऋ. १०/१२५/७
४. ऋ. १०/१२५/६ ५. ऋ. ७/४०/५

विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः ।
तस्माद्रमा ततो विष्णुरनन्तगुणतोऽधिकः ॥
नित्यमुक्तः स्वतन्त्रश्च न चान्यस्तादृशः क्वचित् ।
कुत एवाधिकोऽन्यः स्याद्यन्मुक्ता अपि तद्वशाः ॥
रमाऽपि तद्वशा नित्यं स नान्यस्य वशे प्रभुः ।
न भेदः शेषशिवयोः सुपर्णः शेषसंमितः ॥
कामः शक्रसमो नित्यं प्रतिबिम्बाश्च ते क्रमात् ।
– इति (इत्यादि) च महासंहितायाम् ।

स पुरुषेषु शतवर्षं गत इति शतर्चिनामा । बहुरूपत्वाद्बहुवचनम् । एतमेव तथासन्तं मुख्यत आचक्षते । ऋषींस्तूपचारतः । आत्मन उदरे धृतवान् मध्ये स्थित्वा धृतवांश्च ।

प्राणस्थः प्राणनामाऽसावपानेऽपाननामकः ।
नेतृत्वाच्चापनेतृत्वाद्भगवान्पुरुषोत्तमः ॥ इति च ।
वामो भद्रः ॥ १ ॥

टी— एष इमं लोकमभ्यार्चदिति खण्डं व्याचष्टे । एष नारायण इत्यादिना । एष तपतीत्येतद्योजयति । य एष सूर्यमण्डल इति । भगवतः सूर्यमण्डलस्थितत्वे प्रमाणमाह । य आदित्य इति । अन्तरो विलक्षणः अस्यां श्रुतौ कस्यचित् सूर्यस्थितत्वमुच्यते । न तु तस्य विष्णुत्वम् । असौ शिवादिः किं न स्यादित्यतस्तस्य विष्णुत्वे प्रमाणमाह । य एषोंऽतरिरिति । य एष आदित्ये हिरण्मय इत्यत्र आदित्यः प्रतिपाद्यः किं न स्यादित्यत आह । यमादित्य इति । विष्ण्वादित्ययोरैक्यात् विष्णुरेवायं नादित्य इत्युक्तिः कथमित्यत आह । भेदव्यपदेशादिति । सूर्यादीनां विष्ण्वधीनत्वाच्च न तेनाभेद इति वक्तुं तदधीनत्वे प्रमाणान्याह । वृत्रं यदिन्द्रेत्यादिना । हे इन्द्र परमैश्वर्यादियुक्त भगवन् । शवसा सुखेन । अहिं शत्रुम् । वृत्रम् । अवधीर्यत् आत् इत् अस्मादेव हेतोः । दृशेः दर्शनाय सूर्यं दिवि आरोहयः न्यदधाः । पुरः पूर्वं हरितः दिशः पतन्तीः सतीः निर्दोषाः सूर्यस्य ऋचः उपराः

उपरिवर्तमानाः एतसे ज्ञानाय अकः अकरोः । इन्द्रस्य जठरे सीदन् वर्तमानः सूर्यं दिवि आरोहयो यतः अतः नृभिः कनिक्रदत् अकारयः । कर्माणीति शेषः। जजान जनयामास । जनासः । हे जनाः । स इन्द्रः यः जनानां प्रसवीता प्रसविता । अरं नवः अर्णवः सूर्यस्य केतुः आश्रयः । उद्वेति उदेति वै । येन हरिणा वृतं खं दिवं महीं च । आदित्यः येन यत्प्रेरणया यत्तेजसा तपति । तप सन्तापे । भ्राजसा दीप्त्या । तपति प्रकाशयति । वयन्ति जानन्ति । तदक्षरे तस्मिन्नक्षरे प्रजाः । श्रिताः इति शेषः । एताः पञ्चदेवताः तं भगवन्तं परि परितो म्रियन्ते । तदधीनगतयो भवन्तीत्यर्थः । सूर्यमण्डले स्थितत्वं नारायणस्य स्मृत्याऽपि साधयति । ध्येय इति । सूर्यस्य भगवदधीनत्वे स्मृती आह । तापनीति । विष्णोरपि सूर्यादिवदन्याधीनत्वशङ्कां निवारयति । न चेति । ननु विष्णोरप्युत्पत्तिश्रवणात् उत्पत्तिमतश्च पराधीनत्वात् कथं विष्णोरपराधीनत्वमित्यत आह । उत्पत्तिरिति । तस्यैवावस्थानश्रुतेर्न विष्णो-रुत्पत्तिरिति भावः । ब्रह्मादीनां रमाधीनत्वात् रमायाश्च विष्ण्वैकाधीनत्वोक्तेर्न विष्णोरन्याधीनत्वमित्याह । यं कामय इत्यादिना । ततो भगवत्सकाशात् विश्वा भुवना भुवनानि वितिष्ठे । अधितिष्ठामि । उतामूं द्यां वर्ष्मणोपस्पृशामि अमूं द्याम् उत द्यामपि वर्ष्मणा देहेन उपस्पृशामि । अहमेव वात इव प्रवाम्यारभमाणा । भुवना नु विश्वा । अहमेव वात इव प्रवामि । व्याप्नोमि । विश्वा भुवना नु आरभमाणा कुर्वन्ती मत्कारणं परमात्मा दिवा दिवः परः । एना पृथिव्या अस्याः पृथिव्याश्च परः । अहं तु महिना महिम्ना एतावती परिमिता । सम्बभूव । रमेति शेषः । वाक्यान्तरेणापि ब्रह्मरुद्रयो रमा-धीनत्वमाह । अहं रुद्रायेति । शरवे हिंसकाय ब्रह्मद्विषे ब्रह्मणः पञ्चममुखच्छेत्रे । हन्तवा वु हन्तुमेव न तु भीषयितुम् । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सकलजीवोत्तमत्वेन सुवे । अजंनयं मम योनिः कारणं समुद्रे अप्स्वन्तः तिष्ठतीति शेषः ॥ मीळ्हुषः भक्ताभीष्टवर्षकस्य समर्थस्य वा एषस्य आसमन्तादीशस्य अस्य विष्णोर्देवस्य हविर्भिः प्रभृते प्रभरणे पूजने कृते सति । वयाः बन्धको रुद्रः । महित्वं रुद्रसम्बन्धिमहिमानं रुद्रपदमिति यावत् । विदे हि लेभे हि । हे अश्विनौ युवामपि इरावद्वर्तिः अन्नवद्वर्तनं पदं यासिष्टं प्राप्तवन्तौ । इत्यादिना रुद्रादीनां भगवदधीन-

पदप्राप्तिमत्वात् विष्णोरेवापराधीनत्वं नान्येषामिति भावः । प्राणो ह्येष य एष तपतीत्यत्र प्राणशब्दो विष्ण्वावेव मुख्य इत्युपपादयति । तमेता इत्यादिना । अक्षितयः नाशरहिताः रुद्रपर्जन्यादित्याग्नीन्द्रपृथिवीद्युसंज्ञकाः सप्तदेवताः उपतिष्ठन्ते सेवन्ते । तं प्राणम् । अक्षन् अक्षिणि । तद्यास्ता इमा लोहिन्यो राजयः रेखाः । ताभिः तत्र स्थितो रुद्रः । एनम् अक्षिस्थम् । मुख्यवायुम् । अन्वायत्तः सेवते । प्राणः प्राणनामा हरिः । स्थूणा बन्धनाश्रयस्तम्भ इति सर्वजीवानां तारतम्यमुक्त्वा विष्णोः सर्वाधिक्यकथनान्न तस्यान्याधीनत्वमिति भावेन आह । क्षितिपा इत्यादिना । कर्मदेवाः कार्तवीर्यादयः । भेदो विशेषः । तं यच्छतं वर्षाण्यभ्यार्चदिति वाक्यं व्याचष्टे । स इति । एतमेव सन्तमित्येतद्विवृणोति । एतमेव तथा सन्तमिति । शतर्च्यादिनाममुख्यार्थ-तया सन्तं शतर्च्यादिनामभिराचक्षते । स यदिदं सर्वं मध्यतो दध इत्यस्यार्थद्वयमाह । आत्मन इति । प्राणो वै गृत्सो अपानो मद इत्यत्र प्राणापानशब्दार्थमाह । प्राणस्थ इति । अयं वै नः सर्वेषां वाम इत्यत्र वामशब्दार्थमाह । वाम इति ।

एष नारायण इमं लोकं ब्रह्मादिशरीरम् अभ्यार्चत् प्रविवेश । पुरुषरूपेण अन्तर्यामिरूपेण यः सूर्ये स्थित्वा तपति स एष प्राणो वा व सूर्ये स्थित्वा तपन् प्राणनामा भगवान् वै । तद्ब्रह्मादिशरीरमभ्यार्चत् प्राणो ह्येष य एष तपतीत्यनेन तपन् प्राणनामा हरिरेव न तु सूर्य इत्यर्थः । तं ब्रह्मादिदेहं शतवर्षाण्यभ्यार्चत् यत् यस्मात् तस्मात् पुरुषायुषः शतं वर्षाणि भवन्ति । तं शतं वर्षाण्यभ्यार्चदिति यत् यस्मात् । तस्मातच्छतर्चिन इति भगवन्तमाचक्षते । बहुरूपत्वात् बहुवचनम् । स नारायण इदं सर्वं मध्यतो दधे मध्ये स्थित्वा । आत्मना उदरे स्थापयित्वा च दधे । प्राणः प्राणस्थः प्राणनामाऽसौ गृत्सः अपानः अपानस्थोऽपाननामा असौ मदः मदनामा गृत्सश्चासौ मदश्चेति । वामो भद्रः वामश्चासौ देवश्चेति वामदेवः ॥ १ ॥

ऐतरेयोपनिषत्

एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्ता एष बिभर्ति यद्बिभर्ति तस्माद्भरद्वाजस्तस्माद्भरद्वाज इत्याचक्षत एतमेव सन्तं तं देवा अब्रुवन्नयं

वै नः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठस्तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तं स इदं सर्वमभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभिप्रागाद्यदिदं किञ्च तस्मात्प्रगाथास्तस्मात्प्रगाथा इत्याचक्षत एतमेव सन्तं स इदं सर्वमभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तं सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च तस्मात्क्षुद्रसूक्तास्तस्मात्क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तं सूक्तं बतावोचतेति तत्सूक्तमभवत्तस्मात्सूक्तं तस्मात्सूक्तमित्याचक्षत एतमेव सन्तमेष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक्तस्मादृगित्याचक्षत एतमेव सन्तमेष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत स यदेभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत तस्मादर्धर्चस्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तमेष वै पदमेष हीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि तस्मात्पदं तस्मात्पदमित्याचक्षत एतमेव सन्तमेष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तं ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् ॥ २ ॥

भा— वसिष्ठो वसतामुत्तमः । अभ्यपवयत पावयामास संसारात् । तद्विष्णवाख्यं ब्रह्म सूक्तान्यवोचतेति सूक्तनामकमभवत् । बतेत्यास्वादने। स्वात्मनैव स्वयं सुष्टूक्तमिति वा । इदं सर्वं परिपूर्णं सन्नहमल्पप्राणिषु प्रविश्य सूक्ष्मरूपो महाप्राणिषु महारूपश्च भवानीति स भगवानब्रवीत् । तस्मात्क्षुद्रोऽसानीत्युक्तत्वात्क्षुद्रसूक्तास्ते क्षुद्रप्राणिषु स्थिताः । भगवद्रूपसञ्ज्ञाः । महानसानीत्युक्तत्वान्महासूक्ता महाप्राणिषु

स्थिताः । सूक्ष्मरूपत्वादेव क्षुद्रनाम भगवतः । न तु सामर्थ्याल्पत्वात् । न हि सामर्थ्यादिगुणेषु कश्चिद्विशेषो भगवद्रूपेषु । एभ्यः प्राणिभ्यो गतवानित्यृक् । गच्छति हि मरणकाले । 'ब्रह्मणा सम्परीत्यक्तो मृत इत्युच्यते बुधै''रिति[1] हि भारते ।

[2]म्रियमाणमिमं जीवं वासुदेवादिदेवताः ।
त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् ॥
गतैर्भागैरपि पुनर्विशेयुर्भोगसिद्धये ।
भोग्यलोकमनुप्राप्तं तस्मात्स्वप्नवदन्तरा ॥ इति च ।

अर्च गतिपूजनयोः ऋ गताविति धातोः । सर्वेभ्योऽर्थेभ्यः स्थानेभ्यः शरीरेभ्यो गतवानित्यर्धर्चः । (सर्वाणि भूतान्यपादि । पद गतौ । तस्मात्पदं नाम ।) अधिकं क्षरतीत्यक्षरम् । क्षरणं नाम सन्ततदानम् । क्षर विनाशसन्ततदानयोरिति धातोः । एवमृषिषु शब्देषु च व्यवह्रियमाणानि सर्वाणि नामानि विष्णोरेव मुख्यतः । किमु देवतानामानि ।

'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवना यन्त्यन्या' ।
'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' ।
'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' ।
'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'

इत्यादि श्रुतिभ्यः । न केवलमृष्यादीनां नाम भगवतः सर्वे वेदा अपि तस्यैव नामानि । किमु च वेदाः । समुद्रमेघवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि[3] । एकमेव

---

१. आश्रमेधिके (...)

२. मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च ।
भागतो भागतस्त्वेनमनुमच्छन्ति सर्वशः ॥ इति सूत्रभाष्ये (३/१/४)

३. गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एव..... ।
दध्नो मथनशब्दश्चाप्यन्तर्नादस्वरूपतः ।
भीषकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे ।

व्याहरणम् । एकप्रकारमेव नाम निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता । प्राणे नारायण एव । नारायणविषय एव व्याहारः । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति । प्राणे नारायण एवेति विद्यात् । उक्तं च बृहत्संहितायाम् (व्यवहारः) –

हुंकारेण सहैवाब्धिः सर्वाभिभवशक्तताम् ।
विष्णोर्वक्ति यतो हुं च हि पराभिभववाचकः ॥
ओमिति स्वरते नित्यं वायुर्मेघेषु संस्थितः ।
बलवन्नादसंयुक्तो ह्याधिकोच्चत्वमस्य तु[1] ॥
ॐकारस्यार्थ उद्दिष्ट उक्तार्थाधिक्यमेव च ।
नादो बली प्रवदति तथा भेरीध्वनिः प्रभोः ॥
अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः ।
तदपेक्षयाऽन्यनीचत्वं घण्टाद्याः स्वरितात्मकाः ॥
उच्चस्थितिमुदात्तस्तु स्वर्णचंच्वादिकः स्वरः ।
विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः ।
एकप्रकारतां विष्णोः सदाचाल्यां वदत्यपि ॥
इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम् ।
वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा ॥
मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत् ।
तेन मार्जार उद्दिष्टो मोषणान्मूषको हरिः ॥

---

गजबृंहितमप्येवं धिक्कारसहितं वदेत् ।
स्वरितेन समायोगाद्धिक्कृतौ स्वरितो यतः ।
महामन्त्रजलाद्यैश्च युक्तमेतादृशं वदेत् ।
पादभूषा च धिक्कारं तत्कृतं स्वरितो वदेत् ।
अद्भुतत्वं हरेर्वक्तिपिङ्गाकण्ठगशब्दवत् ।
तामेवाद्भुततां वक्ति गृहगोधा परापि च' इति शब्दतत्वे ।

१. नदीसमुद्रघोषाश्च नादत्वच्छ्रैष्ठ्यवाचकाः ।
नादो हि श्रैष्ठ्यवाची स्यादेवं घोषाः परेऽपि च ॥ इति च कर्मनिर्णये ।

वर्षणाद्वृष उद्दिष्टो बलनाद्बलिनामकः ।
तारणात्तृणनामाऽसावित्याद्येकोऽभिधीयते ॥
सर्वनामापि भगवान्सर्वशक्तिश्च सर्ववित् ।
ब्रह्मरुद्रादिजीवेभ्यो जडेभ्यः श्रिय एव तु ॥
व्यतिरिक्तः सदानन्तसान्द्रानन्दैकरूपकः ।
तस्यैव मुख्यनामानि [१]समाकृष्येतरेष्वपि ॥
उपचारात्प्रवर्तन्ते व्यवहारप्रसिद्धये ।
तथैव सर्वनामानि प्रवर्तन्ते च मारुते ॥
न तावन्मुख्यवृत्त्यैव मुख्यतोऽन्यव्यपेक्षया ।
मुख्यतः सर्वनामा तु विष्णुरेको न चापरः ॥
तस्मात्प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः ।
अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते ॥
वायुश्च सूर्यसंस्थः संस्तपत्येतज्जगत्रयम् ।
आज्ञयैव हरेर्वायोः शक्त्या सूर्यस्तपत्ययम् ॥ इत्यादि च ।

न प्रसिद्धसूर्यस्येयं तापनशक्तिरिति ज्ञापयितुं प्राणो ह्येष य एष तपतीत्युक्तम् । 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति श्रुतिः । प्राणशब्दश्च मुख्यतो विष्णौ प्रवर्तमानोऽपि वायावपि वर्तते । अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति । 'प्राणस्य प्राणः' इति श्रुतेरुभयोरपि प्राणशब्दः प्रसिद्ध एव । 'अयं वाव शिशुर्योऽयं मध्यमः प्राण' इति वायोर्विशेषणादुत्तमप्राणो विष्णुरिति च सिद्धम् ।

द्वावात्मानौ हि वेदेषु द्वौ प्राणौ द्वौ च चेतनौ ।
अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ ॥

---

१. सर्वशब्दानां परमवाचकत्वे कथमन्यत्र व्यवहार इत्यतोऽब्रवीत्-
ॐ समाकर्षात् ॐ
परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते ॥
परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।
व्यवह्रियन्ते सततं लोकवेदानुसारतः इति हि पाद्मे ॥
इति ब्रह्मसूत्रभाष्यम् (१/४/१६)

तदन्ये चेतनास्सर्वे प्राणाश्चात्मान एव च ।
अज्ञानाभिभवस्पृष्टास्तस्मात्ते ह्यधमाः श्रुताः ॥
मध्यमो वायुरेवैक उत्तमः केवलो हरिः ।
सर्वशब्दोदितौ तस्मादेतौ द्वावेव नःपरः ॥
अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित् ।
श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ॥
तस्मादमितनामानावपि तौ मितनामवत् ।
श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः ॥
अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ।
पृथङ्नामानि यस्मात्तद्गुणानेव प्रचक्षते ॥ इत्यादि ब्रह्माण्डे ॥ २ ॥

टी— एष उ एव बिभ्रद्वाज इत्येत्खण्डं व्याचष्टे । वसिष्ठ इत्यादिना । वसतामुत्तमो वसिष्ठः । स इदं सर्वमभ्यपवयतेत्यत्राभ्यपवयतेत्यस्यार्थो । पावयामासेति । सूक्तं बतेत्येतद्व्याख्याति । तद्विष्णवाख्यमिति । अस्यैवार्थान्तरमाह । स्वात्मनेति । सोऽब्रवीदहमिदं सर्वमसानीत्येतद्विवृणोति । इदमिति । असानि भवानि । एष वा ऋगित्यत्र ऋक्शब्दार्थमाह । एष इति । अन्तरा मध्ये मध्ये मरणानन्तरं योग्यलोकप्राप्तिपर्यन्तं स्वप्नवदस्यावस्थानमिति शेषः । ऋगित्यत्र अर्चतेत्यत्र च ऋगर्चनशब्दयोः विवक्षितार्थे धातुमाह । अर्चेति । एष वा अर्धर्च इत्येतद्विवृणोति । सर्वेभ्य इति । एष वा अक्षरमित्यत्र अक्षरपदार्थमुक्त्वा धातुमाह । अधिकमिति । एतत्खण्डफलितार्थमाह । एवमिति । ऋषिषु शतर्च्यादिषु । शब्देषु सूक्तादिषु । ता वा एताः सर्वा ऋच इत्येतद्व्याचष्टे । न केवलमित्यादिना । यथायोग्यं यः शब्दो यदर्थपरतया भगवति योजयितुमुचितः तथा यथायोग्यमित्युक्तार्थं विवृणोति । उक्तं चेति । हुं हुं इति शब्दः । वायुर्मेघेषु संस्थितः । बलवन्नादसम्युक्तः ॐ इति स्वरते । ॐकारस्य चास्य विष्णोरधिकोच्चत्वमर्थ उद्दिष्टः । बली नादश्चोक्तार्थाधिक्यमेव प्रवदति । तथा भेरीध्वनिः । अनुदात्तस्वररूपत्वात् प्रभोरीशितुरौदार्यं वदति । स्वर्णचञ्चुः स्वर्णतुण्डः । मोषणात् स्तेयात् । आच्छादनादित्यर्थः । प्राण एव इत्यत्र प्राणशब्दो विष्णवावेव मुख्य इत्याह ।

तस्मादिति । सर्वशब्दानां मुख्यतो विष्णुपरस्योक्तत्वादित्यर्थः । अन्यव्यपेक्षया रुद्राद्यपेक्षया । यत एवं प्राणशब्दस्य विष्णुवाय्वोः मुख्यवृत्तिः तस्मात् प्राणो ह्येष य एष तपतीत्यत्रापि प्राणशब्दो विष्णुवायुपर इत्याह । वायुश्चेति । च शब्दो विष्णुसमुच्चयार्थः । य एष तपतीत्यत्र सूर्य एव किं न स्यादित्यत आह । नेति य एष तपतीत्युक्त्वा पुनः प्राणो ह्येष य एष तपतीत्युक्तत्वात् तपनशक्तिः प्राणस्यैव न प्रसिद्धसूर्यस्येति ज्ञायते । सूर्यस्य प्राणाधीनत्वे प्रमाणमाह । प्राणाद्धेति । उभयोरपि प्राणशब्दवाच्यत्वे प्रयोगं दर्शयति । प्राणस्य प्राणमिति तर्हि प्राणशब्दस्य साधारणत्वं स्यादित्याशङ्कां परिहरति । अयं वा व शिशुरिति । विशेषणात् मध्यमत्वेनेति शेषः । मध्यमः प्राण इत्युक्त्या प्राणत्रयं प्रतीतम् । तत्प्रमाणेन विविच्य दर्शयति । द्वाविति । मितैः कतिपयैः ।

एष उ एव बिभ्रद्वाजः । बिभ्रद्वाज इत्युच्यते । तदुपपादयति । प्रजा वै इति । प्रजाः वाज इत्युच्यते । अभि प्रागात् प्राप्नोत् । प्रागायदिति वा । अभ्यपवयत पावयामास । स भगवान् अब्रवीत् । सर्वं पूर्णम् अहं यत् क्षुद्रं यन्महत् इदं सर्वम् अस्मिन् असानि । क्षुद्रेषु च महत्सु वा भवामि । स्थित इति शेषः । इति एवमुक्तत्वात् ते भगवद्रूपसङ्घाः क्षुद्रसूक्ता महासूक्ताश्च क्षुद्रसूक्तमहासूक्तनामानः अभवन् । तस्मात् क्षुद्रोऽसानीत्युक्तत्वात् क्षुद्रसूक्ता इत्याचक्षते । वैदिका इति शेषः । महत्सु स्थित्वा महानसानीत्युक्तत्वान्महासूक्ताः इत्याचक्षते । इत्यस्याप्युपलक्षकमेतत् सूक्तम् । बतावोचतेति सूक्तम् । सुष्टुवचनम् अब्रवीत् अवोचत इति । अस्माद्धेतोस्तद्ब्रह्म सूक्तनामकमभवत् । बतेत्यास्वादने । ऋच्छतीति । गच्छतीति ऋक् । एभ्यः प्राणिभ्यः अर्चत गतवान् अगादिति यत् । तस्मात् ऋक् । एष वाऽर्धर्चः । अर्धर्चनामा । ऋगतौ अर्चगतिपूजनयोः । एभ्यः सर्वेभ्यः अर्धेभ्यः आसमन्तादृद्धेभ्यः स्थानेभ्यो ब्रह्मादिशरीरेभ्यः । अर्चतेत्यर्धर्चः । एष वै पदं एष हीमानि सर्वाणि भूतानि पादि अपादि । पदगतौ । तस्मात् पदं पदं नाम एषोऽक्षरं वै सर्वेभ्यो भूतेभ्यः क्षरन्ति ददाति । क्षर नाशसन्ततदानयोः । एनं भगवन्तं नातिक्षरन्ति । अस्मादधिकं न ददाति । तस्मादक्षरम् । अक्षरनाम । एकैव व्याहृतिः ।

एकप्रकारमेव नाम । सर्वेषां नाम्नां निर्दोषगुणपूर्तिवाचित्वात् । एकप्रकारत्वम् । सर्वशब्दानां कुत्रैकव्याहृतित्वं तावदाह । प्राण एव । प्राणनाम्नि नारायण एव । ऋचः ऋङ्मन्त्राः प्राण एव विशेषतः । प्राणवाचका इति विद्यात् । जानीयात् ॥ २ ॥

ऐतरेयोपनिषत्

विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषससाद स हान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे द्वितीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति स होवाच त्वामेव जानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच ॥ ३ ॥

भा— अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः । तदनन्तरं वायुविषयाश्च । तस्माद्बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नं तदाज्ञया वायोश्च । तस्मात्तच्छंसनेन भगवान्वायुश्चातिप्रीयेत इति दर्शयति - विश्वमित्रं ह्येतदहः शंसिष्यन्तमित्यादिना ।

वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये ।
महाव्रतं कर्म चक्रे हौत्रं चक्रेऽत्र कौशिकः ॥
भृगुरध्वर्युरभवद्ब्रह्म ब्रह्माऽभवत्स्वयम् ।
उद्गाता वायुरभवत्स्वयं नारायणः प्रभुः ॥

सादस्यमकरोत्तत्र तदन्येऽन्येऽपि चर्त्विजः ।
बृहतीसहस्रं शंसिष्यन्यदा सस्मार केशवम् ॥
वायुना सह देवेशस्तदा वासवमाविशत् ।
आविष्टो विष्णुनाथेन्द्रो वायुना सह कौशिकम् ॥
शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः ।
ऋक्साहस्रं शशंसाथ यज्ञाङ्गत्वेन भक्तितः ॥
तत् श्रुत्वा तुष्टिमगमत्केशवो वायुसंयुतः ।
द्वितीयवारं शंसेति प्राह तं च जनार्दनः ॥
प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत् ।
अतिप्रियत्वाद्भगवान्पुनरप्याह कौशिकम् ॥
तृतीयं च शशंसास्मै विष्णोरन्नं प्रकल्प्य तत् ।
ततोऽतितुष्टो भगवान्ददामि वरमित्यमुम् ॥
ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः ।
प्रादाद्द्वितीये सामीप्यं तृतीये पुनरेव च ॥
वरं ददानीत्युक्तः सन् मुनिः प्राह जनार्दनम् ।
सम्यक्त्वामेव जानीयामिति मोक्षे सुखोच्चताम् ॥
इच्छन्स्तं प्राह भगवानिन्द्रस्थो वायुसंयुतः ।
सर्वनामाहमस्म्येक इति ज्ञानं ममोत्तमम् ॥
यस्मात्सर्वगुणत्वं स्यात्सर्वनामत्व एव तु ।
न हि दोषाभिधायीनि विष्णोर्नामानि कानिचित्[१] ॥
अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि ।
सर्वोत्तमगुणात्मत्वात्सदा नारायणस्य हि ॥
सर्वोत्तमगुणानेव नामान्याचक्षते हरेः ।
यावज्ज्ञानेन मोक्षः स्यात्तावज्ज्ञात्वाऽपि कौशिकः ॥

---

१. विष्ण्वाधिक्यविरोधीनि यानि वेदवचांस्यपि ।
तानि योज्यान्यानुकूल्याद्विष्णाधिक्यस्य सर्वशः ॥ - इति म.भा.ता.नि. १/३६

अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये ।
जानीयां त्वामिति प्राह तस्मा आह स केशवः ॥
इन्द्राविष्टः प्राणनाम तथाऽन्याश्चाभिधाः प्रभुः ।
प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते ।
अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि ।
ततो वेत्तीति च त्वं स पूर्णत्वात्सर्वनामकः ॥
सर्वाणि बहुरूपत्वात्सर्वरूपेषु पूर्तितः ।
प्रभूतत्वाद्भूतनामा सर्वरूपप्रभूततः ॥
बहुरूपः स भूतानीत्युक्तो विष्णुस्सनातनः ।
सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते ॥
स एव सूर्यसंस्थः सन् लोकं तपति केशवः ।
सर्वनामवतस्तस्य ममान्नं मित्रमुच्यते ॥
अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा ।
साऽन्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च ॥
दक्षभागस्थितेनत्वाद्दक्षिणं नाम सोच्यते[१] ।
तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा ॥
यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा ।
वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् ॥

---

१. सदोत्तमः किन्तु यदा तु सा मे वामार्धरूपा दक्षिणानामधेया ।
यस्मात्तस्याः दक्षिणतःस्थितोऽहं तस्मान्नाम्ना दक्षिणेत्येव सा स्यात् ।
सा दक्षिणामानिनी देवता च सा च स्थिता बहुरूपा मदर्धा ।
वामार्धो मे तत्प्रविष्टो यतो हि ततोऽहं स्यामर्धनारायणाख्यः ॥
तदाऽप्यस्या उत्तमोऽहं सुपूर्णो न मादृशः कश्चिदस्त्युत्तमो वा ।
इत्येवावादीद्दक्षिणाभिः सहेति सर्वोत्तमत्वं दक्षिणानां स्मरन् सः ॥
ताभिश्चैताभिर्दक्षिणाभिः समेताद्वरिष्ठोऽहं जगतः सर्वदैव ।
मत्सामर्थ्यान्नैव चानन्तभागो दक्षिणानां विद्यते नारदेति ॥
- इति म.भा.ता.नि. २०/७१-७६

विश्वामित्रेण दृष्टत्वाद्वैश्वामित्रमितीर्यते ।
इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन्हरिः ॥
आदित्यसंस्थितो विष्णुस्तपन्नस्मीति चोचिवान् ।
त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः ॥
अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः ।
हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ॥
तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मया ।
द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः ॥
इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।
अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ ॥
प्राणो वा अहमित्यादि नामसन्दर्भमुक्तवान् ।
विशेषज्ञानसिद्ध्यर्थं नाम्नोक्तिः परात्मनः ॥
इन्द्राविष्टः कोऽयमिति शङ्कानुत्यर्थमेव च ।
तपन्नेवास्मीत्यवदत्तपन्तं वेद सोऽपि हि ॥
नारायणं सूर्यगतं गायत्र्योपासको हि सः ॥ इति ब्रह्माण्डे ।

उपनिषण्णमिन्द्रं दृष्ट्वाऽपि त्वामेव जानीयामिति वरस्वीकारादिन्द्रादेव चेन्द्राविष्टो भगवानत्रोक्त इति ज्ञायते । इन्द्रं तु जानात्येव हि विश्वामित्रः । भगवन्तमपि स्वरूपत आगतं जानात्येव[१] । विशेषज्ञानप्रार्थने प्राणो वा अहमस्म्यृष इत्यादिकमेव पूर्यते । एष तपन्नेवास्मीति व्यर्थम् । प्राणो ह्येष य एष तपतीत्युक्तत्वात् । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मीत्यादिनाऽप्याविष्टस्य विष्णुत्वं किञ्चिज्ज्ञायते । तथाऽप्येतेनेति तृतीयात्वात्करणत्वाशङ्का भवति । तस्य म इति वैयधिकरण्यमिति च । अतो भगवन्नामानि पृथगुक्त्वाऽहं

---

१. आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥
इत्यर्जुनोक्तिवत् (गी.११/३१) ज्ञातव्यम् ।

विष्णुरित्येष तपन्नेवास्मीत्युवाच । इन्द्रशरीरमेव पश्यतो विश्वामित्रस्य तर्कमात्रतो भगवानिति किञ्चिज्जानत इति ज्ञायते ।

न चेन्द्रस्य प्राणशब्दः सर्वशब्दाभिधेयत्वं च विद्यते । "अजस्य नाभावध्येकमर्पित"मित्युक्तस्य पद्मनाभस्य हि "यो देवानां नामधा एक एवे"ति सर्वदेवाभिधानत्वमुक्तम् । इन्द्रे हीन्द्रशब्दोऽपि न मुख्यतो वर्तते । परमैश्वर्याभावात् । इन्द्रशब्दोऽपि विष्णावेव वर्तते । स हि परमेश्वरः । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' इति श्रुतेश्च । 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मानि'त्यादि श्रुतेश्च । 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणी'त्यादिना विष्णुरेव हि यत्र प्रस्तुतः ।

नामानि विश्वाऽभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।
नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति[१] ॥

इति श्रुतिः । यो देवानां नामधा एक एवेत्यवधारणान्नान्यस्य सर्वनामत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव । श्रियो वायोरपि न नारायणादिनामवत्वम् । 'एको वासुदेवस्तत्सदृशपरौ न स्तः' इति श्रुतिः । 'एको नारायणस्तत्समो वाऽधिको वा नास्ती'ति च । 'येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा'[२] इत्युक्तस्य समुद्रशायिन एव नारायणस्य 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'ति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव । अतस्तदत्रोच्यत इत्यपि न वक्तव्यम् ।

[३]परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप इत्यादेश्च ।

---

१. सूत्रभाष्योदाहृता(१/१/१)भाल्लवेयश्रुतिः ।
२. तैत्तिरीयारण्यकम् (१०/१/१) ३. ऋ. ७/९९/१.

नकिरिन्द्र त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन् ।
नकिरेवा यथा त्वम्...

इत्याद्यपि सर्वनामकत्वात्तस्यैव । “किमेकं दैवतं लोके किं वाप्येकं परायणमि”त्यादिप्रश्नस्यापि

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रम्...[१]

इत्येव भारते परिहाराच्च । मेऽन्नं दक्षिणमित्युक्तत्वाच्च विष्णुरेवेति ज्ञायते । स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्याध्याये ।

दक्षिणाभिः सहैवैतन्मदधस्ताज्जगत्सदा ।
धन्याश्चर्योऽहमेवैको मित्रं मे दक्षिणा रमा ॥
इत्यवादीद्धरिर्भूपा धन्योऽसीत्युदितो मया[२] । इति नारदवचनम् ।

न च बृहतीसहस्राभिमानिनीं देवीं विना चेतनमात्रस्य मुख्यमित्रत्वं युज्यते ।

मिनोति त्रायते चेति मित्रमित्यभिधीयते ।
तस्माद्योऽयं विजानाति स मित्रं तस्य नान्यथा[३] ॥ इति भारते ।

---

१. महाभारते अनुशासनपर्वणि. अ.१४९. २. हरिवंशेषु (विष्णुपर्वणि अ-११०)
३. मित्वा त्रातीति मित्रोऽयम् - इति ऋग्भाष्ये ।

उक्थायुत्वाच्च विष्णुरेवात्रोक्त इत्यवगम्यते । बृहतीसहस्रं ह्युक्थनामकं मुख्यतः ।

महाव्रतनियुक्तं यदृक्सहस्रं हरेः प्रियम् ।
तदुक्थमिति सम्प्रोक्तं तेने यो विष्णुरेव हि ॥
तस्मादुक्थायुरित्युक्त ऐश्वर्यादिन्द्र उच्यते ।
तस्मादुक्थायुरिन्द्रेति विष्णुर्यज्ञेषु पूज्यते ॥ इति गारुडे ।

विष्णुर्ह्युक्थायुरिन्द्र इत्युच्यते । यज्ञेष्वन्य इन्द्रः पृथक्चोच्यते । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुरि'त्युक्त्वा 'तस्मै त्वा तेभ्यस्त्वे'ति भेदवचनाच्च । सत्य इति वायुः । ''सदिति प्राण'' इति श्रुतेः ।

सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ॥ इति शब्दनिर्णये ।

प्रियधाम्न उप समीपे गमनं नाम तद्धामप्राप्तिकारणभगवत्प्रसादप्राप्तिः । अन्यथोपशब्दो व्यर्थः स्यात् । न च तदैव भगवतः प्रियं धाम विश्वामित्रेण प्राप्तम् ।

बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः ।
द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तः पुरस्य च ॥
तथा स्वविषयं ज्ञानं विश्वामित्रे ददौ प्रभुः । इति च गारुडे ।

न चेन्द्रादिभिरैक्यमत्रोच्यते । 'प्राणस्तथाऽनुगमादि'ति[१] च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्त्वा 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्नि'ति[२] वक्तुः बृहतीसहस्रं शंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियत इति पक्षो निराकृतो हि भगवता सूत्रेषु ।

---

१. ब्रह्मसूत्रम् (१/१/१२८)	२. ब्रह्मसूत्रम् (१/१/२९)

अध्यात्मसम्बन्धशब्देनावेशो विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वन्तर्यामिरूपेण सम्बन्धोऽस्त्येव । अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः । अधिकात्मनः परमात्मनः सम्बन्धोऽध्यात्मसम्बन्धः । न हि स्वात्मना स्वस्य सम्बन्धो भवति । यद्यध्यात्ममात्रमत्रोच्यत इति विवक्षितं तर्ह्यध्यात्मभूमेत्येव स्यात्सम्बन्धशब्दो व्यर्थः । तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः । 'शास्त्रदृष्ट्या तूपदेशो वामदेववदि'ति[1] शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरस्थितत्वात्सर्वनामाभिधेयत्वं चोक्तम् अहं मनुरभवं सूर्यश्चेत्यादिवत् । न हि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र चाहं भूमिमददामार्यायेत्यादिनाप्रवृत्तिरेवोच्यते । न च वामदेवेन मन्वादिकर्म क्रियते कदापि । अतीतार्थश्चायं दृश्यते भूमिमददामित्यादिना । न हि पूर्वं वामदेवेन तानि कर्माणि कृतानि । भगवान्विष्णुर्हीन्द्राय भूमिमददात् । स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नवबोधसूरिनियमनादिभिर्मनुसूर्यादिसर्वनामा भवति । यदि भेदस्य पूर्वमेव मिथ्यात्वमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वादहं मनुरभवमित्यादिकं सर्वमनर्थकमेव भवति ।

जीवेश्वरभिदा चैव जीवभेदः परस्परम् ।
जडेश्वरभिदा चैव जडभेदस्तथैव च ॥
जडजीवभिदा चैव सत्योऽयं भेदपञ्चकः ।
न कदाचिन्निवर्त्योऽयं मुक्तौ संसार एव च (वा) ॥
य एतदन्यथा ब्रूयुस्ते हि यान्त्यधरं तमः । इति भविष्यत्पर्वणि ।
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी[2] ॥

---

१. ब्रह्मसूत्रम् (१/१/३०)　　२. गी. १६/८.

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः[१] ।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्[२] । इत्यादि च ।

न च प्राणो वा अहमस्म्यृष इत्यादावहमस्म्यादिशब्दोऽस्मच्छब्दार्थस्थः । एष तपन्नेवास्मीत्युपरितनस्य वैयर्थ्यात् । प्राणो ह्येष य एष तपतीत्युक्तत्वात् । अतोऽहमस्मीत्यादि च भगवन्नामैव । न च जीवैक्यवचनमत्र प्रस्तुतम् । ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एवेति सर्वनामाभिधेयत्वं भगवत उक्त्वा तत्रैव प्रमाणत्वेन विश्वामित्रं ह्येतदहरित्याद्याख्यायिकोक्ता । तस्मात्सर्वान्तर्यामित्वात्सर्वगुणत्वात्सर्वशक्तित्वाच्च सर्वनामवत्त्वमेव विष्णोरुच्यते न तु सर्वस्वरूपत्वम् । उक्तं च भारते–

स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात् ।
सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः ।। इति ।

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यमिति पुरुषेणैवेदं सर्वं व्याप्तं यद्भूतं यच्च भव्यम्, आ तृणादाकरीषात्सर्वं भगवानिति मिथ्यादृष्टिरेवे(षे)ति च श्रुतिः । हिरण्मयो ह वा अमुष्मिंल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद अमृतो ह वा अमुष्मिंल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद' स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्राम्यामुष्मिन्त्सर्मे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवदि'त्यादिना मुक्तानामपि भेदस्यैवोक्तेश्च ।

न हि भेदाभावे सर्वेभ्यो भूतेभ्यो ददृश इति युज्यते । न चामुक्तैः सर्वभूतैर्मुक्तो दृश्यते । एकत्वे तु ददृश इत्येतावता पूर्यते सर्वेभ्यो भूतेभ्य इति व्यर्थम् । न च तेषां पक्षे स्वयमपि स्वात्मानं पश्यति ।

१. गी. (१६/९) २. गी. (१६/२०)

कर्तृकर्मविरोध इति हि ते वदन्ति । अतः सर्वश्रुतिविरोध एव जीवेश्वरैक्याङ्गीकारे ।

न च कर्तृकर्मविरोधो नामास्तीत्यत्र किञ्चिन्मानम् । श्रुत्यनुभवसिद्धत्वाच्च स्वदर्शनादेः । न च तेषां पक्षे प्रज्ञेन सर्वज्ञेन परमात्मना सर्वकामावाप्तिर्नामाङ्गीक्रियते शरीरादुत्क्रान्तस्य ज्ञानिनः । तस्माद्वेदविरुद्धवादिन एव तेऽपि ।

न च शून्यवादिनः कश्चिद्विशेषो दृश्यते । न हि सर्वावाच्यं सर्वाज्ञेयं शून्यं चेति कश्चिद्विशेषः । केनापि शब्देनावाच्यस्य लक्षणायामपि प्रमाणं नास्ति । क्षीरमाधुर्यादयोऽपि तैरेव शब्दैरुच्यन्ते ।

विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् ।
गुडस्य पनसादीनां निर्हारीत्यभिधीयते[१] ॥ इति शब्दनिर्णये ।

न च सर्वगुणदोषक्रियाविनिर्मुक्तस्यास्तित्वमपि कुत्रचिद्दृष्टम् । अतः शून्यवादिन एव तेऽपि । "अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदती"त्यादिना प्रसादादिगुणाश्च भगवतो दृश्यन्ते । 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इत्यादिना कर्माणि च । "तस्मिन्देवाः श्रिताः सर्वे" इत्यादिगुणाश्च तत्रैवोक्ताः ।

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे[२] ॥
इति मुक्तानामपि तारतम्यं चोक्तम् ।

श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः ।
अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्ताश्च ये गणाः ॥

---

१. इति सूदशास्त्रे इति च तत्त्वप्रदीपे (१/१/११)

२. ऋ. १०/७१/७.

तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा ।
क्षीरसागरदध्नास्तु केचित्तिष्ठन्ति मुक्तिगाः ॥
उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् ।
ऐरे ह्रदे केचिदपि देवा एव परं हरिम् ॥
नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।
सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि' ॥ इति ब्रह्मसारे ।
यत्र ब्रह्मा पवमान छन्दस्यां ३ वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परिस्रव ॥
यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम् ।
तस्मिन्मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रव ॥
यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
यत्रानु कामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव[१] ॥

इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवोदेव्या अवरोधभूतानां सर्वदेवीनां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते । मुक्ताश्चात्रोच्यन्त इति प्रतीयते । अमृतङ्कृधीति वचनात् । अमुक्तानां स्वे स्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽवस्थानं देवानाम् । 'मुक्तः प्रतिज्ञानात्'[२] । 'सङ्कल्पादेव च तत् श्रुतेः'[३] । 'जगद्व्यापारवर्जम्'[४] । 'भोगमात्रसाम्यलिङ्गाच्च'[५] । 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्'[६] ।

१. ऋ. ९/११३/६-१०
२. ब्रह्मसूत्रम् (४/४/२)
३. ब्रह्मसूत्रम् (४/४/८)
४. ब्रह्मसूत्रम् (४/४/१७)
५. ब्रह्मसूत्रम् (४/४/२२)
६. ब्रह्मसूत्रम् (४/४/२३)

इत्यादि मुक्तसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । ग्राव्णा सोमे महीयत इति ब्रह्मणोऽन्यमुक्तैः पूज्यत्वं च प्रतीयते ।

न च सूत्रेषु निश्चितार्थस्यौपचारिकत्वं वक्तुं युज्यते । निर्णयात्मकत्वात्तेषाम् । अतिप्रसङ्गश्चोपचारादिकल्पने । 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैरि'ति[1] हि विनिश्चितानि ब्रह्मसूत्राणि ।

बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ॥ इति चादित्यपुरणे

न च निर्णायकानि भगवद्वाक्यन्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि कल्प्यम् । न च भोगरहिता मुक्तिर्नामान्याऽस्तीत्यत्र किञ्चिन्मानम् ।

भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।
तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ॥
विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः ।
न तु विष्णुगुणान्सर्वे भुञ्जते ते कदाचन ॥
बाह्यभोगान्भुञ्जते च तारतम्येन कांश्चन ।
विष्णोर्देहाद्बहिश्चापि निर्गच्छन्ति यथेष्टतः ॥ इति स्कान्दे ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च[2] ॥ इति भगवद्वचनम् ।

तस्मान्मुक्तैरपीज्यमानः सर्वस्माद्भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुणसम्पूर्णो नारायणः सर्ववेदादिषूच्यत इति सिद्धम् ॥ ३ ॥

टी— विश्वामित्रं ह्येतदहः शंसिष्यन्तम् इत्येतत् खण्डस्य सङ्गतिमाह । अन्यदेवतेत्यादिना । खण्डं व्याख्यातुमुपोद्घातमाह । वृत्रं हत्वेत्यादिना ।

---

१. गी. १३/५ २. गी. (१४/२)

तदन्ये मुक्तेभ्यो अन्ये । अवशिष्टा ऋत्विजः आसन् । खण्डं व्याचष्टे । बृहतीसहस्रमिति । सस्मार कौशिक इति शेषः । इन्द्र उपनिषससादे-त्यस्यार्थमाह । आविष्ट इत्यादिना । स ह्यान्नमित्यस्यार्थः । इदमन्नमिति । बृहतीसहस्रमित्यस्यार्थः । ऋक्सहस्रमिति । तेनेंद्रस्य प्रियंधामोपेयायेत्यस्य तात्पर्यमाह । तत् श्रुत्वेति । अनेन प्रियंधामोपेयायेत्यस्य भगवद्धाम-प्राप्तिसाधनभगवत्तुष्टिं प्रापेत्यर्थ उक्तो भवति । स वा ऋषे द्वितीयं शंसेत्यस्यार्थो । द्वितीयवारमिति । सहान्नमित्येवेत्यादेः तात्पर्यम् । विश्वामित्र इत्यादि । तृतीयं शंसेत्यस्यार्थः । पुनरप्याहेति वरं ते ददामीत्यस्यार्थो । ददामीति । शंसनत्रयस्य क्रमेणोक्तफलभेदमाह । प्रथमे त्वेवेति । प्रथमे शंसन इत्यर्थः । तृतीये शंसने अन्तःपुरप्रवेशमदादिति शेषः । पुनरेव वरत्रयप्रदानानन्तरं स होवाचेत्यस्यार्थो । मुनिः प्राहेति । तमिन्द्र उवाचेत्यस्यार्थः । तं प्राहेति । प्राणो वा अहमस्म्यृषे इत्यादेस्तात्पर्यमाह । सर्वनामेति । मम ज्ञानं मद्विषयं ज्ञानं कथमस्य ज्ञानस्योत्तमत्वमित्यत आह । यस्मादिति । सर्वशब्दवाच्यत्वे दोषशब्दानामपि सर्वान्तःपातित्वेन तद्वाच्यत्वे भगवतोऽपि दोषित्वं स्यादित्याशङ्कां परिहरति । नहीति । कर्हिचित् कुत्रापि नामानि विष्णोर्दोषा-भिधायीनि न किन्तु गुणाभिधायीन्येव हि । यस्मात् तस्मात् दोषशब्द-वाच्यत्वेऽपि न विष्णोर्दोषित्वप्राप्तिरिति भावः । एतच्च "स्वातन्त्र्यं तद्गतत्वं चेत्या[१]"दिनोपपादितं श्रीमदनुव्याख्याने । सामान्यवचांसि गुणसामान्य-वाचकान्यपि न । किन्तु सर्वाणि नामानि हरेः सर्वोत्तमगुणानेवाचक्षते । त्वामेव जानामीत्यस्याभिप्रायमाह । यावदिति । इन्द्राविष्टो जनार्दनः । स्वस्य प्राणनाम प्राण इति नाम तस्मै आह । तथाऽन्याश्चाभिधाः अहमस्मीत्याद्यन्यनामान्याह । प्राणादिनामार्थमाह । प्रकृष्टेत्यादिना । असनात् संहर्तृत्वात् । मिनुतेः ज्ञानादस्मि ततत्वात् वेत्तृत्वाच्च त्वम् । सर्वाणि भूतानीत्यत्र बहुवचनाभिप्रायमाह । सर्वाणि बहुरूपत्वादिति । सर्वशब्दार्थं बहुवचनार्थं चोक्त्वा समुदायार्थमाह । सर्वरूपेषु पूर्तितः इति ।

---

१. स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ।
स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा । इत्यनुव्याख्याने (१/४/१)

सर्वाणीत्युच्यते इति शेषः । भूतानीत्यत्राप्येवमेव योजना । प्राणो ह्येष इत्यत्रैष इति शब्दार्थमाह । सर्वैश्वर्येति । तस्य मेऽन्नं मित्रं दक्षिणमित्येतद् व्याचष्टे । सर्वनामवत इत्यादिना । दक्षिणशब्दार्थो दक्षभागस्थितेनत्वादिति । दक्षभागे स्थितः इनः पतिः यस्याः सा दक्षिणा । मित्रविशेषणत्वाद्दक्षिणमिति नपुंसकप्रयोगः । देवतोत्तमा लक्ष्मीर्यस्याभिमानिनी तदन्नं वैश्वामित्रमित्युच्यते । विश्वामित्रेण दृष्टत्वात् वैश्वामित्रमित्यस्यार्थोऽयम् । एष तत्रैवास्मीति होवाचेत्यस्य तात्पर्यमाह । इन्द्राविष्ट इति । त्वामेव जानीयामिति प्रष्टुर-भिप्रायमाह । त्वामित्यादिना । शक्राविष्टो हरेरन्यो नेति तर्कः ऊहोऽजनि । तर्कबीजं तेजोबाहुल्यतः । तेजोबाहुल्यदर्शनादिति । सत्यत्वं यथार्थत्वमस्ति वा न वेति ज्ञातव्यम् । यदि विष्णुः स्यात् तर्हि विशेषतो ज्ञातव्य इति द्वितीयम् (द्वितीयोऽभिप्रायः) परिहारं ददावित्येतद्विवृणोति । प्राणो वा इत्यादि । तपन्नेवाहस्मीत्युक्त्या विशेषज्ञानं कथं स्यादित्यत आह । तपन्तमिति । सोऽपि विश्वामित्रः तपन्तं सूर्यगतं नारायणं जानात्येव हि । सूर्ये स्थित्वा तपन् नारायण एवेति जानातीत्यर्थः । तत्र हेतुमाह । गायत्र्येति । इन्द्राविष्टो भगवानित्यागमेन दर्शयितुं युक्त्या चोपपादयति । उपनिषण्णमित्यादिना । इन्द्रादेव वरस्वीकारदित्यन्वयः । इन्द्रस्वरूपज्ञानप्रार्थनमेव किं न स्यादित्यत आह । इन्द्रमिति । तर्हि भगवत्स्वरूपज्ञानार्थं प्रश्नोऽस्तु विशेषज्ञानार्थमिति तु कुत इत्यत आह । भगवन्तमपीति । आगतं भगवन्तमित्यन्वयः । खण्डान्ते एष तपन्नेवास्मीति होवाचेत्यस्य वैय्यर्थ्यमाशङ्क्य परिहरति । विशेष-ज्ञानप्रार्थन इत्यादिना । तपतो विष्णुत्वज्ञानं तत्प्रयोजनमित्यपि नेत्याह । स एतेनेति । दिश आविष्टस्य विष्णुत्वं किञ्चिज्ज्ञायते । किञ्चिदित्यनेन विशतीति विष्णुरित्यर्थाज्ज्ञायते न श्रुत्येत्यर्थः । इयमाशङ्का । तथाऽपीति परिहारांशः । एतेन रूपेण सर्वा दिशो विष्टोऽस्मीत्यत्र एतेन रूपेणेति तृतीयात्वात् तृतीयायाश्च करणार्थत्वाशङ्का भवति । तस्य म इत्यत्र तस्य मम च इति वैय्यधिकरण्याशङ्का च स्यात् । यतः प्राणो वाऽहमस्मीत्यादिना भगवतः प्राणादिनामानि पृथगुक्त्वा प्राणादिनामवानहं विष्णुरित्येतत् एष तपन्नेवाऽस्मीत्यनेन स्फुटमाह । विश्वामित्रस्य भगवानिति ज्ञायते । वाक्यपर्या-लोचनयेति भावः । इन्द्र एव प्राणादिशब्दवाच्यः किं न स्यादित्यत आह । न

चेति । कुतः । विष्णोरेव सर्वशब्दवाच्यत्वस्य प्रमितत्वादित्याह । अजस्येत्यादिना । कैमुत्यन्यायेनापीन्द्रस्य सर्वशब्दवाच्यत्वं प्रतिषेधति । इन्द्रे हीति । तर्हीन्द्रशब्दस्य मुख्यार्थः क इत्यत आह । इन्द्रशब्दोऽपीति । न केवलम् इन्द्रशब्दस्य भगवति योगो रूढिरप्यस्तीत्याह । यमिति । ननु मित्रमित्यत्रापि प्रसिद्धेन्द्र एव प्रतिपाद्यः किं न स्यादित्यत आह । सत्येति । आसमन्तात् वृद्धा अर्धाः । तस्य भगवतो गर्भस्थानीयाः सप्त पञ्चभूतमहद-हंकाराभिमानिनः । भुवनस्य रेतः कारणं सृष्टिकारणं प्रदिशा आज्ञया विधर्मिणि धारणादिविविधकर्मणि । विष्णोः सर्वशब्दवाच्यत्वे श्रुत्यन्तरं चाह । नामानीति । यथा हरेः सर्वनामत्वं तथाऽन्यस्यापि किं न स्यादित्यत आह । यो देवानामिति । पद्मनाभत्वलिङ्गाच्च विष्णुरेव यच्छब्दपरामृष्ट इत्याह । पद्मनाभत्वादेवेति । रमावाय्वोश्च सर्वनामवत्वोक्तेः कथमवधारणमित्यत आह । श्रिय इति । यदि रमावाय्वोश्च सर्वशब्दवाच्यत्वं नारायणवत् तर्हि तत् साम्यं तयोः स्यात् । तच्च श्रुतिविरुद्धमित्याह । एक इति । सदृशः समः । नारायणस्य परब्रह्मत्वावधारणाच्च तस्यैव सर्वोत्तमत्वमित्याह । यमिति । यो देवानामित्यत्र रमादिकं सर्वशब्दवाच्यतया नोच्यत इति उपपादितमर्थमुपसंहरति । अतस्तदिति । तत् रमादिकम् । श्रुत्यन्तरेणापि विष्णोरेव सर्वोत्तमत्वं नान्येषामित्याह । परो मात्रयेति । इन्द्र त्वदुत्तरः त्वदुत्तमः न किं न कोऽपि ज्यायांश्च वयसा ज्येष्ठोऽपि न । त्वं यथा तथा न किं कोऽपि नैव नास्त्येव इत्यादिवाक्यमपि तस्यैव सर्वोत्तमत्वप्रतिपादकम् । तत्र हेतुः सर्वनामकत्वात् तस्यैवेति । विष्णोरेव सर्वोत्तमत्वे स्मृतिमप्याह । किमे-कमिति । इतोऽपि प्राणशब्दवाच्यो विष्णुरेवेत्याह । मेऽन्नमिति । विष्णोरेवेति ज्ञायते । प्राण इति शेषः । दक्षिणामित्रत्वं तस्यैवेति कुतः इत्यत आह । न चेति । मित्रशब्दनिरुक्त्या च रमाया एव मुख्यमित्रत्वं न चेतनमात्रस्येत्याह । मिनोतीति । बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयायेत्यत्र बृहतीसहस्रशंसनेन प्रसन्नभगवद्धामप्राप्तिः विश्वामित्रस्योच्यते । उक्थशब्दवाच्य-बृहतीशंसनेन प्राप्यत्वमेवोक्थायुत्वम् । तच्च विष्णोरेव नान्यस्येत्याह । उक्थायुत्वाच्चेति । तदुपपादयति । बृहतीसहस्रमित्यादिना । उक्थायुत्वविशिष्ट

इन्द्रो विष्णुरेव यज्ञेषूच्यते । चस्त्वर्थः । अन्यस्तु पुरन्दरः पृथक् उक्थायुक्त्वविशेषणेन विना इन्द्र इत्युच्यते । प्रसिद्धेन्द्रादीनां भगवदभेदेन प्राणादिशब्दवाच्यत्वं किं न स्यादित्यत आह । यमिन्द्रमिति । यमु सत्य-माहुरित्यत्र सत्यशब्दार्थमाह । सत्य इति । वायुरिति कुत इत्यत आह । सदिति । तेनेन्द्रस्य प्रियं धामोपेयायेत्यत्र विवक्षितार्थमाह । प्रियधाम्न इति । धामप्राप्तिरेवार्थः किं न स्यादित्यत आह । न चेति । शंसनत्रयस्य फलभेदं प्रमाणेनाह । बृहतीति । प्राणो वा अहमस्म्यृष इत्यत्राभेदोपदेशः क्रियत इत्यपव्याख्यां प्रत्याख्याति । न चेति । कुत इत्युक्ताकांक्षायां सूत्रकृताऽ-भेदोपदेशस्य निराकृतत्वादित्याह । प्राण इति । कथं निराकृत इत्यत अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति सूत्रखण्डाभिप्रायमाह । अध्यात्मेति । सौत्रभूमशब्दार्थमाह । अन्येष्विति । अध्यात्मसम्बन्धभूमापरमात्मावेशविशेषो विवक्षित इत्यर्थः । अध्यात्मसम्बन्धभूमेत्यनेन कथम् अभेदो निराकृत इत्यत आह । अधिकात्मन इति । स च सम्बन्धोऽभिन्नयोरेव भवति इत्येतत् कुत इत्यत आह । नहीति । अध्यात्मसम्बन्धभूमेत्यत्र अध्यात्ममात्रमेवोच्यत इति किं न स्यादित्याशङ्क्य परिहरति । यदीति । उपसंहरति । तस्मादिति । भगवतः सूत्रकारस्य यद्यभेदोऽत्र न विवक्षितः कथं तर्हि प्राणस्त्वं प्राणस्सर्वाणि भूतानीत्यभेदोपदेश इत्याशङ्कां परिहर्तुं शास्त्रदृष्ट्या तूपदेशो वामदेववदिति सूत्राभिप्रायमाह । शास्त्रेति । वामदेववचनमपि अभेदविवक्षया किं न स्यादित्यत आह । नहीति । तेषां सर्वाभेदवादिनां पक्षेऽपि वामदेवानां च विशिष्टत्वात् विशिष्टानां च ऐक्यस्य तैरनङ्गीकृतत्वादिति भावः । मुक्तौ चैतन्यैक्यमात्रविवक्षयेयमुक्तिः । न तु विशिष्टैक्यापेक्षयेत्यत आह । सर्वेति । अत्र वामदेवस्य अहं भूमिमददामार्यायेत्यादिना आर्यायेन्द्रादिभ्यो भूमिदानादि-प्रवृत्तिः श्रूयते । मुक्तस्य च सर्वप्रवृत्तिहीनतां ते वदन्ति । तस्मान्न मुक्तवामदेववाक्यमेतदिति भावः । इतोऽपि वामदेवस्य न मन्वादिभावः इत्याह । न चेति । भविष्यन्मन्वादिभावविवक्षयेयमुक्तिः किं न स्यादित्याशङ्कां परिहरति । अतीतेति । तर्हि अतीतार्थविवक्षयेयमुक्तिः किं नस्यादित्यत आह । नहीति । तदुपपादयति । भगवानिति । अन्तर्यामिविवक्षायां तस्य कथं मन्वादिभाव

इत्यत आह । स एवेति । सर्वेषु मन्वादिषु नामप्रवृत्तिनिमित्तानि मन्वादिनामप्रवृत्तिनिमित्तानि कुर्वन् अवबोधसूरिनियमनादिभिः प्रवृत्तिनिमित्तैर्मन्वादिनामवान् भवति । वामदेवान्तर्यामिणोर्भेदस्य मिथ्यात्वात् अन्तर्यामिणो मन्वादिभावे वामदेवस्यैव तदुक्तं स्यादित्यत आह । यदीति । पूर्वमुक्तेरिति शेषः । सर्वं वाक्यम् । जीवेश्वरादिभेदे प्रमाणमाह । जीवेश्वरेति । अभेदस्य निन्दितत्वाच्च भेद एव तात्पर्यमागमस्येत्याह । असत्यमित्यादिना । अहमस्म्यादिशब्दानां भगवन्नामत्वमुक्तं तदुपपादयति । न चेति । तत्र युक्तिमाह । एष तपन्निति । वैय्यर्थ्यात् वैय्यर्थ्यप्रसङ्गात् । वैय्यर्थ्यमुपपादयति । प्राणो हीति । यद्यहं शब्दोऽस्मच्छब्दः स्यात् अस्मीति चोत्तमपुरुषः स्यात् । तर्हि प्राणो ह्येष य एष तपतीत्यनेन तपन्नहं प्राणोऽस्मीत्यस्यार्थस्योक्तत्वात् पुनरेष तपन्नेवास्मीति वाक्यं व्यर्थमेवेत्युपसंहरति । अत इति । यदत्रान्यैरुक्तं जीवेश्वरैक्यमत्रोच्यत इति तदयुक्तम् । प्रकृतासङ्गतत्वादित्याह । न चेति । अतीतैष्यत्खण्डेषु मुक्तभेदस्योक्तेश्च न जीवेश्वरैक्यं विवक्षितमित्याह । हिरण्मयो ह वा इत्यादिना । एतेषां वाक्यानां कथं भेदविषयत्वमित्यतस्तदुपपादयति । न हीति । सांसारिकभेदविषयत्वमेषां वाक्यानां किं न स्यादित्यत आह । न चेति । इतोऽपि मुक्तानामभेदो नाङ्गीकर्तुमुचितमित्याह । एकत्व इति । अङ्गीकृत्य चेदमुदितम् । स्वात्मानं स्वयं ददृश इत्यपि तेषां पक्षो न युज्यत इत्याह । न चेति । निगमयति । अत इति । कर्तृकर्मविरोधस्य सर्वैरङ्गीकार्यत्वात् कथं ते वदन्तीत्युच्यत इत्यत आह । न चेति । दर्शनादिति शेषः । कर्तृकर्मणोरेकत्वे प्रमाणं चास्तीत्याह । श्रुत्यनुभवेति । तदात्मानमेवावेदहं ब्रह्मास्मीत्याद्या श्रुतिः । मामहं जानामीत्यनुभवः । मुक्तानामभेदाङ्गीकारे प्रज्ञेनात्मना सर्वान् कामानास्वाऽमृतः समभवदित्येतद्वाक्यवैय्यर्थ्यं स्यादित्याह । न चेति । तस्माद्वेदोक्तभेदस्य मिथ्यात्वाङ्गीकारात् तेऽपि मायिनोऽपि न केवलं शून्यवादिन इत्यपि शब्दार्थः । ननु न वयं वेदविरुद्धवादिनः । वेदोक्तब्रह्माङ्गीकारादित्यत आह । न चेति । शून्यवादिनः सकाशाद्विशेषो दृश्यते मायिन इति शेषः । विशेषाभावमुपपादयति । न हीति । शून्यब्रह्मणोर्विशेषाभावात् तद्वादिनोरपि विशेषाभाव इति भावः ।

अवाच्यस्यापि ब्रह्मणो लक्ष्यत्वाङ्गीकारात् कथं शून्याद्विशेषाभाव इत्यत आह । केनापीति । अवाच्यस्यापि रसविशेषस्य लक्ष्यत्वं दृश्यते । तत् कथमवाच्यस्य लक्ष्यत्वाभाव इत्यत आह । क्षीरेति । तैरेव क्षीरमाधुर्यङ्गुडमाधुर्यमित्यादिशब्दैरेव । न केवलं माधुर्यादिसामान्यशब्दैरुदितत्वं रसादीनां विशेषनामाप्यस्तीत्याह । विशदमिति । ब्रह्मणो विधिप्रत्ययवेद्यत्वात् शून्यस्य निषेधप्रत्ययवेद्यत्वात् कथं तयोरविशेष इत्यत आह । न चेति । निगमयति । अत इति । केवलो निर्गुणश्च, निष्कलं निष्क्रियं शान्तमित्यादौ ब्रह्मणो गुणक्रियाद्यभाव उच्यते । तत् सत्यमित्यादावस्तित्वं चोच्यते । अतः कथं गुणाद्यभावेनास्तित्वाभाव आपाद्यत इत्यत आह । अस्तीति । अस्तीत्युपलब्धस्य ज्ञातस्य हरेस्तत्त्वभावः स्वरूपं प्रसीदति । ज्ञातुरिति शेषः । तत्रैव तस्यामेव श्रुतौ । अक्षण्वन्त इति श्रुतिं स्मृत्यैव व्याचष्टे । श्रुत्वेति । ये मुक्तगणास्ते विष्णोर्दर्शनादक्षण्वन्तः । प्राप्ताक्षिफलाः । आदघ्नास इत्यस्य व्याख्यानं क्षीरसागरदघ्ना इति । क्षीरसागरदघ्नाः उपकक्षास इत्येतद्व्याख्यानम् । उपस्थिता इति । ब्रह्मणो वनम् । अश्वत्थानां मण्डलं समूहो यस्मिन् तत् अश्वत्थमण्डलम् अश्वत्थसमूहात्मकमित्यर्थः । ह्रदा इव स्नात्वा उत्वे ददृश्र इत्यस्यार्थः । ऐरे ह्रद इति । ऐरे ऐराख्ये ।

यत्र ब्रह्मेत्यादेस्त्वयमर्थः । हे पवमान पुनातीति पवमानशब्दवाच्य । मुख्यप्राण ब्रह्मा चतुर्मुखः यत्र यस्मिन् लोके छन्दस्यां छन्दस्सम्बन्धिनीं वेदसम्बन्धिनीं वाचं वदन् ग्राव्णा अश्मना सोमे सुते सति इति शेषः । सोमेनेष्ट्वेत्यभिप्रायः । महीयते । स्वावरैः । सोमेन सोमसवनसञ्जातभगवत् प्रसादेन स्वस्यानन्दं जनयन् इष्टप्रदत्वात् इन्दुशब्दवाच्य वायो । इन्द्राय परमैश्वर्ययोगेन इन्द्रशब्दवाच्याय हरये परिस्रव तं प्रापयेत्यर्थः । पवमान अक्षिते नाशरहिते अमृते मुक्तपरिपूर्णे तस्मिन् लोके मां धेहि निधेहि । यत्र अजस्रं ज्योतिः नित्यप्रकाशो यस्मिन् लोके स्वः आनन्दरूपो विष्णुः हितं निहितः । यत्र वैवस्वतो राजा मुक्तयमः यत्र दिवः वायुपत्न्या अवरोधनं परिवारभूता देवताः सन्ति । यत्र यह्वतीः स्यन्दमानाः अमूरापः गङ्गाद्यब्देवताश्च सन्ति । तत्र लोके माम् अमृतं कृधि मुक्तं कुरु । यत्रानुकामम् इच्छानुसारेण त्रिनाके

अकं दुःखम् अकविरुद्धसुखात्मकं नाकं त्रिविधं च तत्सुखात्मकं चेति त्रिनाकमिति भगवल्लोकसंज्ञा । तस्मिन् त्रिनाके भगवल्लोकत्रयस्य क्रीडादि-गुणविशिष्टत्वात् । त्रिदिवमिति संज्ञान्तरम् । यस्मिन् लोके दिवः वायुपत्न्या लोकाः जनाश्च ज्योतिष्मन्तः तत्रामृतं कृधीत्यन्वयः । यत्र लोके विष्णोर्यत्परमं पदं सुकृतकर्मभिर्देवैर्महीयते । तत्र माममृतं कृधीत्परमः । यत्रानन्दा निरुपाधिकभगवद्भक्तिरूपा आनन्दाः । भोगनिमित्तिकानन्दाः मोदाः । अल्प-भोगनिमित्तिकानन्दाः मुदः । भोगविशेषनिमित्तिकानन्दाः प्रमुदः । आसते तिष्ठन्ति । यत्र कामस्य इच्छायाः कामाः विषयाः आप्ताः ।

उदाहृतश्रुतीनां तात्पर्यमाह । इत्यादिनेति । एषु वाक्येषु उक्तानां मुक्तत्वज्ञापकमाह । अमुक्तानामिति । मुक्तौ भोगो भगवत भेदश्चास्तीत्यत्र सूत्राण्युदाहरति । मुक्तः प्रतिज्ञानादित्यादिना । सूत्रार्थे श्रुतिमुदाहरति । ग्राव्णेति । मुक्तः प्रतिज्ञानादित्यादिसूत्राणि गौणमोक्षपराणि न तु निर्गु-णमोक्षपराणीत्यत आह । न चेति । उपचारादिकल्पने । मुख्यार्थबाधकं विनेति शेषः । भगवल्लोकप्राप्तेर्मुख्यमोक्षत्वे प्रमाणमाह । बहुनेति । किञ्च सूत्राणामौपचारिकत्वकल्पनं मुख्यार्थे बाधकसद्भावाद्वा त्वदाचार्यवचनबलेन वा नाद्यः । मुख्यार्थे बाधकप्रमाणादर्शनात् । द्वितीये दोषमाह । न चेति । किञ्च केयं निर्गुणमुक्तिर्नाम । भोगरहितेति चेन्न । प्रमाणाभावादित्याह । न चेति । सायुज्यलक्षणा मुक्तिर्निर्गुणमुक्तिरित्यत आह । भुञ्जत इति । अनेन वाक्येन सायुज्यलक्षणोत्तममुक्तावपि भोगः । परमात्मना भेदश्चास्तीति ज्ञायते । देवग्रहादयः देवा ग्रहादयश्च देवग्रहादयः । अत्र मम साधर्म्यमागता इति भेदः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च इत्यनेन उत्तममोक्षत्वं च ज्ञायते । खण्डार्थमुपसंहरति । तस्मादिति । अहार्यत्वात् अहर्नामकं तत् ।

एतं भगवन्तं बृहतीसहस्रेण शंसिष्यन्तं विश्वामित्रमिन्द्रः इन्द्राविष्टो भगवान् वायुश्च उपनिषससाद समीपमुपविष्टोऽभूत् । विश्वामित्रः तेजोविशेषदर्शनेन भगवन्तम् इन्द्राविष्टं ज्ञात्वा तवान्नं बृहतीसहस्राख्यमन्नं कल्पयामीत्यभिव्याहृत्य बृहतीसहस्रं शशंस । तेन शंसनेनेन्द्रस्य विष्णोः प्रियं धामोपेयाय प्राप । अत्र धामप्राप्तिर्नाम सालोक्यप्राप्तिलक्षणफलप्राप्तिसाधनभगवत्प्रसादप्राप्तिः । द्वितीयं

द्वितीयवारं बृहतीसहस्रं शशंस । तेन शंसनेन इन्द्रस्य विष्णोः प्रियं धामोपेयाय । भगवत्पुरप्राप्तिसाधनतत्प्रसादं प्राप्तवानित्यर्थः । तृतीयं तृतीयवारं तेन शंसनेन तृतीयशंसनेन इन्द्रस्य विष्णोः प्रियं धामोपेयाय भगवदन्तः-पुरप्रवेशसाधनतत्प्रसादं प्राप । इन्द्राविष्टो हरिः पुनरपि ते वरं ददामीत्याह । स विश्वामित्रस्त्वामेव विशेषतो जानीयामित्युवाच । तमिन्द्र उवाच ऋषे इन्द्रावि-ष्टोऽहं प्राणः प्रकृष्टानन्दरूपत्वात् प्राणनामा । अहेयत्वात् अहमितिनामवान् । असनान् निरसनान् मिनुतेर्ज्ञानाच्च । अस्मीति नामवान् । प्राणस्त्वं प्राणनामैव । ततत्वात् वेत्तृत्वात् च त्वमितिनामवान् । प्राणनामा सर्वाणि गुणपूर्णबहुरूपभूतानि । देशतः कालतश्च प्रभूतबहुरूपः । य एष सूर्यमण्डले स्थित्वा तपति । स एष प्राणनामा हि । अनेन तपतो यानि नामानि सर्वाण्यपि प्राणनाम्नो हरेरेवेत्युक्तं भवति । स सर्वनामा अहं एतेन रूपेण प्राणादिनामवता रूपेण सर्वा दिशो प्रविष्टोऽस्मि । अनेन विष्णुरिति नामानि सूचितं भवति । तस्य मे एतादृशस्य मे दक्षिणं दक्षभागस्थितस्वामिकम् अन्नं बृहतीसहस्राख्यस्य प्रसिद्धान्नस्य चाभिमानिनी श्रीः मित्रम् । मिनोति त्रायते चेति मित्रम् । जानाति त्रायते । अयोग्येभ्यो गोपायतीति रमा विष्णो-र्मित्रमुच्यते ।

विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि ।
अनार्यकायानृजवे शठाय मास्म ब्रूयाः ऋजवे ब्रूहि नित्यम् ॥

इति वचनात् । तद्वैश्वामित्रं तद्रमयाऽभिमन्यमानबृहतीसहस्राख्यमन्नं विश्वामित्रेण सम्पादितत्वात् वैश्वामित्रमित्युच्यते । प्राणो ह्येष तपतीत्युक्तं स च क इत्यपेक्षायामाह । एष तपन्नेवाऽस्मीति । तपन्नेषो अहमस्मीत्युवाच ह । विश्वामित्रमिन्द्राविष्टो विष्णुरित्यर्थः ॥ ३ ॥

ऐतरेयोपनिषत्

तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य ऊष्माणः स प्राण एतद्ध स्म वै तद्विद्वान्वसिष्ठो वसिष्ठो बभूव तत एतन्नामधेयं लेभ एतदु हैवेन्द्रो विश्वामित्राय

प्रोवाचैतदु हैवेन्द्रो भरद्वाजाय प्रोवाच तस्मात्स तेन बन्धुना यज्ञेषु हूयते तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात्प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद तद्योऽहं सोऽसौ योऽसौ सोऽहं तदुक्तमृषिणा[1] सूर्य आत्मा जगतस्थस्थुषश्चेत्येतदु हैवोपेक्षेतोपेक्षेत ॥ ४ ॥

॥ इत्यैतरेयोपनिषत्सु द्वितीयारण्यके द्वितीयोध्यायः ॥ २ ॥ २ ॥४॥

भा— यावतीभिर्ऋग्भिः शंसिताभिः षट्त्रिशत्सहस्राण्यक्षराणि भवन्ति। यस्मात्कस्मादपि च्छन्दसस्तावत्यः शंसनीयास्तदा सम्पादितं बृहतीसहस्रं भवति । तत्र या व्यञ्जनाभिमानिदेवता सैव सर्वप्राणिनां शरीराभिमानिदेवता स्वायम्भुवो मनुः । घोषाभिमानिदेवता सर्वजीवाभिमानी ब्रह्मा । ऊष्माभिमानी वायुः ।

व्यञ्जनानां शरीरस्य चाभिमानी मनुः स्मृतः ।
घोषाणां सर्वजीवानामभिमानी चतुर्मुखः ॥
ऊष्माभिमानी वायुश्च प्रतिपाद्यो जनार्दनः ।
एतेषामधिपं विष्णुं बृहत्युक्थस्य देवताम् ॥
उपास्यैव वसिष्ठोऽभूद्वसिष्ठः शक्र एव च ।
एतां विद्यां कौशिकाय भरद्वाजाय चादरात् ॥
एतद्विद्याबलेनैव विद्याधीशेन बन्धुना ।
यज्ञेष्वाहूयते नित्यमिन्द्रो विष्णुप्रसादतः ॥

---

१. चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥
(ऋग्वेद. १०-११४-१)

षट्त्रिंशद्रूपवान्विष्णुर्व्यञ्जनेषु च संस्थितः ।
तान्येव विष्णुरूपाणि रात्रीनामपि देवताः ॥
एकैकं च सहस्रं तद्व्यञ्जनेषु च रात्रिषु ।
रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा ॥
षटित्रंशतिसहस्राणि स्वरगाणि हरेरपि ।
तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ॥
द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः ।
शताब्दानामहोरात्रदैवतान्युत्तमानि च ॥
बृहतीसहस्रवर्णानामपि ध्यात्वाऽखिलान्यपि ।
शतवर्षहरिध्यानफलमाप्नोति पूरुषः ॥
एवं ज्ञात्वाऽपि सम्पाद्य बृहतीनां सहस्रकम् ।
ज्ञानान्नारायणस्यैव प्रकृष्टज्ञानसन्ततेः ॥
स एव मे मयो विष्णुः प्रकृष्टज्ञानरूपकः ।
प्राधान्यं मयशब्दोऽयं वक्ति विष्णोः सदैव हि ॥
प्रधानोऽस्य हरिर्यस्मात्प्रज्ञारूपोऽधिदेवता ।
ब्रह्मामृतं च तेनायं ब्रह्मादिमय उच्यते ॥
सर्वोत्तमस्वरूपत्वाद्विष्णुरुक्तः स देवता ।
ब्रह्म पूर्णगुणत्वाच्च नित्यत्वादमृतं तथा ॥
एतादृशं तु यो विष्णुं प्रधानं वेत्ति सर्वदा ।
प्रज्ञादिभिर्गुणैः स्वस्मात्परेभ्यश्च सदाऽधिकम् ॥
प्रज्ञादेवब्रह्मामृतमयः स परिकीर्तितः ।
प्रज्ञादिमय एवं स भूत्वा देवान् क्रमेण च ॥
एति मारुतपर्यन्तान्मारुतेन च केशवम् ।
सम्पादनाच्च विद्याया अस्याः परत एव च ॥
द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः ।
बृहतीसहस्रसंस्थानि स्वरव्यञ्जनभेदतः ॥

तान्येव पुरुषस्थानि यस्मात्पुरुषसंस्थितम् ।
बृहतीसहस्रं तच्छंस्यं व्यज्यते न ह्युते नरम् ॥
द्वासप्ततिसहस्राणि तान्येवाहर्निशासु च ।
विष्णुरूपाणि सूर्येऽपि त्वहोरात्रं हि सूर्यगम् ॥
तस्माद्योऽयमहं नामा सदाऽहेयत्वहेतुतः ।
स एवासौ सूर्यसंस्थः साक्षान्नारायणः प्रभुः ॥
योऽसौ सूर्यगतो विष्णुः सोऽहेयो भास्करादिभिः ।
एवं मनुष्यजीवेषु सूर्यादिषु च संस्थितः ॥
एक एव परो विष्णुरिति जीवसमीपगम् ।
ईक्षेन्नारायणं देवं सर्वजीवेश्वरेश्वरम्' – इत्यैतरेयसंहितायाम् ।

सम्पन्नस्य परस्तादेवानन्तरमेव । न पुनः कर्मान्तरेण शरीरारम्भ एवंविदो भवति । प्रज्ञामयो देवतामय इत्यादिपृथक्पृथङ्न्यशब्दोऽनिरुद्धादिचतुर्मूर्तीनामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति दर्शयितुम् ।

अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः ।
प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः ॥
अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनः पुनः ।
सङ्कर्षणोऽमृतं तस्माद्वासुदेवस्तु बृंहणात् ॥
जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः ।
एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः ॥ –इत्यादि चातुरात्म्ये ।

सम्भूयेत्यत्र समित्युपसर्गाद्बृहतीसहस्रसम्पादनानन्तरं भगवदाधिक्यं पुनराधिक्येन ज्ञायत इत्युक्तं भवति । भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति ।

द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात् ।
आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः ॥

प्राप्नोति देवताश्चैव केशवान्ताः क्रमेण तु ।
योग्या अस्याश्च विद्याया देवा ऋषय एव च[१] ॥ – इत्यादि सत्तत्वे ।

बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि पुरुषैरहेयत्वादहं-नामकानि तान्येव सूर्ये स्थितानि यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादहंनामकानि तदेवोक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीप ईक्षेत । नात्र जीवेश्वराभेदो विवक्षितः । उप समीपे ईक्षेतेति समीपे दर्शनवचनात् । न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तु युक्तम् । न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैय्यर्थ्यमङ्गीकृतं कुत्रचित् । उक्तं च भगवता व्यासेन–

नानर्थकः स्वरो[२] वाऽपि वर्णो वा कुत्रचिद्भवेत् ।
पदं वाक्यं कुतश्च स्यान्नाल्पार्थमपि कुत्रचित् ॥
उच्चाराद्यर्थमपि वा नास्ति किञ्चित्स्वरादिकम् ।
महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा ॥ – इति ।

सुकरं च सर्वपदानामनर्थकत्वकल्पनम् । यैश्च वाक्यैरर्थवत्त्वं प्रतीयते तेषामप्यनर्थकत्वमेव स्याद्विशेषाभावात् । न च मानुषवाक्येन वेदपदानामानर्थक्यं कल्प्यम् । जीवेश्वरैक्याङ्गीकारे योऽहं सोऽसावित्येव पूर्यते पुनर्योऽसौ सोऽहमिति व्यर्थम् । न ह्यस्य तेनैक्ये तस्यानेन भेदशङ्का भवति । अस्य तस्येति भेदाङ्गीकारे नाभेदो मुख्यः । किन्तु

---

१. द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः ।
बृहतीसहस्रस्पर्शानाम् ऋचां वाच्योऽत्र केशवः ॥
रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ।
विष्णुना ब्रह्मणे प्रोक्तं गन्थसङ्कोचतस्तथा ॥ -इति तन्त्रसारसङ्ग्रहे (४/१५५,१५६)

२. दार्ढ्यमेवानुदात्तार्थं उदात्तस्योच्चतार्थता ।
नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः ॥
समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः ॥
- इति स्वरार्थक्रम उक्तः ऋग्भाष्ये (१/९६, ९७)

तदधीनत्वमेवान्यस्य भवति स्नेहविशेषो वा । चैत्रो मैत्रो मैत्रश्चैत्र इतिवत् । तत्र ह्युभयस्नेहापेक्षया पुनर्वचनं युज्यते । अभ्यासत्वे ह्येक-प्रकारेण प्रयोगो दृष्टः । अत्र हि प्रयोगद्वैविध्यं दृश्यते ।

एकप्रकारा बहुशो वागभ्यास इतीरितः ।
अर्थान्तरार्था द्विविधा प्रयुक्तेति हि निर्णयः ॥ –इति गारुडे ।

अहंशब्दस्याहेयत्वाङ्गीकारे नराहेयत्वं सुराहेयत्वं चोच्यत इति न वैयर्थ्यम् । 'अ इति ब्रह्म तत्रागतमहमिति न वा अहमिमं विजानाति तस्यो-पनिषदहम्' इत्यादौ विष्णोरेवाहेयत्वेनाहंनामकत्वप्रसिद्धेः । अहंशब्द-स्यास्मच्छब्दार्थकत्वेऽहमिमं न जानातीति न युज्यते । तस्य भूरिति शिरो भुव इति बाहू इत्यादिनाऽक्षिसंस्थो भगवानेव ह्यहंशब्दोदितः । न हि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते । हृदि स्थितमेव हि तस्य स्वरूपम् । जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीप-प्रकाशवत् । 'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि'[१] । 'गुणा-द्वाऽऽलोकवदि'[२]ति च सूत्रात् । 'आदित्ये हिरण्मयः पुरुषस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादि सूर्ये स्थितस्य विष्णो रूप-मुक्त्वाऽक्षिस्थितस्यापि तस्यैतस्य तदेव रूपमिति कथनाच्च । 'स एष एवैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे' इत्यादि लोकाधिपत्यकथनाच्च । न हि कश्चिद्भिक्षुकः पातालाद्यधिपतिरित्यत्र किञ्चिन्मानम् । तस्माद्भगवाने-वाहेयत्वादहं नामा । 'चक्षुर्मित्रस्य वरुणस्याग्नेः'[३] । 'जगतस्तस्थुष-श्चात्मे'[४]त्यादि जीवेभ्यो भेददर्शनाच्च ।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥ – इति भारते ।

---

१. ब्रह्मसूत्रम्. २/३/२५.  २. ब्रह्मसूत्रम्. २/३/२६.
३. ऋ. १/११४/१  ४. ऋ. १/११४/१.

देवता अपि एति प्राप्नोतीत्येव चार्थः । लयश्चेद्देवतास्वप्येतीति स्यात् । न च विनाशः पुरुषार्थः । मयट्शब्दस्य भगवत्प्राधान्यार्थत्वानङ्गीकारे सम्भूय देवता अप्येतीति ल्यप् न युज्यते । उपासनायास्तु सम्पन्नस्य परस्तादीत्युक्तत्वात्पूर्वमेव सिद्धिः ।

सर्वस्माद्भिन्नमीशेशं जीवाभेदेन यः स्मरेत् ।
स यात्यन्धंतमो घोरं नित्यातिशयदुःखदम् ॥
सर्वोत्तमं तु यो विष्णुं भिन्नं जानाति सर्वतः ।
नित्यानन्दमसौ याति वासुदेवप्रसादतः ॥ – इति चैतरेयसंहितायाम्

अतः सर्वव्यतिरिक्तः सर्वोत्तमः सर्वगुणसम्पूर्णो नारायण इति सिद्धम् ।

सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः[1] ।
अध्यायान्ते द्विरुक्तिः स्यात्पूर्वोक्तस्यावधारणे ॥
– इति शब्दनिर्णये ॥ ४ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये
द्वितीयप्रघट्टके द्वितीयोऽध्यायः ॥ २ ॥ २ ॥

टी— तद्वा इदं बृहतीसहस्रमित्येतद्योजयति । यावतीभिरित्यादिना । तस्य यानि व्यञ्जनानीत्येतद्व्याचष्टे । तत्रेत्यादिना । व्यञ्जनाभिमानिदेवतैव

---

१. अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः ।
द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णयः ॥ इति वाराहे ॥
- इति ब्रह्मसूत्रभाष्ये (१/४/२९)

अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ॥
अनुक्तानां प्रमाणानां स्वीकारश्च कृतो भवेत् ॥
विविन्य चेतरान् मार्गान् सम्पूर्णफलता तथा ॥
- इति ब्रह्मसूत्रभाष्योद्धृत (२/४/२३) गारुडवचनम् ॥

शरीराभिमानिदेवतेत्युक्तं भवति । तत्र शरीराभिमानिदेवतां निर्दिशति । स्वायम्भुवो मनुरिति । उक्तार्थे प्रमाणमाह । व्यञ्जनानामिति । एते वर्णाद्यभिमानिनः । वर्णादिप्रतिपाद्यो जनार्दनः । एतद्धस्म वै तद्विद्वानित्यादि व्याचष्टे । एतेषामिति । मन्वादीनां वसिष्ठः वसिष्ठोऽभूत् । वसिष्ठनामकोऽभूत् । एतदु हैवेन्द्रो विश्वामित्राय प्रोवाचेत्यादि व्याचष्टे । शक्र एवेत्यादिना । तस्मात् स तेन बन्धुना इत्येतद्व्याचष्टे । एतदिति । तद्वा इदं बृहतीसहस्रं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षड्विंशतमक्षराणां सहस्राणि भवन्तीत्यादि व्याचष्टे । षट्त्रिंशदित्यादिना । व्यञ्जनेषु बृहत्यृचः। षट्त्रिंशद्व्यञ्जनेषु विष्णुः षट्त्रिंशद्रूपवान् व्यवस्थितः । तान्येव व्यञ्जनस्थितान्येव सहस्रं सहस्रऋक्प्रतिपाद्यं विष्णोस्तद्रूपं व्यञ्जनेषु बृहतीसहस्रगतषट्त्रिंशतिसहस्रव्यञ्जनेषु एकैकं प्रत्येकं स्थितम् । षट्त्रिंशतिसहस्रधा व्यूह्य स्थितम् एतदेव षट्त्रिंशतिसहस्ररूपं शतसंवत्सरगतषट्त्रिंशतिसहस्ररात्रिषु च स्थितम् । अनेन व्यञ्जनानां रात्रीणां चैकदेवताकत्वमुक्तं भवति । स्वैरहानीत्येतद्व्याचष्टे । षट्त्रिंशतिसहस्राणीति । स्वरगाणि बृहतीसहस्रस्वरगाणि च हरे रूपाणि षट्त्रिंशतिसहस्राणि । तान्येवाह्नां दैवतानि शतसंवत्सरगतानि अह्नां दैवतानि । फलितार्थमाह । द्वासप्ततीति । एवं व्यञ्जनरात्रिगतरूपाणां षट्त्रिंशत्सहस्रत्वात् स्वराहर्गतरूपाणां च षट्त्रिंशत्सहस्रत्वात् । एतत् परिज्ञानफलमाह । शताब्दानामिति । उत्तमानि शताब्दानामहोरात्रदैवतानि रूपाणि च बृहतीसहस्रवर्णानां स्वरव्यञ्जनात्मनां दैवतान्यपि अखिलान्यपि रूपाणि ध्यात्वा शतवर्षहरिध्यानफलमाप्नोति । तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तादित्यादिव्याचष्टे । एवमित्यादिना । बृहतीसहस्रसम्पादनं नाम एवं ज्ञानपूर्वकं तच्छंसनम् । एवं ज्ञात्वा बृहतीसहस्रकं सम्पाद्य नारायणस्य ज्ञानात् प्रज्ञादिमयो भवतीत्यन्वयः । प्रज्ञादिमयशब्दार्थमाह । प्रकृष्टेति । विष्णुः प्रकृष्टज्ञानसन्ततः प्रज्ञः । स प्रकृष्टज्ञानरूपक एव मे मयः प्रधान इति यो जानाति स प्रज्ञामय इत्यर्थः । मयशब्दार्थमाह । प्राधान्यमिति । फलितमाह । प्रधान इति । अधिदेवता प्रज्ञारूपो हरिरस्य प्रधानो यस्मात् तस्मात् प्रज्ञामय इत्युक्तं भवति । स विष्णुर्ब्रह्म अमृतं च शब्दात् देवता च । तेन

तत्प्रधानत्वज्ञानेन अयमुपासको ब्रह्मादिमयः देवतामयः अमृतमय इत्युच्यते । तदेव प्रपञ्चयति । सर्वेति । क्रीडादिगुणविशिष्टत्वेन सर्वोत्तमस्वरूपत्वात् देवता । सम्भूयेत्यस्यार्थो । भूत्वेति । देवता अप्येतीत्यस्यार्थमाह । देवानिति । परस्तादित्यस्यार्थमाह । सम्पादनादिति । तद्योऽहं सोऽसौ योऽसौ सोऽहम् इत्येतद्व्याचष्टे । द्वासप्ततीत्यादिना । स्वरव्यञ्जनभेदतः द्वासप्ततिसहस्राणि बृहतीसहस्रसंस्थानि रूपाणि अनेन तद्य इत्युक्तार्थं भवति । तानि यानीत्यर्थः । तान्येव पुरुषस्थानि । तदुपपादयति । यस्मादिति । शंस्यं शंसनीयं बृहतीसहस्रं पुरुषसंस्थितं यस्मात् तस्मात् प्रतिपाद्यरूपाणि पुरुषसंस्थितानीत्यर्थः । पुरुषसंस्थितत्वोपपादनं "व्यज्यते न हि ऋते नरमिति" । नरं पुरुषं तान्येव बृहतीसहस्रस्वरव्यञ्जनगतान्येव द्वासप्ततिसहस्राणि । सूर्येऽपि सूर्यनियतास्वहर्निशासु च स्थितानि । अनेन सोऽसौ इत्यत्र स इत्यस्य स्वरव्यञ्जनभेदभिन्नबृहतीसहस्रगतद्वासप्ततिसहस्ररूपाणीत्यर्थ उक्तो भवति । असावित्यस्य प्रकृष्टसूर्यनियताहोरात्रगतरूपाणीत्यर्थ उक्तो भवति। अहोरात्रगं सूर्यगं सूर्यनियतं हि । उपसंहरति । तस्मादिति । बृहतीसहस्रस्य पुरुषगतत्वात् अहेयत्वहेतुतः नरैरिति शेषः । अहंनामा योऽयं पुरुषे स्थितः साक्षात्प्रभुः । स एव नारायणः सूर्यसंस्थः सूर्यनियताहोरात्रगतत्वात् योऽसौ सोऽहमित्येतद्व्याचष्टे । योऽसाविति । यः असौ इत्यनूद्य सूर्यगत इति व्याख्यानम् । स अहम् अहेयः । भास्करादिभिः । सूर्य आत्मा जगतस्तस्थुषश्चेति व्याचष्टे । एवमिति । सूर्य आत्मेत्यत्र सूर्यपदव्याख्यानम् । एक एव परो विष्णुरिति । एतदु हैवोपेक्षेतेत्येतद्व्याचष्टे । इतीति । इति एवं प्रकारम् उप जीवसमीपगम् ईक्षेत ईक्षेत् । न तु जीवैक्येनेति भावः ।

सम्पन्नस्य परस्तादित्युक्तस्य तात्पर्यमाह । सम्पन्नस्येति । प्रज्ञामय इत्यादौ पृथङ्मयशब्दतात्पर्यमाह । प्रज्ञामय इत्यादिना । प्रज्ञादिशब्दानामनिरुद्धादिवाचकत्वं स्मृत्या दर्शयति । अन्तर्यामीति । अमम् अमितम् ऋतं शास्त्रं स्वस्मिन् पुनः पुनः करोति प्रतिपादकतया करोति । यस्मात् तस्मात् । स्वविषयतया व्याचष्टे । निर्मिमीते वा सम्भूयेत्येतत्तात्पर्य-

माह । सम्भूयेति । सम्भूय देवता अप्येतीत्येतत् योजयन्नेव तात्पर्यमाह । भगवदिति । उक्तार्थे प्रमाणमाह । द्वासप्ततीति । तद्योऽहमित्येतत् स्फुट-प्रतिपत्त्यर्थं स्ववचनेनापि व्याचष्टे । बृहतीति । उक्तं श्रुत्युक्तं तदेव ब्रह्म । अपव्याख्यामपाकरोति । नात्रेति । तद्योऽहमित्यस्य अभेदपरतया व्याख्याने दूषणान्तरमप्याह । जीवेति । तद्योऽहं सोऽसाविति पुरुषस्य सूर्येणैक्यमुक्तम् । सूर्यस्य पुरुषेणैक्यं योऽसौ सोऽहमित्यनेनोच्यते । अतो न वैय्यर्थ्यमित्यत आह । नहीति । अस्य पुरुषस्य तेनाभेदः । तस्य सूर्यस्य अनेन पुरुषेणाभेदः । इत्येतद्वाक्ययोरर्थभेदोऽस्ति न वा । नेति चेदुत्तरवाक्यवैय्यर्थ्यानिस्तारः । अस्ति चेत् तत्राह । अस्येति । अभेदस्यामुख्यत्वे कोऽर्थः सम्पन्नः । इत्यत आह । किंत्विति । तत्रोदाहरणमाह । चैत्रो मैत्र इति । तद्योऽहं सोऽसौ योऽसौ सोऽहमित्यैक्ये तात्पर्यद्योतनार्थमभ्यासोऽयम् । अतो न वैय्यर्थ्यमित्यत आह । अभ्यासस्त्विति । द्विविधा प्रयुक्ता अर्थान्तरार्था अर्थान्तरप्रयोजना । अहंशब्दस्य अहेयत्वाङ्गीकारे द्वितीयाहंशब्दवैय्यर्थ्यं स्यादित्यत आह । अहं शब्देति । भगवतो अहंशब्दवाच्यत्वे प्रमाणमाह । अ इति । तत्र ब्रह्मणि अहमिति नामवाचकतया आगतं सः अहम् अहंशब्दवाच्यमिमं भगवन्तं न जानाति वै । उपनिषत् रहस्यं नाम । न वा अहमिमं विजानातीति श्रुतौ श्रुताहंशब्दः अस्मच्छब्दगतः किं न स्यादित्यत आह । अहमिति । अस्यां श्रुतौ अहंशब्दोक्तो विष्णुरिति कुतः जीवः किं न स्यादित्यत आह । तस्येति । जीवोऽक्षिस्थो न चेत् कुत्र तिष्ठतीत्यत आह । हृदीति । जागरिते जाग्रदवस्थायाम् अक्ष्यादिषु विशेषतः सन्निहितः । जीवस्य हृद्यवस्थानं चक्षुषि सन्निधानमात्रं च सूत्रेणोपपादयति । अवस्थितीत्यादिना । इतोऽपि नाक्षिस्थो जीव इत्याह । आदित्य इति । इत्यादि पुण्डरीकाक्षत्वादिलक्षणविशिष्टम् । स एषो अक्षिस्थः येऽस्मात् भूलोकात् अर्वाञ्चो लोकाः तेषां चेष्ट इत्यादि लोकाधिपत्यकथनाच्च न जीवोऽक्षिस्थः । अक्षिस्थस्य सर्वलोकाधिपत्यमुच्यते । तस्य जीवत्वे सर्वलोकाधिपत्यं तस्य स्यात् । न च तद्युज्यत इत्याह । न हीति । उपसंहरति । तस्मादिति । भगवतोऽहंनामवत्वे जीवस्यापि तदभिन्नत्वात् अहंनामवत्वात् भगवानेवाहंनामवानिति कथमित्यत आह । चक्षुरिति । मित्रस्य दर्शकः । सूर्य आत्मा आदानादिकर्ता । तत्र प्रमाणमाह ।

यच्चेति । यदि तयोऽहमित्यत्राभेदो न स्यात् तर्हि देवताऽप्येतीत्येतद्विरोधः स्यादित्यत आह । देवता इति । देवताऽप्येतीत्यत्र नैक्यमुच्यते । किं तर्हि देवता अपि एति प्राप्नोतीति प्राप्तिरेवोच्यत इत्यर्थः । विपक्षे बाधकमाह । लयश्चेदिति । दूषणान्तरं चाह । न चेति । मयट्शब्दस्य प्राधान्यार्थत्वानङ्गीकारे बाधकमाह । मयडिति । सम्भूयेत्येतत् उपासनापरमिति चेन्नेत्याह । उपासनाया इति । अभेदज्ञानस्यानर्थफलत्वाच्च नाभेदोऽत्र साध्य इत्याह । सर्वस्मादिति । भेदज्ञानस्य पुरुषार्थहेतुत्वात् तत्रैव तात्पर्यमिति भावेनाह । सर्वोत्तममिति । खण्डार्थमुपसंहरति । अध्यायान्ते द्विरुक्तेः प्रयोजनमाह । सर्वेति । आ अध्यायमूलतः अध्यायमूलमारभ्योक्तस्य ॥

इदं बृहतीसहस्रं यावतीभिः शंसिताभिः ऋग्भिः षट्त्रिंशत्सहस्राक्षराणि भवन्ति । तद्वा तद्वै तथा शंसनेनैव सम्पन्नं सम्पादितं भवति । तस्य बृहतीसहस्रस्य यानि व्यञ्जनानि तच्छरीरं तदभिमानिशरीरं शरीराभिमानी स्वायम्भुवो मनुः । यो घोषो घोषाभिमानी स आत्मा स सर्वजीवाभिमानी चतुर्मुखः । ये ऊष्माणः शषसहाः तदभिमानी प्राणो वायुः । एतद्विद्वान् सम्यग्जानन् वसिष्ठनामा ऋषिः वसिष्ठो वसतामुत्तमः बभूव ह स्म वै । वसिष्ठो वभूवेत्यस्य विवरणं तत एतन्नामधेयं लेभ इति । तत वसतामुत्तमत्वात् एतन्नामधेयं वसिष्ठनामधेयं लेभे । इन्द्रः एतदुहैव एतदेव विश्वामित्राय प्रोवाच । एतदेव भरद्वाजाय प्रोवाच । तस्मात् एतद्विद्याबलादेव बन्धुना तेन विष्ण्वाख्येन बन्धुना तत्प्रसादेनेत्यर्थः । यज्ञेषु हूयते आहूयते सम्पन्नस्य तस्यैतस्य बृहतीसहस्रस्य अक्षराणां षट्त्रिंशत्सहस्राणि भवन्ति । तेषु तावन्ति भगवद्रूपाणि भवन्ति । यावन्ति बृहतीसहस्राक्षराणि शतसंवत्सरस्य अह्नां दिनानां सहस्राणि तावन्ति भगवद्रूपाणि चैतेषु तावन्ति भवन्ति । व्यञ्जनैरेव रात्रीराप्नुवन्ति । बृहतीसहस्रव्यञ्जनगतभगवद्रूपाण्येव रात्रिगतानि स्वरैरहानि स्वरगतभगवद्रूपाणि अहर्गतानि एतेन बृहतीसहस्रव्यञ्जनानि । षट्त्रिंशत्सहस्राणि तद्गतस्वराण्यपि षट्त्रिंशत्सहस्राणि भवन्तीत्युक्तं भवति । शतसंवत्सररात्रीणाम् अह्नां च प्रत्येकं षट्त्रिंशत्सहस्रत्वात् । तथा च व्यञ्जनरात्रिगतभगवद्रूपाणि द्वासप्ततिसहस्राणि स्वराहर्गतान्यपि तावन्तीत्यभिप्रायः । सम्पन्नस्य तस्यैतस्य बृहतीसहस्रस्य परस्तादनन्तरमेव प्रज्ञामयः

प्रकृष्टज्ञानरूपः स भगवान् मे मयः मत्प्रधानः स्वामीति जानन् देवतामयः क्रीडादिगुणः मे मय इति जानन् ब्रह्ममयः परिपूर्णत्वात् ब्रह्म मे मय इति जानन् अमृतमयः अमं अमितं ऋतं शास्त्रं स्वप्रतिपादकं करोतीत्यमृतं भगवान् मे स्वामीति जानन् अमृतमयः सम्भूय पुनर्विशेषतो ज्ञात्वा देवता अप्येति । देवता अपि ऐति प्राप्नोति । क्रमेणेति शेषः । तद्योऽहं तानि यानि स्वरव्यञ्जनगतानि नरैरहेत्यत्वादहंनामकानि भगवद्रूपाणि । पुरुषस्थितानि सोऽसौ तान्येव रूपाणि सूर्यगतानि सूर्यनियताहोरात्रगतानि च । योऽसौ सोऽहं योऽसौ सूर्यगतो विष्णुः स भगवान् देवैरहेयत्वादहंनामकः । तदुक्तमृषिणा । सर्वगतभगवद्रूपाणामैक्यम् ऋषिणा उक्तम् । सूर्यः सूर्यगतः आत्मा आदानादिकर्ता हरिः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा अन्तर्यामी इत्युक्तमित्यनेनान्वयः । एतद् हैव एतदेव । नारायणाख्यं ब्रह्म उपेक्षेत उप इक्षेत जीवसमीपे पश्येत् जीवाद्भिन्नत्वेन सर्वोत्तमत्वेन जानीयादित्यर्थः ॥ ४ ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायाम् ऐतरेयभाष्यटीकायां
द्वितीयप्रपट्टके द्वितीयोऽध्यायः ॥ २ ॥ २ ॥ ४ ॥

# तृतीयोऽध्यायः

ऐतरेयोपनिषत्

॥ हरिः ॐ ॥ यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्मादिदं सर्वमुत्तिष्ठति स सम्प्रतिवित्पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येत्ययनं ह वै समानानां भवति य एवं वेद तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नमापश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश आकाशे हीदं सर्वं समोप्यत आवपनं ह वै समानानां भवति य एवं वेद तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्न-

मोषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधिवनस्पतीन्हि प्राणभृतोऽदन्ति तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहितास्तेऽन्नादा अन्नमितरे पशवस्तस्मात्त इतरान्पशूनधीव चरन्त्यधीव ह्यन्नेऽन्नादो भवत्यधीव ह समानानां जायते य एवं वेद ॥ १ ॥

भा— योऽसौ नारायणो देवः परमात्मा सनातनः ।
नित्याततगुणत्वात्स आत्मेत्युक्तः सदा श्रुतौ ॥
नारायणादिरूपेण पञ्चधाऽवस्थितः सदा ।
सर्वस्योत्थापकत्वात्स उक्थमित्यभिधीयते ॥
बृहतीसहस्ररूपे च स उक्थे पञ्चधा स्थितः ।
पञ्चभेदं हि तच्छस्त्रं तृचाशीतित्रयं च यत् ॥
पूर्वापरं तृचाशीत्य इति पञ्चात्मकं हि तत् ।
प्रथमे पञ्चकाद्भागे स्थितो नारायणः स्वयम् ॥
ऋक्त्रयाशीतिके पूर्वे गायत्रीच्छन्दआत्मके ।
वासुदेवः स्थितो नित्यमृगशीतित्रये तथा ॥
द्वितीये बृहतीच्छन्दस्यसौ सङ्कर्षणः स्थितः ।
यस्यावेशबलेनैव जीवः सङ्कर्षणोऽपरः ॥
पृथिवीं बिभर्ति सततं तत्प्रसादात्तवैभवः[1] ।
तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः ॥
प्रद्युम्नरूपी सततं स्थितो यस्यैव सन्निधेः ।
कामः प्रद्युम्ननामाभूत्तत्प्रसादात्तवैभवः[2] ॥

---

१. प्रद्युम्ने चानिरुद्धे च बलदेवे च केशवः ।
सन्निधानं विशेषेण करोति जगतां पतिः ॥
- इति भागवततात्पर्योद्धृत प्रमाणवचनम् ॥ १०/२८/२२

२. संकर्षणाच्चापि जयातनूजो बभूव साक्षाद्बलसंविदात्मा ।
सूत्रं स वायुः......। - इति म.भा.ता.नि. (३/१०)

उक्थस्यैवान्त्यभागे तु सोऽनिरुद्धो हरिः स्थितः ।
कामपुत्रोऽनिरुद्धाख्यं यदावेशेन लब्धवान् ॥
एवं पञ्चात्मकं विष्णुं बृहत्युक्थस्य देवताम् ।
यो वेद सम्यग्वेत्ता स तानि रूपाणि वै हरेः ॥
स्थितानि पञ्चभूतेषु पृथिव्याद्यभिधानि च ।
तदावेशात्पृथिव्यादिनाम भूतेषु पञ्चसु ॥
पृथुत्वात्पृथिवीनामा भूमौ नारायणः स्थितः ।
बलज्ञानस्वरूपत्वाद्वायुनामा स एव च ॥
वायौ सङ्कर्षणो नित्यं स्थित आकाशनामकः[१] ।
व्याप्तत्वाद्वासुदेवस्तु सदाऽऽकाशे स्थितः प्रभुः ॥
अनिरुद्धस्तथैवाप्सु बहुरूपो व्यवस्थितः ।
अम्नामा पालनान्नित्यं प्रद्युम्नो ज्योतिषि स्थितः ॥
ज्योतिर्नामा द्योतनाच्च बहुरूपः पृथक्पृथक् ।
यद्यप्यस्य हरेः सर्वरूपाण्यप्यखिलैर्गुणैः ॥
पूर्णान्यथापि चैकैकरूपेषु स पृथग्गणैः ।
व्यवहारान्पृथग्देवः करोतीव हि लीलया ॥
तस्मात्पृथगिवास्येति नाम विष्णोः परात्मनः ।
सर्वत्र सर्वनाम्नोऽपि व्यवहारार्थमीर्यते ॥
एतस्माद्धि हरेर्नित्यं जगदुत्तिष्ठति प्रभोः ।
मुक्तौ लये च तं याति स च सर्वाश्रयः प्रभुः ।
य एवं वेत्ति तं विष्णुमुपास्ते चापरोक्षतः ॥
स मुक्तः समजातीनामाश्रयश्च भविष्यति ।
स्वजातीनामुत्तमत्वपदयोग्या हि ये सुराः ॥
ब्रह्मेन्द्राद्यास्ते हि योग्याः साक्षादस्मिन्नुपासने ।
अन्येषां ज्ञानमात्रेण योग्यमाधिक्यमाप्यते ॥

१. सहस्रमूर्ध्नोऽस्य बतैकमूर्ध्नि ससप्तपातालगिरीन्द्रसागरा ।
धराखिलेयं ननु सर्वर्षपायति - इति म.भा.ता.नि.८/८८.

सङ्कर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ ।
भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः ॥
नारायणानिरुद्धौ तौ भोग्यवस्तुषु संस्थितौ ।
तर्पकौ सर्वलोकानां तस्माद्भोग्यौ न चर्व्यतः ॥
अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः ।
एवं पञ्चात्मकं विष्णुं य उपास्ते सदैव तु ॥
अवकाशप्रदः सोऽपि स्वजातीनां भविष्यति ।
भोक्ता चाप्यायकश्चैव तस्य विष्णोः प्रसादतः ॥
ब्रह्मेन्द्राद्याः स्वजातीयपदयोग्या अमुष्य च ।
योग्या उपासनस्य स्युस्तदन्ये ज्ञानमात्रके ॥
सङ्कर्षणश्च प्रद्युम्नो जङ्गमेषु व्यवस्थितौ ।
नारायणानिरुद्धौ तु स्थावरान्तर्गतौ प्रभू ॥
तत्राप्याकाशगो नित्यं वासुदेवो निरञ्जनः ।
प्राणानां भरणान्नित्यं प्राणभृन्नाम तद्धरेः ॥
न ह्यन्यः प्राणभर्ताऽस्ति तमृते पुरुषोत्तमम् ।
ओषणाच्च निधानाच्च स एवौषधिनामकः ॥
वननीयपतित्वाच्च स एव हि वनस्पतिः ।
अन्ने स्थित्वा तृप्तिदत्वं तस्याद्यत्वमपीष्यते ॥
पुरुषस्य हरेर्ये तु सदाकारेण संस्थिताः ।
देवगन्धर्वमर्त्याद्यास्तेषु सङ्कर्षणो हरिः ॥
प्रद्युम्नश्च स्थितो नित्यं पुरुषाकृतिरेव तु ।
तौ भोक्तारौ च भोग्यानां भोजकावखिलस्य च ॥
नारायणानिरुद्धौ तु तथान्यपशुषु स्थितौ ।
वृषभाश्वादिरूपेण तृप्तिदावखिलस्य च ॥
वाहनोपानहादीनामारोढारो नरादयः ।
यतः सङ्कर्षणश्चैव प्रद्युम्नस्तेषु संस्थितौ ॥

ततस्तयोर्हि सञ्चार उपरीव भविष्यति ।
आकाशगो वासुदेवः पञ्चमोऽत्राप्युपास्यते ॥
वाहनादियुतो मुक्तौ भवेदेतदुपासकः ॥–इत्यैतरेयसंहितायाम् ।

आत्मशब्दाच्च न भूतमात्रमत्रोच्यते । न च मुख्यार्थं परित्यज्योपचारार्थोऽङ्गीकर्तव्यो विरोधाभावे । सर्वनामवत्त्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र । वप नीरोमकरणावकाशप्रदानबीजवर्धनेष्विति च धातुः । तस्मिन्पञ्चके योऽन्नमन्नादं च वेद सोऽस्मिन्स्वजातियूथे विशेषेणान्नाद आजायते ह । तस्मिन्वेद अस्मिन्नाजायत इति पृथक्पृथक्पुनः पुनर्विशेषणादुपासकस्य स्वजातिसन्निधानाच्च स्वजाताविति ज्ञायते ।

क्षीराब्धिशयनं विष्णो रूपं यत्पुरुषाभिधम् ।
सङ्कर्षणश्च प्रद्युम्नस्तदाकारौ नृषु स्थितौ ॥
नारायणानिरुद्धौ तु पश्वाकारौ पशुस्थितौ ॥ –इति सत्तत्त्वे ।

गुणवैशेष्याभावेन वहनादिषु चरणमात्रादधीव चरन्तीत्यादाविवशब्दः ॥ १ ॥

टी— यो ह वा आत्मानमित्येतत्खण्डं व्याचष्टे । योऽसावित्यादिना । पञ्चविधमुक्थं वेदेत्येतत् विवृणोति । नारायणादिति । पञ्चविधमुक्थं वेदेत्यस्यार्थान्तरमाह । बृहतीति । बृहतीसहस्रस्य पञ्चविधत्वं निर्दिशति । पञ्चभेदमिति । तद्बृहत्युक्थाख्यं शस्त्रं कथम् । यत् तृचाशीतित्रयं यत् तृचाशीतित्रयस्य पूर्वमपरं चेति पञ्चविधम् । एवम् उक्तपञ्चकात् पञ्चकस्य प्रथमभागे नारायणः गायत्रीच्छन्दआत्मके पूर्वे ऋक्त्रयाशीतिके वासुदेवः स्थितः । द्वितीये ऋगशीतित्रये बृहतीछन्द आत्मके सङ्कर्षणः स्थितः । अपरः सङ्कर्षणः शेषः । तृतीयायामुष्णिक् छन्दसि तृचाशीत्यां प्रद्युम्नरूपी केशवः । उक्थस्य पञ्चविधबृहत्युक्थस्य अन्त्यभागे अनिरुद्धः स्थितः । स सम्प्रतिविदित्येतत् व्याचष्टे । एवमिति । सम्यग्वेत्ता सम्यग्ज्ञानी । पृथिवी वायुराकाश इत्यादि व्याचष्टे । तानीति । तानि नारायणादीनि । पृथिव्यादिनामानि निर्वक्ति । पृथुत्वादित्यादिना । भगवानेव बहुरूपः सन् पृथिव्यादिषु पृथक्पृथक्स्थितः ।

नारायणादिषु पृथिव्यादिषु पृथिव्यादिनाम्नां गुणाभिधानेन प्रवृत्तत्वात् पृथिव्यादिनामप्रवृत्तिनिमित्तगुणाः सर्वरूपेषु सन्ति न वा । यदि न सन्ति तर्हि रूपाणां मिथो भेदप्रसङ्गः । यदि सन्ति तर्हि कथमेकैकस्मिन् तच्छब्दप्रयोग इत्यत आह । यद्यपीति । पृथग्गुणैरेकैकगुणैः व्यवहारान् पृथक्करोतीव सर्वत्र सर्वनाम्नोऽपि तस्य नाम पृथगीर्यत इव व्यवहारार्थम् । पृथिव्यादि-नामभिर्नारायणादिव्यवहारसिद्ध्यर्थम् । एष वा आत्मोक्थमित्येतत् व्याचष्टे । एतस्मादिति । एतमेवाप्येतीत्येतद्व्याचष्टे । मुक्ताविति । अयनं ह वै इत्यस्य विवरणम् । स चेति । अयनं ह वै इत्येतत् फलकथनवाक्यशेषत्वेनापि व्याचष्टे । य एवमिति । सजातीनां देवत्वादिना समानजातीनां मध्ये उत्तमत्वमेव पदम् उत्तमत्वपदम् । तद्योग्याः तस्मिन् योऽन्नमन्नादं च वेद इत्यारभ्य आवपनं ह वै समानानां भवति य एवं वेदेत्यन्तानि वाक्यानि व्याचष्टे । सङ्कर्षणश्चेत्यादिना । तत्र अन्नान्नादयोर्मध्ये भोक्तृषु चेतनेषु भोग्यमन्नादि भगवतो भोग्यत्वं घटयति । तर्पकाविति । चर्व्यतस्चर्व्यत्वात् । ओषधिवनस्पतयोऽन्नमित्यादिव्याचष्टे । सङ्कर्षण इत्यादिना । सङ्कर्षणश्च प्रद्युम्नो जङ्गमेषु व्यवस्थितौ । इत्येतत् प्राणभृतोऽन्नमित्यस्य विवरणम् । ओषधिवनस्पतयोऽन्नमित्येतद्विवरणम् । नारायणानिरुद्धौ स्थावरान्तर्गता-विति । अन्नान्नादयोः यथावकाशप्रदः तथा तत्रापि स्थावरजङ्गमेष्वपि अवकाशगो वासुदेवो अवकाशप्रदः । प्राणभृतोऽन्नादमित्यत्र प्राणभृच्छब्दं हरौ निर्वक्ति । प्राणानामिति । ओषधिवनस्पतिशब्दौ हरौ योजयति । ओष-णाच्चेति । उषप्लुषदाहे इति धातुः । ओषणाद्दहनात् । वननीयानां सेव्यानां पतिः । वननीयपतिः तस्य भावः तस्मात् । ओषधिवनस्पतीन् हि प्राणभृतो अदन्तीत्यत्र ओषधिवनस्पतिनाम्नो हरेरद्यत्वं प्रतीयते । तत्कथं घटत इत्यत आह । अन्ने स्थित्वेति । तस्याद्यत्वमप्यन्ने स्थित्वा प्राप्तिदत्वमेव । तेषां य उभयतो दन्ताः पुरुषस्यानुविधां विहिता इत्येतद्व्याचष्टे । पुरुषस्येति । पुरुषस्य हरेः पुरुषाकारस्य हरेः आकारेण सदृशाकारेण । ते अन्नादा इत्यस्य अर्थः । तौ भोक्तारावित‍ि । अन्नमितरे पशवः इत्यस्यार्थः । नारायणा-निरुद्धाविति । अन्यपशुषु पुरुषाकारेभ्योऽन्येषु पशुषु । तस्मात्त इतरान्पशून् अधीवचरन्तीत्येतद्व्याचष्टे । वाहनेति । अधीव ह्यन्ये ह्यन्नादो भवती-

त्येतद्व्याख्याति । यत इति । तेषु आरोढृषु ततः तयोः सङ्कर्षणप्रद्युम्नयोः सञ्चारः तयोर्वाहनादिस्थितनारायणानिरुद्धयोरुपरि भविष्यति । अभिन्नत्वादि- वेति पूर्वत्र यथा वासुदेवस्य अवकाशप्रकाशप्रदत्वेनोपास्यत्वं तथाऽत्रापि । अधीव ह समानानां जायते एवं वेदेत्येतद्व्याचष्टे । वाहनादीति । पृथिवी वायुराकाश इत्यादौ भूतमात्रमुच्यत इति नाशङ्क्यमित्यत आह। आत्मशब्दादिति । आत्मशब्दस्य स्वरूपविवक्षया पृथिव्यादिषु सम्भवात् कुतो न भूतमात्रमुच्यत इत्यत आह । न चेति । आवपनमाकाश इत्यत्र वासुदेवस्य अवकाशप्रदत्वमुक्तमावपनपदेन । आवपनपदस्य अवकाशप्रदत्वं कुत इति तत्राह। वपेति ।तस्मिन् योऽन्नं चान्नादं च वेदाहमस्मिन्नन्नादो जायत इत्येतद्योजयति । तस्मिन्निति । अन्नम् अन्नशब्दवाच्यं नारायणमनिरुद्धं च अन्नादम् अन्नादश- ब्दवाच्यं सङ्कर्षणं प्रद्युम्नं च तस्मिन् अन्योन्यं च अन्नादं वेदेति स्थान- द्वयगतफलवाक्यतात्पर्यमाह । तस्मिन्निति । पृथक्पृथक् स्थानद्वये योऽन्न- मन्नादं च वेद सः अन्नाद आजायते ह । इति पुनः पुनर्विशेषात् उपासकस्य समानानाम् इति स्वजातिसन्निधानात् । स्वजातिवाचकपदसन्निधानात् । स्वजातौ अन्नादः आजायते । अधिको जायत इति ज्ञायत इत्यर्थः । उक्तार्थे प्रमाणमाह । क्षीराब्धीति । तदाकारो पुरुषाकारो । अधीव चरन्तीत्यत्र इव- शब्दाभिप्रायमाह । गुणेति । गुणवैशेष्याभावात् वाह्यवाहकभगवद्रूपाणाम् ।

आत्मानं नित्याततगुणं पञ्चविधं नारायणादिरूपेणोक्थं यो वेद स सम्प्रतिवित् सम्यग्ज्ञाता । ह वै प्रसिद्धिः । य उक्थं च पञ्चविधं वेद । पञ्चविधस्थिते बृहतीसहस्राख्योक्थे च पञ्चधा स्थितमात्मानं वेद सः सम्प्रतिवित् । उक्थशब्दार्थमाह । यस्मादिति । यस्मादात्मन इदं समुत्तिष्ठतीति उक्थम् । एष आत्मा पृथिवी वायुराकाश आपो ज्योतींषीति पञ्चधा । पृथिवीस्थितः प्रथितत्वात् पृथिवीनामा नारायणः । बलज्ञानस्वरूपत्वात् वायुनामा सङ्कर्षणो वायौ आकाशे स्थितः । व्याप्तत्वादाकाशनामा वासुदेवः । अप्सु स्थितः आपालनात् अंनामा अनिरुद्धः ज्योतिषि स्थितो द्योतनात् ज्योतिर्नामा प्रद्युम्न इत्यर्थः । एवं पञ्चरूपाणामुक्थत्वमित्याह । एष वा आत्मोक्थमिति उक्थशब्दार्थमाह । एतस्मादिति । एतमेवाप्येति प्राप्नोति मुक्तौ प्रलये च सः सर्वेषाम् अयनम् आश्रयश्च य एवं वेद समानानां

समानजातीनाम् अयनम् आश्रयो भवति । तस्मिन् भगवद्रूपपञ्चके अन्नम् अन्नस्थितत्वादन्ननामकं नारायणमनिरुद्धं च अन्नादं च भोक्तृषु स्थितत्त्वादन्नादनामकं सङ्कर्षणं प्रद्युम्नं च यो वेद सोऽस्मिन् स्वसमानजातावन्नाद आजायते ह। स्वसमानजातौ अधिकभोगवान् भवतीत्यर्थः । अस्योपासकस्यान्नं भोग्यं च भवति सम्पद्यते । आपश्च पृथिवी वा अन्नम् अनिरुद्धनारायणावन्नमित्युच्येते । अन्नानि प्रसिद्धान्नानि एतन्मयानि एतयोरधीनानि । ज्योतिश्च प्रद्युम्नश्च वायुश्च सङ्कर्षणश्च अन्नादभोक्तृषु स्थितौ । अखिलस्य भोक्तारौ भोजकौ च अन्नादमित्युच्येते । इदं सर्वं भोक्तृजातम् एताभ्याम् अन्नान्नादयोरेतयोरनुग्रहेण अन्नमत्ति हि । आकाशः वासुदेवः आवपनम् अवकाशप्रदः । इदं सर्वचेतनाचेतनजातम् आकाशे वासुदेवप्रदत्तावकाशे समोप्यते हि अवस्थाप्यते हि । य एवं वेद समानानां आवपनम् अवकाशप्रदो भवति । तस्मिन् भगवद्रूपपञ्चके योऽन्नमन्नादं च वेद । सः अस्मिन् स्वसमानजातौ अन्नाद आजायते । अस्यान्नं च भवति । ओषधिवनस्पतयोऽन्नम् ओषणात् सर्वस्य दहनात् स्वस्मिन् सर्वस्य निधानात् ओषधिनामा नारायणः । वननीयानां सेव्यानां पतित्वात् वनस्पतिः अनिरुद्धः । अन्नम् अन्नशब्दवाच्यौ नारायणानिरुद्धौ ओषधिवनस्पतिषु स्थितौ । अन्नादम् अन्नादनामा सङ्कर्षणः प्रद्युम्नश्च प्राणभृतः। प्राणानां प्रजानां भरणात् प्राणभृन्नामानौ । प्राणभृत्सु जंगमेषु स्थितौ प्राणभृतः जीवाः ओषधीवनस्पतीनदन्ति । उपजीवन्ति हि । तेषां जङ्गमानां मध्ये उभयतो दन्ताः उभयतो दन्तवन्तः अधरोत्तरदन्तवन्तः पुरुषस्य पुरुषाकारस्य हरेः अनुविधां सदृशाकारतां विहिताः प्रापिताः देवगन्धर्वमर्त्याद्याः ते अन्नादाः । तेषु सङ्कर्षणप्रद्युम्नौ पुरुषाकारौ स्थितौ इतरे पशवः इतरपशुषु वृषभाश्वादिषु तदाकारौ अन्नम् अन्ननामानौ नारायणानिरुद्धौ स्थितौ। तस्मादन्नादसङ्कर्षणप्रद्युम्नाधिष्ठितत्वात् ते नरादयः इतरान् पशून् वृषभाश्वादीन् अधिचरन्ति अधिरुह्य चरन्ति । स्थावरजङ्गमगतभगवद्रूपाणां मिथो वैशेष्याभावात् तद्गतरूपाणां च रूपाणां चरणमात्रविवक्षया इवेत्युक्तम् । अन्ने अन्नादाः अधिचरन्ति हि । अन्ननामके भगवद्रूपे अन्नादनामकं भगवद्रूपम् अधीव भवति हि । य एवं वेद सः समानानां मध्ये अधीव चरति हि । अस्वातन्त्र्यादिवेत्युक्तम् ॥ १ ॥

ऐतरेयोपनिषत्

तस्य य आत्मानमाविस्तरां वेदाश्नुते हाऽऽविर्भूय ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्स आत्मानमाविस्तरां वेदौषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्सु प्राणभृत्सु त्वेवाविस्तरामात्मा तेषु हि रसो दृश्यते न चित्तमितरेषु पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि सम्भवाः ॥ ॥ २ ॥

भा— आविर्भावं तारतम्याद्यो वेद परमात्मनः ।
स तस्यैव विशेषेण प्रीतियोगाद्भविष्यति ॥
स्थावरं जङ्गमं चैव भूयस्त्वेनाश्नुते हरिः ।
आविर्भूतस्तेषु सदा सम्यक्स्वात्मानमेव च ॥
तारतम्यात्सन्निहितं सर्वभूतेषु केशवः ।
वेत्त्येक एव विष्णोर्यद्विशेषावेशनं सदा ॥
जङ्गमेषु च वृक्षेषु नैव तादृक्शिलादिषु ।
तस्माद्वृक्षादिषु रसश्चित्तं चलनवत्सु च ॥
दृश्यते न शिलाद्येषु सन्निधिर्न हि तादृशी ।
शिलाद्येषु स्थितो विष्णुर्भारदार्ढ्यादिकारणम् ॥
नैव चित्तादिकस्यातो वृक्षाद्या उत्तमास्ततः ।
विशेषोऽयं पदार्थानां न तु विष्णोः कथञ्चन ॥
यत्र विष्णुर्गुणाधिक्यं दर्शयेद्वस्तु तद्वरम् ।
गुणपूर्णो हि सर्वत्र स्वयं विष्णुः सनातनः ॥
वृक्षेभ्योऽप्यधिकं विष्णुर्जङ्गमेषु प्रकाशितः ।
तेभ्योऽपि पुरुषे विष्णुर्गुणाधिक्यप्रकाशकः[1] ॥ – इत्यादि च ।

य आत्मानं परमात्मानमाविस्तराम् आविर्भावतारतम्येन वेद स तस्य विष्णोरेव। सर्वेषां तदीयत्वेऽपि प्रियत्वात्तदीयत्वविशेषणम्। ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्तत्सर्वं शिलादिभ्यो भूयस्त्वेन तेष्वाविर्भूतोऽश्नुते भगवान्। स एव च नारायणः सम्यक्स्वात्मानमाविस्तरां वेद। अन चेष्टायामिति धातोश्चेष्टावत्त्वमेव प्राणभृत्त्वं पश्वादीनां ज्ञानानुसारेण ह्युत्पत्तयः सम्भवाः ॥ २ ॥

टी— तस्य य आत्मानमाविस्तरां वेदेत्येतत् खण्डं व्याचष्टे। आविर्भावमित्यादिना। यः परमात्मा आविर्भूतेषु सन्निधानविशेषं तारतम्याद्वेद स तस्य भविष्यति। तदीयो भविष्यति। कुतः विशेषतः प्रीतियोगात्। अश्नुते ह्याविर्भूय इत्यारभ्य प्राणभृदित्यन्तं व्याचष्टे। स्थावरमिति। स्थावरं जङ्गमं च भूयस्त्वेन शिलादिभ्यो विशेषेणाविर्भूतः अश्नुते प्राप्नोति। स आत्मानमाविस्तरां वेदेत्येतद्व्याचष्टे। तेष्विति। सर्वभूतेषु तारतम्येन सम्यक् संस्थितं स्वात्मानं स केशवः एक एव सम्यग्वेत्ति जानाति। आविर्भावतारतम्यं दर्शयति। विष्णोरिति। जङ्गमेषु वृक्षेषु च। विष्णोर्विशेषावेशनं यत् यादृक् तादृक् शिलादिषु नैवेत्यन्वयः। ओषधिवनस्पतिषु हीत्यादिव्याचष्टे।

---

१. जीवाःश्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे।
ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः॥
तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः।
तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः॥
रूपभेदविदस्तत्र ततश्चोभयतोदतः।
तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात्॥
ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः।
ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः॥
अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान् स्वकर्मकृत्।
मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः॥
तस्मान्मय्यर्पिताशेषक्रियार्थात्मा निरन्तरः।
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः।
न पश्यामि परं भूतमकर्तुः समदर्शनात्॥ - इति भागवते (३/२९/२८-३३)

तस्मादिति । तस्मादाविर्भाववैशेष्यात् वृक्षादिषु रसश्चरणवत्सु जङ्गमेषु चित्तं शिलाद्येषु रसः चित्तं च न दृश्यते । तस्माद्शिलादिषु तादृशी सन्निधिर्नहि । चित्तादिकस्य कारणं नैव । अतः शिलादेर्वृक्षाद्या उत्तमाः । भगवत्सन्निधानवैशेष्यात् । पदार्थेषु विशेषश्चेत् किमयं विशेषो भगवतोऽप्यस्ति नेत्याह । विशेष इति । तस्य य आत्मानमाविस्तरां वेदेत्येतद्योजयति । य इति । अश्नुते ह्याविर्भूय इत्यादि योजयति । ओषधीति । स आत्मानमित्येतद्योजयति । स एव चेति । अत्र प्राणभृच्छब्देन पश्वादय एव विवक्षिताः । कथं तेषामेव प्राणभृत्वमित्यत आह । अन चेष्टायामिति । यथाप्रज्ञं हि सम्भवा इत्येतद्व्याचष्टे । ज्ञानेति ।

य आत्मानं परमात्मानम् आविस्तरामाविर्भावतारतम्येन वेद स तस्य तदीयो भवति । तत्प्रियत्वात् । ये ओषधिवनस्पतयः यच्च किञ्च प्राणभृत् तत्सर्वं स परमात्मा भूयो भूयस्त्वेन शिलादिभ्यो विशेषेण आविः आविर्भूतः । अश्नुते हि प्राप्नोति । स आत्मानं स्वयमेव आविस्तरां वेद सम्यग्वेद । भगवत आविर्भावतारतम्येन पदार्थानां तारतम्यमाह । ओषधीत्यादिना । ओषधिवनस्पतिषु हि रसो दृश्यते । न शिलादिषु । तस्मात्ते शिलादिभ्य उत्तमाः । प्राणभृत्सु चेष्टावत्सु पश्वादिषु चित्तं दृश्यते । तस्मात् आत्मा प्राणभृत्स्वेव आविस्तराम् ओषध्यादिभ्यो विशेषेणाविर्भूतो भवति । प्राणभृत्सु चित्तं दृश्यते वनस्पतिषु रसो दृश्यते अतः साम्यमेव तेषामित्यत आह । तेष्विति । प्राणभृत्सु रसोऽपि दृश्यते । अपिशब्दात् चित्तम् । इतरेषु ओषध्यादिषु रस एव चित्तं न दृश्यते । पश्वादिभ्यः पुरुष एव विस्तरां तदुपपादयति । स हीति । स पुरुषः प्रज्ञानेन सम्पन्नतमः पश्वादिभ्यो अतिशयेन विशिष्टज्ञानयुक्तः विज्ञातं वदति । मनसा विज्ञातं वाचा वदतीत्यर्थः । मर्त्येन शरीरेण अमृतं मोक्षमीप्सति इच्छति । एवं सम्पन्नः विशिष्टज्ञानेन पुरुष इति शेषः । अथ इतरेषां पशूनां पुरुषाद्वैलक्षण्यमुच्यते । इतरेषां पशूनाम् अशनापिपासे एव अशनापिपासाविषयमेवाभिज्ञानम् । एव शब्दव्यावर्त्यमाह । तं विज्ञातं वदन्तीति । लोकालोकौ लोकसाधनपुण्यपापे । त एतावन्तो भवन्ति । ते पशवः एवमुक्तविशेषवन्तो भवन्ति । यथाप्रज्ञं हि सम्भवा उत्पत्तयः यथाप्रज्ञं प्रज्ञानुसारेण भवन्ति हि ॥ २ ॥

ऐतरेयोपनिषत्

स एव पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेऽत्येनं मन्यते यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानस्ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति प्राणस्य ह्यन्वपायमेता अपियन्ति स एष वाचश्चित्त-स्योत्तरोत्तरिक्रमो यद्यज्ञः स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः स एष यज्ञानां सम्पन्नतमो यत्सोम एतस्मिन्ह्येताः पञ्चविधा अधिगम्यन्ते यत्प्राक्सवनेभ्यः सैका विधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी ॥ ३ ॥

भा— योऽस्मिन् पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान्स एष पुरुषः समुद्रः समुद्रिक्तोऽन्येभ्यः । स जीवो यद्यपि भगवत्प्रसा-दात्सर्वलोकाधिपो भवति सर्वलोकानतीत्य यत्किञ्चिदलौकिकं मोक्षा-ख्यमप्यश्नुते तथापि तमेनमात्मशब्देन प्रस्तुतं विष्णुमत्येव मन्यतेऽ-धिकमेव मन्यते स्वात्मनः सर्वस्माच्च मुक्तोऽपि न तेन साम्यं तद्भावं वा मन्यते । 'कृष्णो मुक्तैरिज्यते वीतमोहैः'[१] । 'मुक्तानां परमा गतिः'[२] । 'अमृतस्यैष सेतुरि'त्यादिवाक्याच्च । यद्यपि देवलोकाधिपत्यं तद्योग्यस्य विष्णुर्ददाति तदप्यश्नुवीतैव । बहुगणिकादिपरिवाररूपमशुचीदं पदमि-त्यादिबुद्ध्या नापह्नवीत । एनं भगवन्तमतिमन्येतैव सर्वथा स्वतः सर्व-स्माच्चाधिकमेव मन्येत । यद्यमुं लोकमश्नुते प्राप्नोति अश्नुवीत भुञ्जीत । पृथिवीलोकाधिपत्येऽपि विष्णोराधिक्यं सत्पुरुषो मन्यत इति

---

१. महाभारततात्पर्यनिर्णयोदाहृत महाभारतवचनम् । (२/६२)

२. विष्णुसहस्रनामसु ।

प्रत्यक्षसिद्धत्वान्न पृथगुक्तम् । अतिशब्दाद्यद्ध किञ्चेति प्रथमोक्तो मोक्ष इति सिद्धम् । अन्तरिक्षप्राप्तेरल्पत्वान्मोक्षे स्वतः सिद्धत्वाच्चातिमन्यते इति सिद्धवचनमेव कृतम् । स्वर्गादिप्राप्तेरधिकैश्वर्याद्भगवत्समोऽहं भगवत्स्वरूप इति वा मन्तुं प्राप्तिरस्तीत्येवैनं मन्येतेति सावधारणा विधिः । न च मन्यते इति काममात्रम् । मनु अवबोधन इति धातोः । न ह्यवबोध एव कामः । अन्यथा राज्यं जानन्नपि राज्यकाम इति स्यात् । न च मन्यते मन्येतेति द्विविधः प्रयोगस्तस्मिन्पक्षे युज्यते । न च सर्वलोकमतीत्याश्नतो मुक्तस्य मुक्तेरन्यत्र कामो विद्यते । सर्वलोकाधिकं च मुक्तिं विना नान्यत् । तस्मान्मुक्तैरमुक्तैरपि भगवान्सर्वोत्तमत्वेन चिन्त्य इति सिद्धम् ।

पुरुषस्थपञ्चभूतेषु पञ्चरूपो हरिः स्थितः ।
प्रद्युम्नादिस्वरूपेण ज्योतिरादौ पृथक्पृथक् ॥
स एव च पुनर्वायौ पञ्चधाऽवस्थितः प्रभुः ।
प्राणादिरूपे वसति ह्यनिरुद्धादिरूपवान् ॥
अनिरुद्धः स प्रद्युम्नस्तथा सङ्कर्षणः प्रभुः ।
वासुदेवो नारायणः पञ्चरूप इति क्रमात् ॥
पञ्चरूपोऽपि भगवान्यस्माद्वायौ विशेषतः ।
स्थितस्तेन च खादिभ्यो वायुरेव विशिष्य ते ॥
अत एव पृथिव्यादिस्वरूपा मनआदयः ।
देवाः प्राणाश्रिता नित्यं गच्छन्ति प्राणमन्वपि ॥
पृथिवीमयं मनस्तत्र शेषवीन्द्रशिवेन्द्रकाः ।
कामानिरुद्धौ देवगुरुर्मनोदेवाः सचन्द्रकाः ॥
श्रोत्रमाकाशरूपं च मित्रधर्मजलाधिपाः ।
कुबेरश्च दिशां देवाः श्रोत्रदेवा इति श्रुताः ॥
ज्योतीरूपं तथा चक्षुश्चक्षुर्देवो रविः स्मृतः ।
किञ्चित्तेजोयुता वाक्च विशेषेण त्वबात्मिका ॥

उपचीयते ततः साऽद्भिस्तदभावे च शुष्यति ।
तृषितस्य हि वागेव पूर्वं मन्दा प्रवर्तते ॥
वाग्देवते ततो वह्निरुमा चापि प्रकीर्तिते ।
चक्षुष्ट्वमग्नेः श्रोत्रत्वं चन्द्रस्यापि सहोच्यते ॥
स्वाहाया अपि वाक्त्वं च पर्जन्यस्य मनःस्थितिः ।
द्वितीयमेतदास्थानं श्रुतिवाक्यप्रमाणतः ॥
शेषवीन्द्रशिवादीनां मनआदिस्वरूपिणाम् ।
आश्रयो वायुरेवैकस्तस्य नारायणः स्वयम् ॥
तस्माद्वायुवशानां हि वाक्चित्तादिस्वरूपिणाम् ।
देवानां क्रमवृत्तिभ्यो जाते यज्ञेऽपि केशवः ॥
अग्निहोत्रादिके नित्यमनिरुद्धादिरूपकः ।
पञ्चधाऽवस्थितः सोमे पञ्चरूपो व्यवस्थितः ॥
सवनत्रयात्पूर्वके च सवनत्रितये परे ।
अनिरुद्धादिरूपेण क्रमेणैव व्यवस्थितः ॥
तमेतं परमं विष्णुं मुक्तोऽप्यत्येव मन्यते ।
अधिकं ह्येव तस्मात्तं मन्येतान्योऽपि सर्वदा' ॥ इत्यादि च ॥
पञ्चरूपभगवद्ध्यानार्थमेव चैतत्पञ्चविधत्वं सर्वत्रोक्तम् ॥ ३ ॥

टी— स एष पुरुषः समुद्र इत्येतत्खण्डं व्याचष्टे । योऽस्मिन्नित्यादिना । स एष इति परामर्शविशेषमाह । योऽस्मिन्निति । सर्वं लोकम् अतीत्येत्यादि व्याचष्टे । स इति स भगवदुपासको जीवः । सर्वलोकमित्यस्यार्थः । सर्वलोकाधिप इति । यद्ध किञ्चेत्यस्यार्थः । यत्किञ्चिदिति । अतिशब्दार्थः। सर्वलोकमतीत्येति । यद्यमुं लोकमित्येतद्विवृणोति । यद्यपीति । अश्नुवीतैव प्राप्नुयादेव । अवधारणतात्पर्यमाह । बह्विति । अत्येवैनं मन्यतेत्यस्यार्थः। एनमिति । यद्यमुं लोकमित्येतत् प्रकारान्तरेण योजयति । यद्यमुमिति । यदीमं लोकमश्नुते तदाऽत्येनं मन्यते इत्यनुक्तेः कारणमाह । पृथिवीति । यद्धवा किञ्चेत्यस्य मोक्षविषयत्वज्ञापकमाह । अतिशब्दादिति । यद्ध किञ्चाश्नुते

यद्यन्तरिक्षलोकमश्नुते । इत्यत्र अत्येनं मन्यत इति सिद्धवचनस्य यद्यमुं लोकमश्नुवीतात्येवैनं मन्यतेत्यत्र सावधारणविधिवचनस्य च प्रयोजनविशेषमाह। अन्तरिक्षप्राप्तेरिति । अत्येनं मन्यत इत्यादेः प्राप्तं प्राप्तं लोकमतिक्रम्य पुनरधिकलोकमिच्छतीति यदपव्याख्यानं तदपाकरोति । न चेति । अन्यथा अवबोध एव कामश्चेत् बाधकान्तरं चाह । न च मन्यत इति । द्विविधप्रयोगः सिद्धरूपो विधिरूपश्च न युज्यते । किन्तु मन्यत इत्येव स्यात् । न तु मन्येतेति इच्छाया अविधेयत्वादिति भावः । यद्ध किञ्चाश्नुते तेन मन्यत इति । अत्र मन्यत इत्यस्य इच्छार्थत्वाङ्गीकारे बाधकान्तरं चाह । न चेति । अश्नुतो भोगाननुभवतः । स एष पुरुषः पञ्चविध इत्येतत् प्रमाणेन व्याचष्टे । पुरुषस्येति । स एष वायुः पञ्चविध इत्येतद्व्याचष्टे । स एवेति । प्राणादिरूपे वायावित्यन्वयः । पञ्चरूपाण्यत्र विवक्षितक्रमेण दर्शयन्निर्दिशति । अनिरुद्ध इति । पञ्चविधस्य भगवतः पञ्चभूतेषु स्थितिमुक्त्वा वायावपि पञ्चधास्थितिरुच्यते । तत्प्रयोजनमाह । पञ्चरूप इति । वायोः खादिभ्यो विशिष्टत्वज्ञापनं प्रयोजनमिति भावः । ता एता देवताः प्राणापानयोरेव निविष्टा इत्येतद्व्याचष्टे । अत एवेति । वायोर्विशिष्टत्वात् पृथिव्यादिस्वरूपा मनआदयः इत्यत्र क्रमो न विवक्षितः । पृथिव्यादिस्वरूपाः पृथिव्याद्यात्मकाः । प्राणस्य ह्यन्वपायमेता अपियन्तीत्यस्यार्थः । गच्छन्तीति । मनआदिस्वरूपं तदभिमानिनश्चाह । पृथिवीमयमिति । पृथिव्यात्मकं वागिन्द्रियं ततः अबाद्यात्मकत्वात् । तदभावे अबभावे । तदुपपादयति । तृषितस्येति । ततः अप्तेजआत्मकत्वात् । अत्रोक्तमनआद्यभिमानिनां केषाञ्चित् श्रुत्यन्तरे अन्यथोक्तेर्गतिमाह । चक्षुष्ट्वमिति । अग्नेरत्र चक्षुष्ट्वं चक्षुरभिमानित्वं सहोच्यते। वागभिमानित्वमविहायेत्यर्थः । एतदग्नेर्द्वितीयमास्थानम् । एतच्छक्षुर्द्वितीयमास्थानम् । एवमुत्तरत्रापि योजना । ता एताः प्राणापानोयोरेव निविष्टा इत्येतमर्थं निगमनरूपेणाह । शेषेति । स एष वाचश्चित्तस्येत्येतद्व्याचष्टे । तस्मादिति । क्रमेण वृत्तयः । तत्तदिन्द्रियप्रेरणारूपा इत्यर्थः । ताभ्यो वृत्तिभ्यो जाते यज्ञे स्थितः । स एष यज्ञानां सम्पन्नतमो । यत्सोम इत्येतद्व्याचष्टे । सोम इति । सोमस्य पञ्चविधत्वं निर्दिश्य तत्र पञ्चरूपाणाम् अवस्थितिमाह । सवनेति । सवनत्रयात् पूर्वके भागे सवनत्रितये । परे त्रितयात् परस्मिन् भागे ।

अनेन यत्प्राक् सवनेभ्य इत्याद्युक्तार्थं भवति । बहुस्थलेषु पञ्चविधत्वोक्तेः प्रयोजनमाह । पञ्चरूपेति ।

स एष पुरुषः पश्वादिभ्य आधिक्येन पुरुषे सन्निहितो भगवान् समुद्रः । अन्येभ्यः समुद्रिक्तः सम्पूर्णः सः तदुपासको जीवः यदि सर्वलोकमश्नुते सर्वलोकाधिपत्यं प्राप्नोति तदापि तमेनमात्मानमतिमन्यते । स्वात्मनः सर्वस्माच्चाधिकं मन्यते । न त्वैक्येन साम्येन वा । अति सर्वलोकमतिक्रम्य यत्किञ्चिदलौकिकं मोक्षाख्यं सुखमश्नुते प्राप्नोति यदि तदाऽप्येनम् अति मन्यते ह । यद्यन्तरिक्षलोकमश्नुते । तदाऽप्येनमतिमन्यते यद्यमुं लोकं स्वर्गलोकम् अश्नुवीत तदाऽप्येनमतिमन्यते वै । स एष पुरुषस्थपञ्चरूपेषु पञ्चधा स्थितः ततः । पुरुषस्य पञ्चभूतानां मध्ये यदुष्णं ज्योतिः तच्च प्रद्युम्नः ज्योतिर्नामा अवस्थितः । यानि खानि ये अवकाशाः तेषु स आकाशः स वासुदेवः स्थितः । अथ देहे यल्लोहितं श्लेष्मा तेषु ता आपः अन्नामाऽनिरुद्धः यच्छरीरं तस्मिन् सा पृथिवीनामा नारायणः । यः प्राणः तस्मिन् वायुः वायुनामा सङ्कर्षणः । स एष वायुः प्राणोऽपानव्यान उदानः समान इति पञ्चविधः । एवं पञ्चविधे वायौ स भगवान् प्राणादिनामा अनिरुद्धादिक्रमेण स्थितः । चक्षुःश्रोत्रं मनो वागिति चक्षुराद्यभिमानिन्यः । ता एता देवताः प्राणापानयोरेव निविष्टाः प्राणापानादिरूपवायावाश्रिताः ता एव देवताः प्राणस्यापायम् अनुगमनानुसारेण यन्त्यपि गच्छन्ति च । यद्यज्ञो यो यज्ञो यत् यः यज्ञः सः एष वाचश्चित्तस्य वाक् कीर्तनाद्यभिमानिनां देवानाम् उत्तरोत्तरक्रमः। उत्तरोत्तरक्रमवतां तेषां प्रेरणया जातः । स एष यज्ञः अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति पञ्चविधः । एवं पञ्चविधे यज्ञे पञ्चविधो भगवान् स्थितः अनिरुद्धादिक्रमेण यत् यः सोमः स एषः यज्ञानां सम्पन्नतमः सम्पत्तिकारणम् । एतस्मिन् सोमे पञ्चविधा एता अनिरुद्धादिमूर्तयः अधिगम्यन्ते स्थिता इति ज्ञायन्ते । सोमस्य पञ्चविधत्वं निर्दिशति । यदिति । यत् सवनेभ्यः प्रातर्मध्यन्दिनसायंसवनेभ्यः प्राक् पूर्वभागः सा एका विधा । पञ्चविधानां मध्ये एका । त्रीणि सवनानि तिस्रो विधाः । यत्सवनत्रयादूर्ध्वम् उपरिभागः सा पञ्चमी विधा ॥ ३ ॥

ऐतरेयोपनिषत्

यो ह वै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूह्लं स सम्प्रतिविदेष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूह्लो यदेतन्महदुक्थं तदेतत्पञ्चविधं त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतो गायत्र्युष्णिग्बृहतीत्रिष्टुब्द्विपदेति च्छन्दस्तः शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत्स्तोभसहस्रं भवत्येवं ह्येताः पञ्चविधा अनुशस्यन्ते यत्प्राक्तृचाशीतिभ्यः सैका विधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी तदेतत्सहस्रं तत्सर्वं तानि दश[1] दशेति वै सर्वमेतावती हि संख्या दश दशतस्तच्छतं दश शतानि तत्सहस्रं तत्सर्वं तानि त्रीणि च्छन्दांसि भवन्ति त्रेधा विहितं वा इदमन्नमशनं पानं खादस्तदेतैराप्नोति ॥ ४ ॥

भा— यज्ञेषु यज्ञाननामानं याज्यत्वात्पुरुषोत्तमम् ।
अधिरूढं तथाऽहस्सु चाहर्नामानमेव तु ॥
अहार्यत्वाद्धि देवेषु देवं सर्वोत्तमत्वतः ।
एवं च सर्वनामानं सर्वेषु स्थितमच्युतम् ॥
स्तोमादिषु च यो वेद स सम्यग्विदिति श्रुतः ।
य एष उक्थनामाऽसौ सर्वोत्थापनको हरिः ॥
महांश्च परिपूर्णत्वात्सहस्रबृहतीस्थितः ।
अहरह्नां सयज्ञानां यज्ञो देवाधिकोऽपि सः ॥
अनिरुद्धादिरूपेण स विष्णुः पञ्चधा स्थितः ।
स्तोमसामचितिच्छन्दश्शस्त्रेष्वपि पृथक्पृथक् ॥

---

१. शब्दो बहुत्ववचनः शतमित्यतश्च (१/१६), इति
शब्दः शतं दश सहस्रमिति स्म यस्मात् । (१/१७) इति च म.भा.ता.नि.

एकैकमेव तद्रूपमनिरुद्धादिपञ्चकम् ।
प्रस्तावादिष्वपि विभुः पञ्चधैव व्यवस्थितः ॥
प्रस्तावादीन्पञ्चकृत्वस्तस्मादेव प्रकुर्वते ।
पञ्चरूपं तमेवैकं स्तोतुमेव पृथक्पृथक् ॥
तत्र ये स्तोमशब्दाश्च संस्थिता बहुकोटयः ।
पृथक्पृथक्तेऽपि विष्णोः प्रादुर्भावान्प्रचक्षते ॥
अनन्तरूपो हि हरिः शब्दोऽप्येष ह्यनन्तधा ।
विष्णोः सहस्रनाम्नस्तु यत्तद्रूपसहस्रकम् ॥
बृहतीसहस्रमेतच्च तद्वक्ति हि पृथक्पृथक् ।
सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः ॥
नामानि विष्णोरुच्यन्ते सहस्रमिति चाख्यया ।
अनन्तनामवचने त्वशक्तत्वात्सहस्रकम् ॥
नाम्नां पृथगिदं प्रोक्तमनन्ततनुवाचकम् ।
विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये ॥
आसीत्सहस्रमित्याख्या सहस्रं मुख्यतोऽमितम् ।
[1]ब्रह्म यावत्तावती वागिति वेदप्रमाणतः ॥
सहैवानन्तरूपैस्तु सरणेन सहस्रकम् ।
नाम्ना सह सृतेरेव रूपाणां वा सहस्रता ॥
बृहतीसहस्रं चैतस्माद्रूपानन्ताभिधायकम् ।
पृथक्पृथग्घि नामार्था ऋच एताः प्रकीर्तिताः ॥
सर्वनामात्मकं तस्मादृक्सहस्रमिदं हरेः ।
सर्वरूपाण्यतो विष्णोस्संस्तुतान्यमुनैव हि ॥

---

१. यावद्ब्रह्म विष्ठितं तावती वाक् - इति श्रुतिः । - तत्त्वनिर्णयोद्धृतश्रुतिः ।
कालो व्याप्तस्तथा ह्यंशाः कालिका व्याप्य सस्थिताः ।
आकाशश्च तथा व्याप्तः वेदाः सर्वेऽप्यनन्तकाः ॥
तद्वर्णा अप्यनन्ताश्च प्रत्येकं व्याप्य संस्थिताः ॥
- इति योगदीपिकायाम् (१०/८, ९)

मत्स्यकूर्मक्रोडसिंहबटुभार्गवराघवाः ।
कृष्णबुद्धौ च कल्कीति रूपाणां दशकं हरेः ॥
पञ्चभेदविभिन्नेन ह्यृक्सहस्रेण शंस्यते ।
रूपाणां पञ्चकं पूर्वमपरं पञ्चकं हरेः ॥
प्रस्तावाद्यैरानिधनैः स्तूयते सामभक्तिभिः ।
तानि रूपाण्यस्य दश सर्वरूपात्मकानि च ॥
दशनामानि चास्यैव सर्वरूपाभिधान्यपि ।
पञ्चकं सामभक्तीनामृक्सहस्रं च तद्वयम् ॥
स्तावकं सर्वरूपाणामत एव रमापतेः ।
दशेति सर्वनामैतत्प्रथितं मुख्यतः श्रुतौ ॥
शं रूपं भगवन्तं यद्द्याव्यक्त्या समस्तशः ।
दशेत्यमितनाम्नां तदाख्या रूपेषु शंददेः ॥
सर्वनामार्थवचनात्पञ्चकद्वितयस्य च ।
अभूद्दशेति वै नाम तस्मादेतद्दशाखिलम् ॥
दशैव मूलसङ्ख्या च तद्विभेदाः शतादयः ।
ऋक्सहस्रमिदं तस्मादनन्तगुणमच्युतम् ॥
अनन्तशक्तिममितरूपनामानमेव च ।
वक्ति च्छन्दस्त्रयं चात्र तृचाशितित्रयात्मकम् ॥
अशनादित्रिकं तच्च भूत्वा विष्णुमुपैति च ।
सर्वच्छन्दोऽभिधश्चैव सर्वदेवाभिधस्तथा ॥
सर्वमुन्यभिधश्चैव सर्ववस्त्वभिधो हरिः ।
अनन्तपूर्णगुणकस्तस्माज्ज्ञेयो रमापतिः ॥
मुख्यतोऽस्यां च विद्यायां योग्य एकश्चतुर्मुखः ।
एकदेशपरिज्ञाने त्वन्ये योग्याः शिवादयः' ॥ इति च ।
त्रिविधो ह्यनिरुद्धोऽसावध्यात्मादिविभेदतः ।
अतस्त्रिवृदिति प्रोक्तस्तथा पञ्चदशात्मकः ॥

प्रद्युम्नः पञ्चभूतेषु ह्यध्यात्मादिविभेदतः ।
लिङ्गसप्तदशस्थत्वात्तावान्सङ्कर्षणः श्रुतः ॥
सप्तधातुषु संस्थः सन्नध्यात्मादिविभेदतः ।
एकविंशो वासुदेवो मन आदिचतुष्टये ॥
गुणत्रये च प्रकृतावध्यात्मादिविभेदतः ।
मूलरूपेण च सह पञ्चविंशात्मकः प्रभुः ॥
नारायणस्त्वचिन्त्यात्मा स एकोऽपि ह्यनन्तधा ।
गायकानां त्राणतोऽसौ गायत्रमनिरुद्धकः ॥
प्रद्युम्नो हि रथारूढस्तेन चोक्तो रथन्तरम् ।
बृहद्रूपो बृहन्नामा तथा सङ्कर्षणः प्रभुः ॥
भद्रं तु वासुदेवोऽसौ भद्रमोक्षप्रदो यतः ।
नारायणो राजनं स्याद्राजयत्येष मोक्षिणः ॥
गायत्री त्वनिरुद्धोऽसौ त्रिकाले गीयते यतः ।
उष्णिगुष्णस्वरूपत्वात्प्रद्युम्नोऽग्न्यादिसंस्थितः ॥
स्त्रीरूपो बृहतीनामा बृहत्सङ्कर्षणः प्रभुः ।
वासुदेवस्तथा त्रिष्टुप् त्रिवेदैः स्तूयते यतः ॥
नारायणस्तु स्त्रीरूपो द्विधैवासौ व्यवस्थितः ।
द्विपदेति ततो नाम सर्वच्छन्दोऽभिधा इमे ॥
वनितातनवः प्रोक्ता मध्यं नारायणः प्रभुः ।
वासुदेवोऽस्य पुच्छं च वामदक्षौ च पक्षकौ ॥
सङ्कर्षणश्च प्रद्युम्नः क्रमादेव प्रकीर्तितौ ।
अनिरुद्धः शिरश्चैव तथैकोऽपि हि पञ्चधा ॥
प्रस्तावनामाऽनिरुद्धो रक्षन्संस्तूयते यतः ।
सृजन् जगच्च रमया प्रद्युम्नस्तत्र गीयते ॥
उद्गीथनामा तेनासौ जगदुद्गमनेन वा ।
संहारात्प्रतिहाराख्यस्तथा सङ्कर्षणः प्रभुः ॥

मोचयित्वा समीपं हि द्रावयेद्वासुदेवकः ।
तेनोपद्रवनामाऽसौ निधीयन्ते यतोऽखिलाः ॥
मुक्ता नारायणे देवे तेनासौ निधनाभिधः ॥ इत्यादि च ।
स्तूयमानत्वात्स्तोमः । समत्वात्साम । छन्द्यत्वाच्छन्दः ॥ ४ ॥

टी— यो ह वै यज्ञे यज्ञं वेदेत्येतत्खण्डं व्याचष्टे । यज्ञेष्वित्यादिना । यज्ञमित्येतद्व्याचष्टे । यज्ञनामानमिति । अहनि अहर्देवेष्वित्येतद्व्याचष्टे । अधिरूढमिति । अहस्सु अधिकं रूढं सन्निहितम् । अहार्यत्वादहर्नामकम् । देवेषु देवम् । देवेषु स्थितं सर्वोत्तमत्वात् देवनामानं यो वेद स सम्यग्वित् सम्यग्ज्ञानी । एवं चेत्यादिना । वक्ष्यमाणोपासनानामपि सङ्ग्रहेण फलमाह । सर्वेषु स्तोमादिषु स्थितमित्यन्वयः । यदेतन्महदुक्थमित्येतद्व्याचष्टे । य एष इति । एष वै यज्ञे यज्ञ इत्येतद्व्याचष्टे । अहरह्नामित्यादिना । अह्नां नियामकत्वात् अहरित्यन्वयः । देवेषु देव इत्यस्यार्थो । देवाधिक इति । तदेतत् पञ्चविधमित्येतद्व्याचष्टे । अनिरुद्धेति । स विष्णुः स्तोमसाम-चितिच्छन्दःशस्त्रेषु पृथक् पृथक् प्रत्येकं अनिरुद्धादिरूपेण पञ्चधा स्थित इत्यन्वयः । तदेव वाक्यं प्रकारान्तरेण विवृणोति । एकैकमिति । विभुः स्तोमादिषु स्थितमनिरुद्धादिपञ्चकं तत् एकैकं रूपं प्रस्तावादिषु पञ्चस्वपि पञ्चधा कृत्वा व्यवस्थितः । प्रस्तावादीनीत्यनेन पञ्चकृत्वः प्रस्तौतीत्यादीनि व्याख्यातानि । तस्मात् प्रस्तावादिषु प्रत्येकं पञ्चधा स्थितत्वात् । पञ्चकृत्वः करणस्य प्रयोजनमाह । पञ्चरूपमिति । तमेव विष्णुमेव तत्र प्रस्तावादिषु । स्तोभसहस्राणां पृथक् पृथक् विष्णुप्रादुर्भाववाचकत्वं कथं प्रादुर्भावानां परिमितत्वादित्यत आह । अनन्तरूपो हरिरिति । भगवान् अनन्तरूपश्चेत् कथं सहस्रस्तोभानां तद्वाचकत्वमित्यत आह । शब्दोऽपीति । अनन्तधा वर्तत इति शेषः । स्तोभसहस्रं भवतीत्यत्र सहस्रशब्दस्य बहुकोटिवाचित्वमुक्तं तद्वाच्यरूपाणां चामितत्वमुक्तम् । तत्र सहस्रशब्दस्यामितवाचकत्वम् उपपादयति । विष्णोरित्यादिना । विष्णोः सहस्रनाम्नः अर्थभूतं यद्रूपसहस्र-कम् एतद्बृहतीसहस्रं च पृथक् पृथक् तद्रूपसहस्रं वक्ति । पृथक् पृथगिति एकैका ऋक् एकैकं रूपं वक्तीत्यर्थः । सहस्रशब्दोऽपि अमितं वक्ति यतः अतः

सहस्रमित्याख्यया अमितानि नामानि चोच्यन्त इत्यन्वयः । यदि सहस्र-शब्दोऽमितनाम्नां वाचकस्तर्हि अमितनामानि परित्यज्य दशशतनामान्येव कस्मात् पठ्यन्त इत्यत आह । अनन्तेति । अनन्तनामवचने अशक्तत्वात् पुरुषस्येति शेषः । इदं नाम्नां सहस्रकं पृथगनन्तनामभ्यः पृथक्कृत्य प्रोक्तम् इतरनामभ्यो वैशिष्ट्यप्रतिपादनार्थम् अनन्ततनुवाचकमिति । अनन्त-तनुवाचकत्वात् सहस्रशब्दः पञ्चशतद्वये मुख्यमात्रम् अमिते तु परममुख्य इत्याह । विष्णोरिति । सहस्रं मुख्यतोऽमितमिति [1]अमिते सहस्रशब्दस्य मुख्यत्वमुक्तम् । सहस्रशब्दनिरुक्त्याऽपि तदुपपादयति । ब्रह्मेति[2] । ब्रह्म यावद्देशकाले स्थितं वागपि वेदात्मिकाऽपि वाक् तावती तावद्देशकालव्यापिनी । अमितानामपि रूपाणां सहस्रत्वमुपपादयति । नाम्नेति । एतस्मात् दशशब्द-स्यामितवाचकत्वात् ऋचः पृथक् पृथक् नामार्था हि । एकैका ऋक् अनन्ततनुवाचकविश्वादि एकैकनामार्थभूतेत्यर्थः । तस्मादनन्ततनुवाचकसहस्र-नामार्थत्वात् इदम् ऋक्सहस्रं हरेः सर्वनामात्मकम् । एतत् सर्वं तत् स्तोभसहस्रं भवतीत्यस्य व्याख्यानम् । एवं ह्येताः पञ्चविधा अनुशस्यन्त इत्येतद्व्याचष्टे । मत्स्यकूर्मेत्यादिना । हरेरिदं रूपाणां दशकं तद्रूपाणां पञ्चकं पञ्चभेदविभिन्नेन बृहतीऋक्सहस्रेण शस्यते । भार्गवाद्यपरं पञ्चकम् आनिधनैः निधनान्तकैः प्रस्तावाद्यैः सामभक्तिभिः सामरूपप्रभेदैः शस्यते । तदेतत् सहस्रं तत् सर्वं तानि दश शतेत्येतद्विवृणोति । तानीति । अस्य हरेः तानि दशरूपात्मकानि । च शब्दात् बृहतीसहस्रप्रतिपाद्यसहस्ररूपात्मकानि च । अस्य हरेः मत्स्यादिदशनामानि सर्वरूपाभिधानि । सर्वरूपाण्यभिदधतीति सर्वरूपाभिधानि । दशरूपाणां सर्वरूपात्मकत्वादिति हेतुसमुच्चयार्थोऽपिशब्दः । पञ्चभेदविभिन्नेन ऋक्सहस्रेण शस्यत इत्यादेः फलितार्थमाह । पञ्चकमि-त्यादिना । अत एव दशरूपाणाम् अनन्तरूपात्मकत्वादेव सर्वनाम्नां सर्वना-मात्मकत्वं कथमित्याशङ्क्य परिहारार्थमुक्तम् । दशेति वै सर्वमिति ।

---

१. त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।
विष्णोः सहस्रनामापि निरन्तरशतार्थकम् ।
इति स्कान्दवचो यस्मात् - इति ऋग्भाष्ये १/७६ ।

२. यावद् ब्रह्म विष्ठितं तावती वाक् - इति हि श्रुतिः

तद्व्याचष्टे । दशेति । दशेत्येतत् श्रुतौ मुख्यतः सर्वनाम प्रथितं दशेत्येत् सर्वशब्दपर्याय इत्यर्थः । दशशब्दास्यार्थान्तरमाह । शंरूपमिति । शं रूपं भगवन्तं व्यक्त्या समस्तशः सर्वेषां भक्तानां दद्यादतो दशेत्यमितनाम्नामाख्या । ददाति शं रूपमिति दशेत्यर्थः । रूपेषु शं ददेः दशेत्याख्या । शं ददेः सुखदानात् । पञ्चकद्वितयस्यापि दशेत्याख्याऽभूत् कुतः सर्वनामार्थवचनात् । सर्वनाम्नाम् अर्थभूतस्य हरेः प्रतिपादनात् । दशेति वै सर्वमित्येतद्व्याख्यानम् उपसंहरति । तस्मादिति ।

सर्वदशशब्दयोः[१] पर्यायत्वात् । एतदखिलं शतसहस्रादि दशेत्युच्यते । एतावतीः सङ्ख्येत्येतद्व्याख्यानम् । दशेति मूलसङ्ख्या चेति । दशदश-तस्तच्छतम् इत्यादिव्याचष्टे । तद्विभेदा इत्यादिना । उक्तमुपसंहरति । ऋक्-सहस्रमिति । तानि त्रीणि छन्दांसि भवन्तीत्येत् व्याचष्टे । छन्दस्त्रयमिति । अत्र बृहतीसहस्रे छन्दस्त्रयं तृचाशीतित्रयात्मकं तच्चाशनादि त्रयं भूत्वा विष्णुमुपैति । अनेनान्नमशनं पानं खाद इत्याद्युक्तार्थं भवति । खण्डार्थ-मुपसंहरति । सर्वछन्दोभिध इति । त्रिवृत्पञ्चदशमित्यादि व्याचष्टे । त्रिविध इति । अध्यात्मादित्रये त्रेधा वर्तत इति त्रिवृत् प्रद्युम्नः पञ्चदशात्मकः कथम् । आह । पञ्चभूतेष्वध्यात्मादिविभेदत इति । अध्यत्मगतपञ्चभूतेषु पञ्चविधः अधिभूतत्वेन स्थित पञ्चभूतेषु पञ्चविधः अधिदैवगतपञ्चभूतेषु पञ्चविधः एवं पञ्चदशात्मकः एवं सङ्कर्षणो लिङ्गसप्तदशस्थत्वात् लिङ्गशरीरगतपञ्चभूतेषु दशेन्द्रियेषु मनोबुद्ध्योश्च स्थितत्वात् तावान् सप्तदश श्रुतः । वासुदेवः अध्यात्मादिविभेदतः । सप्तधातुषु संस्थः सन् एकविंशः । मनआदिचतुष्टये मनोबुद्ध्यहङ्कारचित्तेषु गुणत्रये सत्त्वादौ प्रकृतौ चैव अष्टसु अध्यात्मादिविभेदतः त्रेधा स्थितैरूपैर्मूलरूपेण च सह पञ्चविंशात्मको नारायणः । गायत्रं रथन्तरम् इत्यादि विवृणोति । गायकानामित्यादिना । रथन्तरं रथन्तरमिति गायत्रं गायत्रमिति । उक्ता इति सम्बन्धः । गायत्र्युष्णिगित्यादि विवृणोति । गीयते त्रिकाले इति गायत्री । उष्णस्वरूपत्वात् शत्रुतापकतेजोरूपत्वात् सङ्कर्षणः । पूर्णत्वात् बृहत् । स्त्रीरूपत्वात् बृहतीनामा । नारायणः स्त्रीरूपो द्विधा व्यवस्थितः । तस्मात् तस्य द्विपदा इति नाम । द्वे पदे रूपे यस्य स

---

१. दशेति सर्वमुद्दिष्टम् - इति तैतिरीयभाष्ये ।

द्विपदेत्यर्थः । सर्वछन्दोभिधा इमे । भगवद्रूपसङ्गाः वनितातनवः प्रोक्ताः । शिरो दक्षिणः पक्ष इत्यादि व्याचष्टे । मध्यमिति । पुच्छं चरमाङ्गं पञ्चधा व्यवस्थित इति शेषः । पञ्चकृत्वः प्रस्तौतीत्यादि विवृणोति । प्रस्तावेति । प्रकर्षेण स्तूयत इति प्रस्ताव इत्यर्थः । तत्र स्वसृष्टे उच्चैर्गीयत इत्युद्गीथः । जगदुद्गमनेन जगदुद्गमयितृत्वेन वा उद्गीथः । प्रतिहरति संहरतीति प्रतिहारः । संसारान्मोचयित्वा स्वसमीपं द्रावयति गमयतीति उपद्रवः । निधीयन्तेऽस्मिन्निति निधनमित्यर्थः। स्तोमतः सामतः छन्दस्त इति पदत्रयार्थमाह । स्तूयमानत्वादित्यादिना । छन्यत्वात् इच्छाविषयत्वात् छन्दः ।

यो यज्ञेषु प्रसिद्धयज्ञेषु यज्ञं याज्यत्वाद्यज्ञनामानम् । अहनि अध्यूह्ळम् अहः अहार्यत्वात् अहर्नामकम् । देवेषु अध्यूह्ळं देवं सर्वोत्तमत्वाद्देवनामानं वेद स सम्प्रतिवित् सम्यज्ज्ञानी । यज्ञादिषु यज्ञादिः क इत्यपेक्षायामाह । एष इति । यदेतन्महदुक्थम् । पूर्णत्वान्महत् । सर्वोत्थापकत्वात् उक्थम् । महदुक्थनामकबृहतीसहस्रस्थितत्वात् च । महदुक्थनामकं भगवद्रूपं एष वै यज्ञादिषु यज्ञादिः तदेतद्भगवद्रूपं पञ्चविधं स्तोमसामचितिछन्दःशस्त्रेषु पृथक् पृथक् अनिरुद्धादिरूपेणेति शेषः । तत्र स्तोमतः स्तोमगत अनिरुद्ध इति पञ्चविधं कथम् । अनिरुद्धः अध्यात्मादिभेदेन त्रेधा वर्तत इति त्रिवृत् । प्रद्युम्नः अध्यात्मादिभेदेन त्रिविधत्वात् । पञ्चदशसङ्ख्याविशिष्टपञ्चभूतेषु पञ्चदशधा वर्तत इति पञ्चदशम् । सङ्कर्षणः लिङ्गशरीरगतपञ्चभूतदशेन्द्रियमनोबुद्धिषु सप्तदशधा वर्तत इति सप्तदशम् । वासुदेवोऽध्यात्मादिभेदेन त्रिविधस्थितसप्तधातुषु एकविंशतिरूपेण वर्तत इत्येकविंशम् । अध्यात्मादिभेदेन त्रेधा स्थितेषु मनोबुद्धिअहङ्कारचित्तगुणत्रय प्रकृतिषु स्थितै रूपैर्मूलरूपेण च स पञ्चविंशन्नारायणः । सामत इति पञ्चविधसामगतप्रद्युम्नरूपं पञ्चविधम् । गायकानां त्राणकर्तृत्वात् गायत्रम् । गायत्राख्यमनिरुद्धरूपम् । रथारूढत्वात् प्रद्युम्नाख्यं रथन्तरम् । परिपूर्णत्वात् बृहन्नामकं सङ्कर्षणाख्यम् । भद्रमोक्षप्रदत्वात् भद्रनामा वासुदेवः । मोक्षिणो राजयतीति राजननामा नारायणः । सङ्कर्षणः छन्दस्थ इति पञ्चविधम् । अनिरुद्धः त्रिकाले गीयत इति गायत्री । गायत्रीनामकः । प्रद्युम्नो अग्निगतः उष्णस्वरूपः उष्णिङ्नामा । सङ्कर्षणः बृहत्वात् बृहतीनामा ।

त्रिवेदैस्तूयमानत्वात् त्रिष्टुप् वासुदेवः । द्विरूपत्वात् द्विपदा नारायणः । शिरः शीर्ष्णि स्थितः शिरोनामा अनिरुद्धः । दक्षिणः पक्षः दक्षिणपार्श्वे स्थितः दक्षिणपक्षनामा प्रद्युम्नः । उत्तरः पक्षः उत्तरपक्षेस्थितः उत्तरपक्षनामा सङ्कर्षणः । पुच्छं चरमाङ्गे स्थितः पुच्छनामा वासुदेवः । आत्मा मध्यदेहे स्थितः आत्मनामा नारायणः । इत्याख्यानम् इत्येषां रूपाणां नाम पञ्चकृत्वः प्रस्तौति । प्रस्तावे प्रकर्षेण स्तूयमानत्वात् प्रस्तावनाम्नो अनिरुद्धस्य अनिरुद्धादिरूपेण पञ्चधा स्थितत्वात् पञ्चरूपभगवत्प्रीत्यर्थं प्रस्तावं पञ्चकृत्वः कुर्वन्तीत्यर्थः । उदानादिष्वेवमेव योजना । उच्चैर्गीतत्वात् उद्गीथनामा प्रद्युम्नः । प्रतिहरति संहरतीति प्रतिहारनामा सङ्कर्षणः । उपद्रवः संसारान्मोचयित्वा स्वसमीपं प्रति द्रावयति गमयतीति उपद्रवो वासुदेवः । निधीयन्तेऽस्मिन् मुक्ता इति निधननामा नारायणः । तत्स्तोभसहस्रं भवति । तद्भगवद्रूपं स्तोभसहस्रप्रतिपाद्यम् । एवमेताः पञ्चविधा मूर्तयः पञ्चविधाः पञ्चविधबृहतीसहस्रेण अनुशस्यन्ते । स्तूयन्ते हि । बृहतीसहस्रस्य पञ्चविधत्वमाह । यत्प्रागिति । तृचाशीतिभ्यः यत् यः प्राकृतनोभागः सैका विधा । तृचाशीतयः तिस्रः विधाः । यदूर्ध्वं तृचाशीतिभ्यो या उत्तरो भागः । सा पञ्चमी विधा । तदेतद्भगवद्रूपसहस्रं सहस्रऋक्प्रतिपाद्यम् । विश्वादिनामार्थं रूपं च तत्सहस्रनामादिप्रतिपाद्यम् । सहस्ररूपं सर्वममितम् अमितरूपात्मकम् । तानि अमितरूपाण्येव दश दशेत्युच्यन्ते । कुतः दशेति सर्वं वै । दशशब्देन शतं सहस्रममितं चोच्यते वै । सङ्ख्यामूलसङ्ख्या च एतावती हि । दशपर्यवसिता । तथाहि । दशदशतः दशवारमावृत्तदशसङ्ख्यातः तत् शतं प्रसिद्धशतसङ्ख्या भवति । दशशतानि दशकृत्वः आवृत्तानि शतानि तत् सहस्रं सर्वमित्युच्यते । तान्यमितरूपाणि । त्रीणि छन्दांसि छन्दस्त्रयात्मक बृहतीसहस्रप्रतिपाद्यानि । इदमन्नं छन्दस्त्रयात्मकबृहतीसहस्राख्यमन्नम् अशनं पानं खाद इति त्रेधा विहितं तद्बृहतीसहस्रम् । एतैरशनादिरूपैः त्रिभिः छन्दोभिः प्राप्नोति । विषयीकरोति भगवन्तम् ॥ ४ ॥

ऐतरेयोपनिपत्

तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते किमन्यत्सदन्यद्ब्रूयामेति त्रिष्टुप्सहस्रमेके जगतीसहस्रमेकेऽ-

नुष्टुप्सहस्रमेके तदुक्तमृषिणाऽ[१]नुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषेति वाचि वै तदैन्द्रं प्राणं न्यचायन्नित्येतत्तदुक्तं भवति स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माहा कृत्स्नो ह्येष आत्मा यद्वागभि हि प्राणेन मनसेस्यमानो वाचा नानुभवति बृहतीमभि सम्पादयेदेष वै कृत्स्न आत्मा यद्बृहती सोऽयमात्मा सर्वतः शरीरैः परिवृतस्तद्यथाऽयमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता मध्यं ह्येषामङ्गाना-मात्मा मध्यं छन्दसां बृहती स हेश्वरो यशस्वी कल्याणकीर्तिर्भविता-रीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माह कृत्स्नो ह्येष आत्मा यद्बृहती तस्माद्बृहतीमेवाभिसम्पादयेत् ॥ ५ ॥

भा— तदिदमुक्तप्रकारेणैव बृहतीसहस्रं सम्पन्नं भवति । तदेके नानाच्छन्दसां सहस्रं शंसितव्यमेव, बृहतीसहस्रसम्पादनमविवक्षितमिति प्रतिजानते । केचित्त्रिष्टुप्सहस्रमेव शंसितव्यमिति । अनुष्टुप्सहस्रमेवेति वदन्तोऽनुष्टुप्प्रशंसात्मिकामृचं दर्शयन्ति । बीभत्सूनां जगद्भर्तुमिच्छूनाम् अपां सयुजं सहैव चरन्तं चाहुः । विष्णुं हंसस्वरूपिणम् अनुष्टुभं चर्चूर्यमाणं पुनः पुनर्वदन्तं परमेश्वरं ददृशुश्च ।

मेघसंस्थं हंसरूपं तं विष्णुं परमेश्वरम् ।
विरिञ्चशिवपूर्वेभ्यो नृसिंहानुष्टुभं पराम् ॥
उच्छारयन्तमर्थांश्च व्याचक्षाणं समन्ततः ।
ददृशुर्मुनयो दिव्या आचार्यब्रह्मशर्वयोः ॥
एवं वायुं च ददृशुस्तत्र हंसस्वरूपिणम् ।
शिवादिभ्यो व्याहरन्तं तामेवानुष्टुभं पराम् ॥ इत्यादि च ॥

---

१. बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरंतम् ।
अनुष्टुभमनु चंचूर्यमाणमिन्द्रं नि चिक्युः कवयो मनीषा ॥ ७ ॥
(ऋग्वेद. १०-१२४-९) (२/३/५)

वागाख्यायामनुष्टुभ्युच्चार्यमाणायां हि मुनयो विष्णुं ददृशुः । अतो ब्रह्मादयोऽपि विष्णोः सकाशादनुष्टुभर्थं सर्वदा शृण्वन्तीति ज्ञायतेऽतोऽनुष्टुबेव च्छन्दसां वरेति चोक्तं भवति ।

अनुष्टुभां सहस्रं तु यः शंसीतात एव तु ।
भवितुं चेश्वरः स स्याद्भावो मुक्तिर्न चान्यथा ॥
यशस्वी स प्रसिद्धः स्याच्छुभकीर्तिश्च सर्वदा ।
स्वच्छन्दमृत्युता च स्यात्तस्येत्याहैतरेयकः ॥
महैतरेयो भगवान्स्तन्नेत्याह रमापतिः ।
नानाच्छन्दःप्रशंसादिप्रमाणरहितत्वतः ॥
परिहाराय चापूर्णमैतरेयमुने श्रुणु ।
त्वं तु मन्त्रमुदाहृत्य यस्मादेतदवोचथाः ॥
तस्माद्वक्ष्याम्युत्तरं ते प्रियः शिष्योऽसि मे यतः ।
उमैव वागिति प्रोक्ता सानुष्टुबभिमानिनी ॥
अकृत्स्ना सा ततो नैव ब्रह्मेत्युक्ता कथञ्चन ।
वागिन्द्रियाभिमानिन्यां न हि ब्रह्मवचः क्वचित् ॥
वायुना प्राणरूपेण मनोरूपशिवेन च ।
अभ्यस्यमानोऽनुभवेत्पुमान्वाचा तु न क्वचित् ॥
अभिमानी बृहत्यास्तु वायुरेव यतः प्रभुः ।
तस्मादेषा छन्दसां हि वरिष्ठा बृहती स्मृता ॥
पूर्णो हि वायुर्देवानां तस्माद्ब्रह्मेति चाच्यते ।
माहात्म्याधिक्यतश्चैव बृहतीत्येव नाम तत् ॥
अङ्गेभ्य एव सम्भूतान्यन्यच्छन्दांसि चाब्जजात् ।
मध्यात्तु बृहती जाता तस्मात्सा मध्यमुच्यते ॥
पठ्यते तेन मध्ये सा च्छन्दसां प्रवरा सती ।
छन्दांस्यन्यान्यङ्गवत्स्युर्मध्यवद्बृहती परा ॥

सप्तच्छन्दांसि चैवं हि प्रतिमा वैष्णवी मता ।
गायत्रीदेवतात्वं च लक्ष्म्या यत्राभिधीयते ॥
बृहती देवता तत्र भगवान् पुरुषोत्तमः ।
आधिक्यं छन्दसां यत्र गायत्र्यास्तु विवक्षितम् ॥
तत्र तत्पुत्रको वायुर्बृहती देवता मता ।
ऋचामाधिक्ययोगार्थं नाङ्गीकर्तव्यमत्र तत् ॥
प्रधानत्वाद्बृहत्यास्तु जगत्याद्यं न युज्यते ।
सम्पादनाद्बृहत्यास्तु मुक्तो भवितुमीश्वरः ॥
स्यात्प्रसिद्धः सुकीर्तिश्च च्छन्दोमृत्युर्गुणाधिकः ।
इति प्राह स्वयं विष्णुर्महिदासाभिधः प्रभुः' ॥ इत्यादि च ।
इतोऽन्यत्सत्किमित्याहुर्नानाच्छन्दस्त्ववादिनः ।
अन्यत्सद्रूपमित्याहुस्त्रिष्टुब्वादिन एव ते ॥

ऐन्द्रं प्राणं परमेश्वरसहितं वायुम् । प्राणेन मनसा च । अभिइस्यमानोऽभ्यस्यमानः । तृतीयोऽतिशये[1] इति सूत्रादकारस्येकारः ।

'मथनन्मिथिलो जातः सहनात्सिंह उच्यते ।
हत्वी दस्यूनि' त्यादिवच्च ।

अभ्यस्यमानः अभितः क्षिप्यमाणो विषयेषु बहुशः । कृत्स्न आत्मा कृत्स्नप्रतिमा विष्णोः ।

'एकाऽपि प्रतिमा विष्णोर्बृहती च्छन्दसां वरा ।
अन्यच्छन्दोऽभिधा यत्स्यात्प्रतिमा मध्यमैव तत्' ॥ इति च ।

एवं ब्रह्मादिभिः श्रूयमाणानुष्टुबपि बृहत्या अङ्गमिति बृहत्या एवाधिक्यमुक्तं भवति ॥ ५ ॥

---

१. अर्थातिशये विवक्षिते लक्षणप्राप्तस्य स्थाने तत्तृतीयो वर्णो भवति ॥
- इति ऋग्भाष्यटीकायाम् । १/८९

टी— तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्धैतदेके इत्येतत्खण्डं व्याचष्टे । तदिदमुक्तेत्यादिना । उक्तप्रकारेण षट्त्रिंशतिसहस्राक्षरत्वेन बृहतीसहस्रं सम्पन्नं भवति । तद्धैतदेक इत्यादि व्याचष्टे । तदेक इत्यादिना । अनुष्टुप् शंसनवादिभिरनुष्टुप्शंसनपरत्वेनोदाहृदामृचम् आदित आरभ्य व्याचष्टे । बीभत्सूनामिति । बीभत्सूनां सयुजं हंसमाहुः अपां दिव्यानां सख्ये सखित्वे चरतं हंसरूपिणं विष्णुमाहुः । सयुजं सहैव सन्तम् अनुष्टुभम् अनुष्टुभमनु चर्चूयमाणं पुनःपुनः वदन्तमिन्द्रं परमेश्वरम् । मनीषा मनीषया ज्ञानेन कवयः ज्ञानिनः मुनयः निचक्युः । ददृशुरिति मन्त्रार्थः । प्रमाणेनापि व्याचष्टे । मेघसंस्थमित्यादिना । वाचि वै तदैन्द्रं प्राणमित्येतद्व्याचष्टे । वागाख्यायामिति । फलितार्थमाह । अत इति । वाचि ऐन्द्रं प्राणं न्यचायन् इत्युक्तत्वात् । वरा बृहत्यादिभ्य इति शेषः । सहेश्वरो यशस्वी कल्याणकीर्तिरित्येतद्व्याचष्टे । अनुष्टुभामिति । भवितुमीश्वर इत्यत्र भावशब्दार्थमाह । भावो मुक्तिरिति । न चान्यथा । भावशब्दः सत्तावाची न भवतीत्यर्थः । पुरा आयुषः प्रैतोरित्यस्यार्थमाह । स्वच्छन्दमृत्युता च स्यादिति । इति स्माहेत्यस्यार्थमाह । ऐतरेयक इति । अकृत्स्नो ह्येष आत्मा इत्येतद्व्याख्यातुमुपोद्घातमाह । महैतरेय इत्यादिना । तन्नानाच्छन्दः प्रशंसादिनेत्याहेत्यन्वयः । एष आत्मा अकृत्स्न इत्यस्यार्थमाह । उमैवेति । अकृत्स्ना असम्पूर्णा नैव ब्रह्मेत्युक्तेत्येतदुपपादयति । वागिन्द्रियेति । अभिहि प्राणेनेत्येतद्व्याचष्टे । अभिमानीति । बृहत्या बृहतीति तन्नाममाहात्म्याधिक्यत महदभिमन्यमानत्वलक्षणादिकमाहात्म्यतः । एवमेव बृहती सर्वतः च्छन्दोभिः परिवृता । मध्यं च्छन्दसां बृहतीति वाक्यद्वयतात्पर्यमाह । अङ्गेभ्य एवेति । तद्यथा अयमात्मा सर्वतः शरीरैः परिवृत इत्यादि तात्पर्यमाह । च्छन्दांसीति । एवं सप्तच्छन्दसां मध्यभूतबृहत्या सह वैष्णवी प्रतिमा मता । क्वचित् गायत्र्या एव उत्तमत्वमुच्यते । बृहत्या एवोत्तमत्वे तद्वाक्यविरोधः स्यादित्यत आह । गायत्रीति । लक्ष्म्या गायत्रीदेवतात्वं गायत्रीप्रतिपाद्यदेवतात्वमुच्यते । तत्र तर्हि पुरुषोत्तमः बृहतीदेवता प्रतिपाद्यदेवता । तद्विवक्षया बृहत्या उत्तमत्वमिति भावः । अस्तु प्रतिपाद्यदेवतापेक्षया बृहत्या उत्तमत्वं गायत्र्यपेक्षया तथाऽप्यभिमान्यपेक्षया गायत्र्या एवोत्तमत्वमिति चेन्न । तदङ्गीकृतमेवेत्याह । आधिक्यमिति । यत्र च्छन्दसां मध्ये गायत्र्या

लक्ष्म्यभिमन्यमानत्वादुत्तमत्वं विवक्षितं तत्र तत्पुत्रको वायुः बृहत्या देवता अभिमानिदेवता मता । अभिमता । अस्मिन् पक्षे बृहत्यपेक्षया गायत्र्या उत्तमत्वमभिमतमेवेति भावः । नन्वेवं चेत् गायत्रीशंसनमेव कर्तव्यं न बृहतीशंसनमित्यत आह । ऋचामिति । तद्गायत्रीशंसनं नाङ्गीकर्तव्यं कुतः अत्र बृहतीशंसने सति ऋचामाधिक्ययोगार्थं गायत्रीसहस्रापेक्षया ऋगाधिक्य-फलसद्भावार्थं बृहतीसहस्रशंसने गायत्रीसहस्रात् परम् । पञ्चशतगायत्री-ऋगाधिक्यं भवति । एतत् प्रयोजनलाभात् बृहतीसहस्रशंसनमेव कर्तव्यम् । तच्छंसने बृहत्या अपि ऋगाधिक्यलाभादित्यत आह । प्रधानत्वादिति । ऋगाधिक्यलाभार्थं जगत्यादिशंसनं न युज्यते । बृहत्याः प्रधानाङ्गित्वात् अन्येषां च्छन्दसाम् अङ्गत्वादिति भावः । स हेश्वरो यशस्वीत्यादि व्याचष्टे । सम्पादनादिना च्छन्दोमृत्युः स्वेच्छाधीनमृत्युः । किमन्यत् सदित्यस्यार्थमाह । इतोऽन्यदिति । सत्प्रशस्तं त्रिष्टुब्वादिनः त्रिष्टुपादिवादिनः एवेत्यस्यान्यदि-त्यनेनान्वयः । ऐन्द्रं प्राणमित्येतद्व्याचष्टे । ऐन्द्रमिति । प्राणेन मनसेस्यमान इत्यत्र सामानाधिकरण्यप्रतीतिनिरासाय व्याचष्टे । प्राणेनेति । अभिः प्राणेन मनसेस्यमान इत्येतद्योजयन्नेव सोदाहरणं व्याचष्टे । अभीत्यादिना । अतिशये विवक्षिते तृतीयो वर्णो भवति । हत्वी हत्वा आकारस्य तृतीय ईकारः । एष वै कृत्स्न आत्मेत्येतद्विवृणोति । कृत्स्न इति । च्छन्दसां मध्ये बृहती एकाऽपि विष्णोः वरा प्रतिमा यत् । या अन्यत् च्छन्दोभिधा । प्रतिमा जगत्याद्याख्या प्रतिमा तत् सा मध्यमैव । खण्डतात्पर्यार्थमाह । एवमिति ।

तद्वै एवमुक्तप्रकारेणैव इदं बृहतीसहस्रं सम्पन्नं भवति । तत्सहस्रं नानाच्छन्दसां सहस्रमेव शंसितव्यम् । बृहतीसहस्रत्वम् अविविक्षितमिति प्रतिजानते । ते नानाच्छन्दस्सहस्रशंसनवादिनः अन्यत्स किम् इतोऽन्यत् प्रशंस्यं किमिति आहुः । त्रिष्टुपादिशंसनवादिनः अन्यन्नानाच्छन्दःशंसनादन्यत् सत् प्रशस्तं ब्रूयामेत्याहुः । त्रिष्टुप्च्छन्दआत्मकं सहस्रं शंसितव्यमित्येक आहुरित्यादि योजना । तत्रानुष्टुप्सहस्रवादिनः स्वोक्तार्थे मन्त्रमुदाहरन्ति । तदुक्तमिति । ऋचं व्याचष्टे । वाचि वै इति । वाचि अनुष्टुभि उच्चार्य-माणायाम् इन्द्रं विष्णुम् ऐन्द्रं प्राणं परमेश्वरसहितं वायुं न्यचायत् ददृशुः मुनयः

तत् तस्मात् अनुष्टुभो ब्रह्मादीन् प्रति हंसरूपिणा व्याक्रियमाणत्वात् अनुष्टुप्शंसनमेव परमित्युक्तं भवति। अनुष्टुप्सहस्रशंसने फलमाह। सहेति । अनुष्टुप्सहस्रं शंसन् यशस्वी प्रसिद्धः कल्याणकीर्तिः शुभकीर्तिर्भवति भवितोर्भवितुं मोक्षं गन्तुं ईश्वरो भवति । आयुषः पुरा प्रैतोर्मरणाय चेश्वरो भवति। स्वच्छन्दमृत्युर्भवतीत्यर्थः। ऐतरेय इत्याह स्म। महैतरेय इत्याह स्म। कथम् । यद्वाक् या वागनुष्टुबभिमानिन्युमा । एष अकृत्स्न आत्मा हि । सम्पूर्णप्रतिमा न हि। ना पुरुषः प्राणेन वायुना मनसा शिवेन अभि अभितः अस्यमानः प्रेर्यमाणः विषयेषु क्षिप्यमाण अनुभवति। विषयान्वाचा नानुभवति। केवलवाचा क्वचिदपि विषयान्नानुभवति । तस्मात् बृहतीमभिसम्पादयेत् । बृहतीसहस्रशंसनमेव कुर्यात्। कस्मात् यत् बृहती यः बृहती तदभिमानी वायुः एषः कृत्स्नः आत्मा वै विष्णोः सम्पूर्णप्रतिमा वै । सोऽयमात्मा सोऽयं मध्यदेहः सर्वतः शरीरैः सर्वशरीरावयवैः परिवृतः तत् तस्मात् अयमात्मा यथा सर्वतः शरीरैः परिवृतः एवमेव बृहती सर्वतः च्छन्दोभिर्गायत्र्यादिच्छन्दोभिः परिवृता आत्मा मध्यदेहः एषां शिरआदीनाम् अङ्गानां मध्यं हि। एवं बृहती च्छन्दसां मध्यं बृहतीसहस्रं शंसन् यशस्वी कल्याणकीर्तिर्भवितोरीश्वरः आयुषः पुरा प्रैतोरीश्वरश्च भवति । उपसंहरति । कृत्स्न इति । यद्बृहती एष कृत्स्न आत्मा वै ॥ ५ ॥

ऐतरेयोपनिपत्

तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा कनीयस्तदुक्तमृषिणा[1] वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्त्युस्पृशमिति सत्यं वै वागृचा स्पृष्टेन्द्रात्परि तन्वं मम इति तद्यदेवैतद्बृहतीसहस्रमनुष्टुप्सम्पन्नं भवति तस्मात्तदैन्द्रात्प्राणाद्बृहत्यै वाचामनुष्टुभं तन्वं संनिर्मिमीते स वा एष वाचः परमो विकारो यदेतन्महदुक्थं

१. वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम्।
इन्द्रात् परितन्वं ममे ॥ ८ ॥ (ऋग्वेद. ८-७६-१२) (२/२/६)

तदेतत्पञ्चविधं मितममितं स्वरः सत्यानृते इत्यृग्गाथा कुम्ब्या तन्मितं यजुर्निगदो वृथावाक्तदमितं सामाथो यः कश्च गेष्णः स स्वर ओमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं सहेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद्दयेत त्वेनेन पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किञ्चोमित्याहात्रैवास्मै तद्रिच्यते स यत्सर्वमोङ्कुर्याद्रिच्यादात्मानं सकामेभ्यो नालं स्यादथैतत्पूर्णमभ्यात्मं यन्नेति स यत्सर्वं नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात्प्रजायते भूयान् भवति यो वै तां वाचं वेद यस्या एष विकारः स सम्प्रतिविदकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तत्तिर इव तिर इव ह्यशरीरमशरीरो हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तदाविराविर्हि शरीरम् ॥ ६ ॥

भा— बृहतीसम्पादनेऽनुष्टुप्शंसनमात्रात्पञ्चविंशोत्तरशतानुष्टुबाधिक्यं च भवति । अत आधिक्याद्बृहतीसम्पादनमेव वरम् । तस्यात्रैवान्तर्भावात् । जगत्यादिकं त्वधिकत्वेऽपि बृहतीवन्माहात्म्याभावादेवोपेक्ष्यते । वाचमष्टापदीमहमित्यनुष्टुभो बृहतीसम्पादनवचनाच्च । अष्टचतुरक्षराण्यनुष्टुप् । तस्या एव बृहतीसम्पादने नव स्रक्तयो भवन्ति । ऋचा वाक् ऋग्रूपेण वागृतं स्पृष्टा सत्यरूपं विष्णुं स्पृष्टा भवति । इन्द्रस्य परमेश्वरस्य विष्णोः सम्बन्धी नितरां प्रियत्वाद्यः प्राणदेवता वायुः तस्य प्रतिमारूपमिदं बृहतीसहस्रम् । स च वायुर्विष्णोर्मुख्यप्रतिमा । तस्माद्विष्णोरेव प्रतिमा बृहतीसहस्रम् । तस्मात्तस्यैव बृहतीसहस्रत्वेन सम्पन्नस्य पञ्चविंशोत्तरैकादशशतानुष्टुप्त्वेन सम्पादने बृहतीदैवतप्राणरूपाद्वायोरनुष्टुब्देवताया वाग्रूपाया उमाया उत्पत्तिः संस्मृता भवत्येवं जानतः ।

ततश्चोमाया अपि भगवत्प्रतिमात्वाद्विष्णुप्रतिमास्थापक एव भवत्येतत्सर्वं सम्यग्ध्यायन् । विष्णुरेव बृहत्याः प्राणस्याधिष्ठातृदेवता । प्रतिमाधिष्ठित देवतावत् । तस्माद्बृहत्याः सकाशादनुष्टुप्सम्पादने तस्यैव विष्णोः प्रतिमान्तरं तस्मादेव निर्मितं भवति । अत एवेन्द्रात्परितन्वं मम इत्युक्तम् । बृहतीस्थविष्णोर्बलादेव तत्सम्पद्यते । स हि तस्याः षट्त्रिंशदक्षरादित्वमपि नियमयति तत्प्रसादाद्वायुश्च । वायुरेव तद्भगवन्नियतो नियमयति तस्मादिन्द्रात्परीत्यस्यैन्द्रात्प्राणादिति व्याख्या कृता ।

यावत्सहस्रं बृहती तावच्छंसेदनुष्टुभाम् ।
छन्दसां वा तदन्येषां बृहतीत्वं स्मरेत्ततः ॥
तेन सर्वगतो विष्णुः सर्वस्मादधिकोऽर्चितः ।
भवेदेवं जानतस्तु कृता च प्रतिमा भवेत् ॥
तथा वायोरपि कृता वायुर्हि प्रतिमा हरेः ।
तस्माद्वायुकृतं सर्वं क्रियते विष्णुनैव हि ॥
बृहतीसहस्रं सम्पन्नमेकादशशतं पुनः ।
अनुष्टुभां स्मरेत्पञ्चविंशोत्तरमुदारधीः ॥
तेन वायोरुमोत्पत्तिः सम्यग्ज्ञानात्स्मृता भवेत् ।
ततो द्वितीयप्रतिमा विष्णोरेव कृता भवेत् ।
विष्णुनाऽनुप्रविष्टौ यदुमा वायुश्च तद्वशौ ॥ इत्यादि च ।

स्रक्तयो विभागाः । 'स्रक्तिरंशो विभागश्च विदलं चेति कथ्यते' इति शब्दनिर्णये । स वा एष वाचः परमो विकारः । अकाराख्यवाग्विकारेषूत्तमो बृहतीसहस्राख्यः ।

अकारः[1] प्रथमं नाम विष्णोः सर्वगुणान्ब्रुवन् ।
सर्वदोषविरुद्धत्वाद्गुणानामन्यतामपि ॥

---

१. अक्षराणामकारोऽस्मि । गी.(१०/३३)

विष्णोर्वदति जीवेभ्यो जडेभ्यश्चैव सर्वदा ।
अभावं चैव दोषाणां सर्वेषां केशवे वदेत् ॥
सम्यग्वक्तृत्वतस्तस्मादकारो मुख्यनाम हि ।
तदर्थानेकदेशेन शब्दाः सर्वेऽपि चोचिरे ॥
व्याख्याव्याख्येयरूपत्वं विकारत्वमिहोदितम् ।
विकारत्वं च नान्यत्स्यान्नित्या वेदा[1] यतोऽखिलाः ॥
वाचकेषु तथा विष्णोः सहस्रबृहतीमयम् ।
उक्थमुत्तममुद्दिष्टं व्याख्याऽकारस्य सा परा ॥
अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिनः ।
एषां परममुख्यं तत्तदेतत्पञ्चधा स्थितम् ॥
व्याख्यानमेवाकारस्य सहैवोक्थेन सर्वशः ।
मितामिते स्वरस्सत्यमनृतं चेति पञ्चधा ॥
तस्मादकार एवायं सर्ववागात्मकः श्रुतः ।
तस्यैव व्यक्तिरूपोऽयं सर्ववेदादिविस्तरः ॥
तस्मात्सर्वगुणान्विष्णोरकारो वक्ति यत्प्रभोः ।
तद्व्यक्तयोऽपि शब्दा ये सर्वे विष्णुगुणब्रुवाः ॥
अकारस्य तथोपांशोरभिमानी तु मारुतः ।
देहेन्द्रियान्तःकरणनाम्नोऽस्य द्विविधस्य च ॥
स्थूलसूक्ष्मशरीरस्य सर्वेषामभिमानिनी ।
भारत्युच्चोदितस्यापि ह्यकारस्याभिमानिनी ॥
तस्मादुच्चादुपांशुर्हि जपादिषु फलाधिकः ।
वायुः पतिर्हि भारत्या उपांशोर्देवता मतः ॥
अकारस्य विकारोऽयमोङ्कार इति कथ्यते ।
अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः ॥
अकारेणैव तत्सर्वमुक्तमाधिक्यवक्तृतः ।
अधिकोच्चस्वरूपोऽसौ माता चाधिक एव हि ॥

---

१. नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।
- इति तत्त्वनिर्णयोद्धृत ब्रह्माण्डवचनम् ।

एकार्थत्वादकारोऽसौ नकारत्वमुपागतः ।
दीर्घीभूतः पुनस्तेनैवाकारेण सह स्थितः ॥
अभाववाच्यकारस्य ह्यर्थो रेफः क्षयं वदन् ।
सोऽप्यकारेण सहितो दीर्घत्वं समुपागतः ॥
अभाववाच्यकारः स एकार्थाद्गत्यभावयोः ।
यकारत्वं गतस्तस्मान्नो रेफस्योत्तरत्वतः ॥
णत्वं गतो ह्यकारोऽसौ नो विरुद्धार्थवाचकः ।
अन्यत्वात्सर्वजीवेभ्यो जडेभ्यश्च सदैव हि ॥
सर्वदोषोज्झितत्वाच्च सर्वतोऽप्यधिकत्वतः ।
निरासनाच्च दोषाणां स्वभक्तेभ्यः समन्ततः ॥
सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः ।
नारायण इति प्रोक्तो ह्यकारार्थोऽयमेव हि ॥
तस्मादकारबीजेयं विष्णोर्नारायणाभिधा ।
प्रणवश्च ततोऽकारः प्रधानं नाम चक्रिणः ॥
अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम् ।
ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः ॥
वर्तन्ते न त्वकारोऽयं वर्तते केशवं विना ।
नारायणादिनामानि नृणां नामक्रियास्वपि ॥
विहितान्यकारो नैवायं विहितस्तमृते प्रभुम् ।
वायुर्ब्रह्मापि चाकारदेवते न तु नामिनौ ॥
यथा वेदाभिधेयोऽन्यो वेदाख्या देवता परा ।
एवं नामाभिमानी तु वायुर्वाच्यो जनार्दनः ॥
तस्माद इति नामैतद्विष्णोः केवलमेव हि ।
विशेषतोऽस्य व्याख्यानं बृहतीनां सहस्रकम् ॥
तस्मात्प्रीतो भवेद्विष्णुः शंसनादस्य सर्वदा ।
तस्माद्यज्ञेऽपि वा शंसेदयज्ञेऽपि रहः पुमान् ॥
ध्यात्वा नारायणं देवं विष्णोरन्नं हि तत्परम् ॥ इत्यादि ब्रह्मसारे ।

परमविकारेण सह विकारमात्रस्यापि प्रस्तुतत्वात्तदेतत्पञ्चविधमिति परामर्शः ।

स्वराणां नियमो यत्र ह्यृचो नामैव ताः स्मृताः ।
अन्या मिताक्षरा यास्तु ता गाथाः परिकीर्तिताः ॥
खण्डवाक्यानि कुम्भ्याः स्युरसमानि परस्परम् ।
यज्ञाङ्गं यजुरुद्दिष्टं निगदं वाक्यमात्रकम्' ॥ इत्यादि शब्दनिर्णये ।

अकारार्थत्वान्नकारस्य किञ्चिन्मूलमिव । तस्मान्मूलत्वादकारार्थोऽपि ज्ञेय एव । नायोग्यानां सम्यग्वाच्य इति स्वल्प एव प्रकाशितोऽस्माभिः। वाच उद्धर्तनाशक्तेः स्वयमेवोद्धर्तते । यद्धि देवतासु करोति तदात्मन्यापतति । तस्माद्द्रव्यदानं ज्ञानदानं वा काले पात्राद्यनुसारेणैव कुर्यात्[1] । अकारस्योङ्कारता त्वकारलोपेनैव जातेति सत्यमोङ्कारः । अकारस्यादौ स्थितत्वेन च यथार्थरूपत्वात् । उकारादिविकारसहितत्वात्पुष्पफलात्मकश्च । अकारस्यार्थरूपः सन्नेव च भगवांस्तमेवोङ्कारो वक्ति । अतश्च सत्यमोङ्कारः । यमर्थमकारो वक्ति तमेव वक्तीति । नकारस्त्वच्छिरस्कत्वान्मूलभूतस्याकारस्यान्ते स्थितिरूपत्वादयथास्थितेरसत्यरूपः । तथाप्यकारस्य चैकार्थत्वान्मूलभूतश्च । तस्मादकारस्यैतद्वृथावागादिकमपि व्याख्यानम् । तस्माद्विजानतः सर्वमपि भगवन्नामैव ॥ ६ ॥

टी— तद्वा इदं बृहतीसहस्रमित्यादि खण्डं व्याचष्टे । बृहतीत्यादिना । तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभामित्यादि व्याचष्टे । अनुष्टुप्शंसनमात्रात् अनुष्टप्सहस्रशंसनमात्रात् । आत्तं वै भूयसा कनीय इत्येतद्व्याचष्टे । तस्येति । अनुष्टुप्सहस्रस्य अत्र बृहतीसहस्रो यथा अनुष्टुप्सहस्रस्य बृहत्यामन्तर्भावः तथा बृहत्या अपि जगत्यादावन्तर्भावात् तच्छंसनमेव वरमित्याशङ्कां परिहरति । जगत्यादिकमिति । अधिकत्वेऽपि । अक्षरैरिति शेषः । बृहतीसहस्रशंसने युक्त्यन्तरमाह । वाचमिति । अनुष्टुभो

---

१. दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले तथा पात्रे तद्दानं सात्त्विकं स्मृतम् ॥ (गी. १७/२०)

बृहतीसंपादनवचनात् बृहतीत्वेन संपादनवचनात् । अष्टौ हि चतुरक्षराणि भवन्तीत्येतद्विवृणोति । अष्टेति । अष्टकृत्वः चतुरक्षराणि अनुष्टुभो भवन्ति । एवं द्वात्रिंशदक्षराणि इत्यर्थः । तस्य अनुष्टुभः बृहतीसम्पादने बृहतीत्वेन सम्पादने नवस्रक्तयः चतुरक्षरात्मकनवभागा भवन्ति । सत्यं वै वागृचा स्पृष्टा इत्येतद्विवृणोति । ऋचेति । ऋचा ऋग्रूपेण स्थिता वाक् अनुष्टुप् तद्विषया भवति । इन्द्रात् परितन्वन्मम इत्येतद्विवरणात्मकस्य तस्मात् तदैन्द्रात् प्राणादित्यस्यार्थमाह । इन्द्रस्येति । इन्द्रसम्बन्धी ऐन्द्रः । सम्बन्धश्च कथमित्यत आह । नितरामिति । तस्मात् भगवन्मुख्यप्रतिमाभूतवायुप्रतिमात्वात् बृहत्याः सा बृहती विष्णोरेव प्रतिमा । तस्यैव अनुष्टप्शंसनस्यैव बृहतीत्वेन सम्पन्नस्य चतुरक्षरनवस्रक्तितया बृहतीत्वेन निष्पादितस्य पञ्चविंशोत्तरैकादशानुष्टुप्त्वेन सम्पादनं भवति । तथा शंसने सति बृहतीसहस्राभिमानिप्राणात् प्राणशब्दवाच्यात् वायोः सकाशात् अनुष्टुप्देवताया अनुष्टुभभिमानिदेवताया वाग्रूपायाः वाग्देवतायाः । तस्मात् तदैन्द्रात् प्राणादित्येतत् । फलितार्थमाह । ततश्चेति । एतत्सर्वं बृहत्या अनुष्टुभः उत्पत्तिर्बृहत्या अभिमानिनः प्राणात् । अनुष्टुबभिमानिदेवताया उमाया उत्पत्तिः । प्राणस्य विष्णोर्मुख्यप्रतिमात्वम् । उमायाश्च भगवत्प्रतिमात्वम् इत्येतत् सर्वं सम्यग्ध्यायन् विष्णुप्रतिमाद्वयस्थापक एवेति । बृहत्याः प्राणस्य च विष्णुप्रतिमात्वमुपपादयति । विष्णुरेव हीति । तस्मादैन्द्रात् प्राणादित्येतत् वाक्यमुपसंहरति । तस्मादिति । तस्मात् विष्णुप्रसादादेव । विष्णुप्रसादादेव बृहतीसम्पादनादिकमित्यत्र ज्ञापकमाह । अत एवेति । बृहत्यादिशंसनस्य भगवदधीनत्वादेव इत्युक्तं मन्त्र इति शेषः । तदुपपादयति । बृहतीस्थेति । तद्बृहत्यादि तत्प्रसादादिन्द्रप्रसादात् वायुश्च बृहतीत्यादिकं नियमयतीति शेषः । अस्यापि ज्ञापकमाह । वायुरिति । उक्तार्थे प्रमाणमाह । यावदिति । यावच्छंसनेन बृहतीसहस्रं भवति । अनुष्टुभाम् ऋचां तावच्छंसेत् । तदन्येषाम् अनुष्टुभो अन्येषां तावच्छंसेत् । यावच्छंसनेन बृहतीसहस्रं भवेत् ततः तावच्छंसनानन्तरं बृहतीत्वं स्मरेत् । एतच्छंसनेन मया बृहती विष्णुप्रतिमा सम्पादितेति स्मरेदिति भावः । न केवलं शंसतः किन्तु जानतोऽपि कृता प्रतिमेति पूर्वेणान्वयः । तस्मात् विष्णुप्रतिमात्वात् वायुकृतं विष्णुनैव क्रियते ।

बृहतीसहस्रं सम्पन्नं कृत्वा पुनः अनन्तरं पञ्चविंशोत्तरमनुष्टुभाम् एकादशशतं सम्पन्नमिति स्मरेत् । तेन तस्मात् सम्यग्ज्ञानात् ततः वायोरुमोत्पत्तिश्रवणात् । प्राणस्योमायाश्च विष्णुप्रतिमात्वम् उपपादयति । विष्णुनेति । नवस्रक्तिमित्यत्र स्रक्तिशब्दार्थमाह । स्रक्तय इति । स वा एष वाचः परमविकार इत्येतदनूद्य व्याचष्टे स वा इति । तत्र प्रमाणमाह । अकार इति । तदन्यतद्विरुद्धतद-भावास्त्रयो अकारार्थाः । तत्र तद्विरुद्धवाच्यकारः दोषविरुद्धसर्वगुणान् वदन् विष्णोः प्रथमं नाम । अकारः विष्णोर्जीवेभ्यो जडेभ्यश्च अन्यतामपि वदति । ततश्च अन्यत्ववाच्यकारोऽपि तन्नामेत्यर्थः । केशवे सर्वदोषाणाम् अभावं च वदेत् । अतोऽपि तन्नामेत्यर्थः । उपसंहरति । सम्यगिति । सम्यग्वक्तृत्वतः सम्यगर्थत्रयवाचित्वात् तदर्थान् अकारार्थान् एकदेशतः केचिद्गुणान् केचित् जीवजडेभ्योऽन्यत्वं केचिद्दोषाणामभावमूचिरे । नित्यत्वाच्छब्दानां कथं विकारत्वमित्यत आह । व्याख्येति । तदेतन्महदुक्थमित्येतद्व्याचष्टे । वाचकेष्विति । विष्णोर्वाचकेषु बृहतीसहस्रमयत्वमुक्थम् उत्तमं सा अकारस्य परा व्याख्या । तद्बृहतीसहस्रमुक्थम् एषामकारव्याख्यानरूपाणां मध्ये परम् । तदेतदकारव्याख्यानरूपं शब्दजातं तन्महदुक्थं च पञ्चधा स्थितं च अनेन तदेतत् पञ्चविधमित्येतत् व्याख्यातं भवति । तद्व्यक्तयः तद्व्याख्यानरूपाः विष्णुगुणान् ब्रुवन्तीति विष्णुगुणब्रुवाः । तस्यै यदुपांशु इत्येतद्व्याख्याति । अकारस्येति । उपांशोरुपांशुकथनरूपस्य । अथ यदुच्चैः तच्छरीरमित्येतद्व्याचष्टे । देहेन्द्रियेति । तच्छरीरमित्यस्य शरीराभिमानिनीत्यर्थ उक्तो भवति । तस्मात् उपांशूच्चैः कथनयोः देवतातारतम्यात् उच्चादुच्चैः कथनात् उपांशुकथनम् । तदुपपादयति । वाग्विति । सर्वशब्दानाम् अकारार्थत्वं लेशतो विवृणोति । अकारस्येति ।

तस्य अकारस्य अधिकोच्चत्वमानम् अधिकोच्चत्वं सर्वोत्तमत्वम् अनयोः अधिकोच्चत्वज्ञानं तत्सर्वमकारवाच्यं तत्सर्वमकारेणैवोक्तम् । कुतः आधिक्यवक्तृतः । अकारस्य आधिक्यवक्तृत्वात् । असौ विष्णुः अधिको-च्चस्वरूपः । अधिको माता च । अत अकारार्थ ॐकार इत्यर्थः । नारायण-शब्दोऽपि अकारव्याख्यानरूप इत्याह । एकार्थत्वादिति । एकार्थत्वात्

अकारनकारयोरन्यनिषेधाख्यैकार्थस्य प्रतिपादकत्वात् । पुनस्तेन आकारेण सह स्थितः दीर्घीभूतः क्षयं वदन् रेफः अभाववाच्यकारस्यार्थः । रीङ् क्षये । सोऽपि रेफोऽपि अभाववाची । सः अकारः यकारत्वं गतः । गत्यभावयोरेकार्थत्वात् तस्मात् यकारादुपरितनो नकारः रेफस्योत्तरत्वत्तः रेफस्योपरि स्थितत्वात् नकारत्वं गतः । असौ नः विरुद्धार्थवाचकः अकारो हि । एवं नारायणशब्दस्य अकारविकारित्वम् उक्त्वा तदर्थमाह । अन्यत्वादिति । अन्यत्वात्सर्वजीवेभ्यो जडेभ्य इत्यनेन नकारार्थ उक्तो भवति । सर्वदोषोज्झितत्वादित्यनेन रेफार्थ उक्तो भवति । सर्वतोऽप्यत्यधिकत्वत इत्यनेन दीर्घाकारयोरर्थ उक्तः । निरासनाच्च दोषाणां स्वभक्तेभ्य इत्यनेन यकारार्थ उक्तः । सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपत इत्यनेन नकारार्थ उक्तो भवति । अयं नारायणशब्दार्थ एव अकारार्थो हि उपसंहरति । तस्मादिति । इयं नारायणाभिधा अकारबीजा अकारमूला । प्रणवश्च अकारमूलः । ततः सर्वशब्दमूलत्वात् अकारश्चक्रिणः प्रधानं नाम । प्राधान्यमुपपादयति । अकारेति । ननु ब्रह्मवाय्वोरपि अकारदेवतात्वं क्वचिदुच्यते । अतः कथं विष्ण्वैकनामत्वमकारस्य इत्यत आह । वायुरिति । नामिनौ वाच्यौ वाच्याभिमानिनोः पृथक्त्वे दृष्टान्तमाह । यथेति । वेदाख्या वेदाभिमानिनी परा अन्या । नारायणं देवं ध्यात्वा जपेत् । तदेतत्पञ्चविधमित्यत्र निरन्तरप्रकृतमहदुक्थपरामर्श इत्यन्यथाप्रतीतिं निराकरोति । परमेति । परमविकारेण महदुक्थेन सह अनेन परमविकारस्य विकारमात्रस्य पञ्चविधत्वमुक्तं भवति । ऋग्गाथा कुंब्या इत्येतद्व्याचष्टे । स्वराणामिति । यत्र वाक्ये स्वराणां नियमः सा ऋक् । या अन्याः स्वरनियमरहिताः ता गाथाः । परस्परमसमानि विषमसङ्ख्याकाक्षराणि स्वरनियमरहितानि खण्डवाक्यानि कुंब्याः । यजुर्निगदो वृथावागित्येतद्व्याचष्टे । यज्ञाङ्गमिति । अथैतन्मूलम् वाचो यदनृतमित्यस्याभिप्रायमाह । अकारार्थत्वादिति । नकारः सर्वस्या वाचः किञ्चिन्मूलमिव । कुतः । अकारार्थत्वात् । अकारैकदेशार्थत्वात् । तस्मात् अकारस्य सर्ववाचां मूलत्वात् अकारार्थाः प्रणवनारायणशब्दयोर्यथा विविच्यास्माभिर्दर्शितः । तथा सर्वेष्वप्यकारार्थोऽस्तीति ज्ञेय एव । तथापि अयोग्यानां सम्यङ् न वाच्यमिति स्वल्प एव प्रकाशितो अस्माभिः । अनृतं वदन् नाविर्मूलमात्मानं करोतीत्यस्याभिप्रायमाह । वाच इति । उद्वर्तने

अशक्तत्वात् पुंसामिति शेषः । उद्वर्तते पुमान् इति शेषः । अन्यत्र कृतमुद्वर्तनम् अन्यत्र कथमायातीत्यतस्तदुपपादयति । यद्धीति । तस्मात् काल एव दद्यादित्येतत् व्याख्याति । तस्मादिति । तस्मात् सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्तिजायत इत्युक्त्वात् । ॐ इति सत्यमित्यत्र ॐकारस्य सत्यत्वं कथमित्यत आह । अकारस्येति । यथावस्थितं हि सत्यम् । तथा च सर्ववाचां मूलभूतस्य अकारस्य ॐकारस्य आदावेव लोपेन स्थितत्वात् ॐकारः सत्यमित्युच्यते । तदेतदाह । अकारस्याद्याविति । तदेतत् पुष्पं फलं वाच इत्येतद्विवृणोति । उकारेति । अकाराख्यवाग्वृक्षस्य उकारादि विकारलक्षणपुष्पफलसहितत्वात् । ॐकारः पुष्पफलात्मकश्च । इतश्चोङ्कारः सत्यमित्याह । अकारस्येति । सन्नेव सत्य एव तमेव सत्यमेव । तदेव विवृणोति । यमर्थमिति । इति अस्माद्धेतोः । नेत्यनृतमित्येतद्विवृणोति । नकारस्त्विति । अशिरस्कत्वात् अकारशिरस्कत्वात् तावता कथं नकारस्य असत्यत्वमित्यतः तदुपपादयति । मूलेति । अनृतस्य मूलत्वमुपपादयति । तथापीति । तथापि अशिरस्कत्वेऽपि अनृतस्याकारविकारत्वोपपादनेनैव यर्जुनिगदवृथावागादीनामपि अकारविकारत्वं व्याख्यातं भवतीत्याह । तस्मादिति । अकारो वै सर्वा वागित्युपसंहाररूपस्य वाक्यस्य तात्पर्यमाह । तस्मादिति ।

तद्वा इदं बृहतीसहस्रं सम्पन्नं तदिदमुक्तप्रकारेणैव बृहतीसहस्रं सम्पन्नं भवति। तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य सकाशात् । अनुष्टुभाम् अनुष्टुप्च्छन्दोरूपाणाम् ऋचाम् एकादशशतानि भवन्ति । अनुष्टुभः अनुष्टुब्रूपाः पञ्चविंशतिः । पञ्चविंशतिसङ्ख्याकाः ऋचश्च भवन्ति । बृहतीसहस्रशंसने कथं पञ्चविंशत्युत्तरैकादशशतानुष्टुभो भवन्तीत्यत आह । आत्तं वै भूयसा कनीय इति । आत्तमुपात्तमङ्गीकृतमन्तर्भावितम् अनुष्टुभपेक्षया बृहत्या अक्षराधिक्यात् अनुष्टुभो बृहत्यामेव अन्तर्भाव इत्यर्थः । बृहतीसहस्रशंसने पञ्चविंशोत्तरैकादशशतानुष्टुभामेव बृहत्यामन्तर्भावः । बृहतीसहस्रशंसने पञ्चविंशोत्तरैकादशशतानुष्टुभो भवन्तीत्यत्र प्रमाणमस्तीत्याह । तदुक्तमिति । वाचामष्टापदीमित्यस्य तात्पर्यम् अष्टौ हि चतुरक्षराणि भवन्तीति । अनुष्टुभ इति शेषः । नवस्रक्तिमित्यस्य तात्पर्यं बृहती सम्पद्यमाना नवस्रक्तीति । अनुष्टुबेव

बृहतीत्वेन सम्पद्यमाना चतुरक्षरनवविभागा भवति । ऋतस्पृशमित्यस्य तात्पर्यं सत्यं वै वागृचा स्पृष्टमिति । वागनुष्टुप् ऋचा ऋग्रूपेण सत्यं भगवन्तं स्पृष्टा वै। विषयीकरोति वै । इन्द्रात् परितन्वं मम इत्यस्य तात्पर्यं तस्मात् । तदैन्द्रादित्यादि । तस्मात् बृहत्या नवस्रक्तित्वात् तदैन्द्रात् प्राणात् इन्द्रसम्बन्धिप्राणप्रतिमायाः तस्मादेव विष्णोश्च प्रतिमायाः बृहत्यै बृहत्याः वाचमनुष्टुभम् । वागभिमानिन्युमाभिमन्यमानाम् अनुष्टुबाख्यां तन्वं प्रतिमां सन्निर्मिमीते । बृहत्यै बृहत्यभिमानिदेवतायाः ऐन्द्रात् इन्द्रसम्बन्धिनः प्राणात् भगवत्प्रतिमायाः अनुष्टुभम् अनुष्टुप्देवतां वाचम् उमाख्यां तन्वं प्रतिमां सन्निर्मिमीते उत्पादयति । वाचमष्टापदीमहं नवस्रक्तिम् ऋतस्पृशं सत्यरूपं विष्णुविषयां वाचम् अनुष्टुभं नवस्रक्तिं बृहतीत्वेन कुर्वन् चतुरक्षरनवपादबृहतीत्वेन सम्पादयन् षट्त्रिंशाक्षरबृहतीऋचां सहस्रं शंसन्नित्यर्थः । इन्द्रात् इन्द्रस्य विष्णोरनुग्रहात् वायोश्च इन्द्रात् इन्द्रस्य विष्णोः वायोश्च प्रतिमायाः बृहत्याः तन्वं वाचम् उमाभिमन्यमानानुष्टुबाख्यप्रतिमां परिममे । निर्मितवानस्मि । इन्द्रात् इन्द्रसम्बन्धिनः प्राणात् तन्वम् उमाख्यप्रतिमां परिममे। ततो जातेति स्मरामीत्यभिप्राय इति यदेतन्महदुक्थं बृहतीसहस्राख्यं स एष वाचः अकाराख्यवाचः परमो विकारः । अकारविकाराणां सर्ववाचां मध्ये परमविकारः तदेतत्पञ्चविधं परमविकारः विकारमात्रं चेति तदेतत् सर्वं पञ्चविधम् । ता विधा उद्दिशति । मितममितं स्वरः सत्यानृते इति । मितादिकं विविच्य दर्शयति । ऋगित्यादिना । ऋग्गाथा कुंब्या इति मितं स्वरनियमवती वाक् । स्वरनियमरहिता मिताक्षरा वाक् गाथा । परस्परमसमानि विषमसङ्ख्याक्षराणि स्वरनियमरहितानि खण्डवाक्यानि कुम्ब्या । यज्ञाङ्गं तदेतत्त्रितयं मितम्। यज्ञाङ्गवाक्यं यजुः । वाक्यमात्रं निगदः । वृथावाक् व्यर्थवाक् तदेतदमितम् । साम सामगानम् । यः कश्च गेष्णः यत्किञ्चित् गानरूपं स स्वरः । ॐमिति सत्यं ॐमित्येतद्सत्यमित्युच्यते । नेत्यनृतं न इत्येतदनृतं यत्सत्यं सत्यनामकं ॐकारः । तदेतद्वाचः अकाराख्यवाचः पुष्पं फलं पुष्पफलात्मकम् अकारव्याख्यानरूपउकारादिविकारात्मकत्वात् । यः वाचः अकाराख्यवाचः पुष्पं फलं पुष्पफलरूपं सत्यं ॐकारं वदति सः यशस्वी प्रसिद्धः कल्याणकीर्तिः शुभकीर्तिः भवति । भवितोः मोक्षं प्राप्तुम् ईश्वरश्च

भवति । अथ यदनृतं तद्वाचः मूलम् । निषेधवाच्यकारस्य नकारस्य चैकार्थत्वात् नकारोऽपि सर्वस्या वाचः किञ्चिन्मूलमिव । आविर्मूलः मृदपगमेन प्रकटमूलः शुष्यति उद्वर्तते च । यथा तथा उद्वर्तते पतति एवमेव अनृतं वदन् ज्ञानद्रव्ययोः प्रतिग्रहाय योग्ये प्राप्तेऽपि नेति वदन् आत्मानमाविर्मूलं करोति । स्वं प्रकटमूलवृक्षवत्करोति । स पुमान् शुष्यति । उद्वर्तते धर्मादिशून्यो भवति । अधःपतति च । तस्मादेव अनर्थप्राप्तेरनृतं न वदेत् । नेति न वदेत् । एतेन कारणेन दयेत तु दयां कुर्यादेव दद्यादेवेत्यर्थः । तर्हि किं सर्वमोङ्कुर्यात् नेत्याह । परागिति । यदोमित्यक्षरं तत् पराग्वै प्रतिकूलं वै । रिक्तं स्वस्य रिक्तत्वकारणं तदेवोपपादयति । स यदिति । तत् यत्किञ्च यत्किञ्चिद्द्रव्यं ज्ञानं वा स्वकीयम् अयोग्येभ्योददामीत्याह । ददामीति ब्रूयात् । अत्रैव तदैव तत् अस्मै अस्मात् रिच्यते गच्छति । तस्मात् द्रव्यादिमान् सर्वमोङ्कुर्यात् सर्वमपि दद्यात् अयोग्याय इति शेषः । तर्हि आत्मानं रिच्यात् । रिक्तं कुर्यात् । सकामेभ्यो नालं स्यात् । स्वाभिलषितपुरुषार्थप्राप्तये समर्थो न स्यात् । अथ तस्मात् यन्नेति अयोग्येषु नेति वचनं तत् अभ्यात्मम् आत्मनः पूर्णं पूर्णत्वकारणं सः यत् यदि सर्वं नेति ब्रूयात् पात्रे प्राप्ते तर्हि अस्य पापिका कीर्तिर्जायते । अपकीर्तिजायेत । सा पापिका कीर्तिः एनं नेति वक्तारं तत्रैव तस्मिन्नेव जन्मनि हन्यात् । हतप्रायं कुर्यात् । तस्मान्नेत्युक्तेरनर्थफलत्वात् । काल एव दद्यात् । पुण्यकाले सत्पात्रे च दद्यादेव । कांले पुण्यकालेऽपि न दद्यात् अपात्रे न दद्यात् । तत् तस्मात् कारणात् सत्यानृते मिथुनीकरोति । मिलिते कुर्यात् । कालपात्रानुसारेणेति भावः । तयोः सत्यानृतयोर्मिथुनात् संयोगात् प्रजायते प्रकृष्टो भवति । यो वैतां वाचम् अकारविकाराख्यां वाचं वेद सम्प्रतिवित् सम्यज्ज्ञानी भूयांश्च भवति । एष मितादिः यस्या विकारः तां वाचमुपसंहरति । सर्वा वाक् अकारो वै अकारमूला वै । अकारस्य भगवन्नामत्वात् तद्विकाररूपाः सर्वा वाचोऽपि भगवन्नामान्येवेत्यर्थः सैषा अकारात्मिका वाक् स्पर्शोष्मभिः सर्वैः स्पर्शाक्षरैः ऊष्माक्षरैश्च व्यज्यमाना बह्वी बहुलसङ्ख्योपेता नानारूपा विलक्षणरूपा भवति । तस्यैतस्या वाचो यदुपांशूच्चारणं स प्राणः । तस्य प्राणो देवता । अथ यदुच्चैरुच्चारणं तस्य शरीरं स्थूलसूक्ष्मात्मकसर्वशरीराभिमानिनी सरस्वती देवता ।

तस्मादुपांशूच्चारणं तिर इव तिरोभूतमिव अशरीरं तिर इव हि । अशरीरं वस्तु अप्रत्यक्षमिव हि प्राणः अशरीरो हि । अथ यदुच्चैरुच्चारणं तच्छरीरं शरीराभिमानिदैवत्यं तस्मात् शरीराभिमानिदेवताकत्वत् ततः उच्चैरुच्चारणम् आविः स्पष्टं भवति । आविर्हि शरीरं स शरीरमाविर्भूतं हि ॥ ६ ॥

ऐतरेयोपनिषत्

**तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात्प्रैतीति ह स्माह महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति तदाहुर्यदनेन रूपेणामुं लोकमभिसम्भवतीम् ३ अथ केन रूपेणेमं लोकमाभवतीं ३ तद्यदेतत्स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात्तस्मान्न बीभत्सेताथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत सोऽयमात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छत्यसावात्माऽमुमात्मानमिममस्मा आत्मने सम्प्रयच्छति तावन्योन्यमभिसम्भवतोऽनेनाह रूपेणामुं लोकमभिसम्भवत्यमुनो रूपेणेमं लोकमाभवति ॥ ७ ॥**

भा— विद्यान्तरोपदेशार्थं तद्वा इदं बृहतीसहस्रमिति पुनः पुनः परामर्शः । तदिदं बृहतीसहस्रं तद्यशस्तस्य नारायणस्य यशः । यस्य नारायणस्यैतद्यशः स भगवानेवेन्द्रनामा । स हि यत्प्रथमत इन्द्रो बभूव स्वेच्छया यज्ञनामा । तस्मात्तमेव वेदा इन्द्रशब्देन वदन्ति मुख्यतः । इदि परमैश्वर्य इति धातोश्च तस्यैव हि परमैश्वर्यम् । अन्येषां तु द्वादशानां तेन दत्तमेवेन्द्रत्वं न तु मुख्यतः । अतो विष्णावेवेन्द्रशब्दं प्रयुङ्क्ते श्रुतिः । 'मत्सि सोमं वरुणं मत्सि मित्रं मत्सीन्द्रिमिन्दो पवमान विष्णुमि'ति[१] । न चेन्द्रं विष्णुं चेति पृथगन्वयः क्रियते । तद्वा वरुणादिषु पृथक्पृथङ्मत्सिशब्ददर्शनादत्रापि पृथङ्मत्सिशब्दो दृश्येत । न हि सर्वेषां

१. ऋ. ९/९०/५

पृथङ्मत्सिशब्ददर्शने एकस्यैवान्यथात्वं युज्यते । न चात्र द्वित्वगमकं चकारादिकं विद्यते । तस्मात्प्रातर्भगं पूषणं ब्रह्मणस्पतिमित्याद्यप्येकस्यैव विष्णोर्विशेषणम् । यत्र चैवं भूतेष्वेकत्वे विरोधो दृश्यते तत्र तेनैव विरोधेन द्वित्वं भवति । अन्यथैकत्वमेव । 'यो देवानां नामधा एक एवे'ति चोक्तम् । बहुरूपत्वाद्बहुवचनं च विष्णोरेव युज्यते । तस्मान्मुख्यतो विष्णावेवेन्द्रादिशब्दा अन्येषामुपचारतः । मत्सि महामिन्द्रमिन्दो मदायेत्यन्येन्द्रस्य पृथगुक्तेश्च मत्सीन्द्रमिन्दो पवमानेति पूर्वोक्त इन्द्रो विष्णुरेवेति सिद्धम् । महत्त्वं च तस्यादितिपुत्रत्वेऽग्रजत्वमात्रं न तु सामर्थ्यतः । मह पूजायामिति धातोः । पूज्यो ह्यग्रजो भवति ।

आयो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः ।
वेधा अजिन्वत् त्रिषधस्थ आर्यमृतस्य भागे यजमानमभजत्[१] ॥

इतीन्द्रस्य परमदैवं जनको यज्ञभागादिप्रदाता विष्णुरेव हि श्रूयते । इन्द्रश्च यजमानः । तस्मात्तत्प्रसादादवताराग्रजत्वमेव तस्य महत्त्वम् । अन्येन्द्रो ह्यहं प्रथमः पिबेयमहं प्रथमः पिबेयमिति वायुना विवदमान आजौ पराजितो वायुं प्रसादयित्वा चतुर्थे वायुना सह ग्रहमाप[२] ।

---

१. ऋ. १/५६/५

२. "देवा वै सोमस्य राज्ञोग्रवेगे(पेये)न समपादयन्नहं प्रथमं पिबेयमहं प्रथमं पिबेयमित्येवाकामयन्त ते सम्पादयंस्ततोऽब्रुवन् । हन्ताहिमया समयो न उज्ज्रेष्यति स प्रथमः सोमस्य पास्यतीति तथेति त आजिमयुस्तेषामाजियातानामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यताथेन्द्रो मित्रावरुणावथाश्विनौ । सोऽवेदिन्द्रो वायुमुद्वेजयमिति तमनुपरापतत् । सहनावथोज्जेयावेति स नेत्यब्रवीदहमेवोज्येष्यामीति तृतीयमथोज्ज्यायावेति नेति हैवाब्रवीदहमेवोज्ज्येप्यामीति तुरीयमयोज्ज्यायवेति तथेति तं तुरीयेत्त्यार्जततुरीयभागिन्द्रोऽभवत्त्रिभाग्वायुः" इत्यैतरेयब्राह्मणे (१/९/१) ।

"अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु । त्वं हि पूर्वपा असि । (ऋ. ४/४१/१) देवा दिधिषे पूर्वपेयम्" इत्यादिश्रुतिसिद्धं तत् ।

- इति सुमध्वविजयभावप्रकाशिकायाम् (९/५०) ।

विष्णुस्तु 'क्रतुं सचन्त मारुतस्य वेधस' इति वायोरपि विधाता श्रूयते। डुधाञ् धारणपोषणयोरिति धातोर्विशेषेण धारणपोषणकर्ता हि वेधाः। तस्माद्भगवत एवैतद्यशो बृहदुक्थादिकम्।

ऋक्सहस्रात्मकं विष्णोर्यश इन्द्राभिधस्य हि।
इन्द्रो हि प्रथमो विष्णुर्यज्ञनामा जगत्पतिः॥
तत्प्रसादादथेन्द्रत्वं द्वादशान्ये प्रपेदिरे।
पुरन्दरस्त्वेक एव वासुदेवप्रसादतः॥
द्विवारमिन्द्रतामाप तस्मात् द्वादश ते परे।
अग्रजत्वाददित्यां तु महेन्द्रो नाम चाभवत्॥
महाव्रतं कर्म कृत्वा चैव नाम्ना महेन्द्रकः।
महत्त्वं मुख्यतो विष्णोर्न ह्यन्यस्य कदाचन॥
एवं यो वेद तं विष्णुं विस्रस्तो बन्धतोऽखिलात्।
अस्माल्लोकाद्धरेर्लोकमेति नास्त्यत्र संशयः॥
इत्याह भगवान्विष्णुर्महिदासस्वरूपकः।
श्वेतद्वीपादिकात्प्राप्य स इन्द्राख्यो हरिः स्वयम्॥
महिदासाभिधो भूत्वा लोकेष्वेषु विराजति।
तत्र पृच्छन्ति केचित्तु यद्येष भगवान्हरिः॥
महिदासादिरूपेण भूमिष्ठो रमते प्रभुः।
तदा यदा स्त्रिया विष्णू रमते नित्यसत्सुखः॥
कया स्त्रिया रतिं कुर्यान्न ह्यन्यरतिरच्युतः।
स्त्रीरूपे तत्स्वयं स्वस्मिन् रमतेऽसावितीदृशम्॥
वाच्यं तत्र च भूमिष्ठरूपेण तु दिवि स्थितम्।
स्त्रीरूपं किमसौ गच्छेदथ यद्येवमत्र च॥
स्त्रीरूपं पृथिवीसंस्थं केन रूपेण संव्रजेत्।

न ह्यन्यगम्यो भगवान् स्त्रीरूपोऽपि जनार्दनः ॥
इति पृष्टः स्वशिष्यैः स महिदासोऽवदद्धरिः ।
स्त्रीषु यल्लोहितं लोके तत्राग्निस्थो जनार्दनः ॥
स्त्रीरूपः सोऽग्निनामैव ज्वलज्ज्वालासमप्रभः ।
तस्माद्विष्णोः सन्निधानाद्भर्ता भार्याशरीरगात् ॥
न बीभत्सेतैव रक्तात्तथा पुंरेतसि स्थितः ।
आदित्ये संस्थितो विष्णुरादेरादित्यनामकः ॥
तस्मान्न रेतसो भार्या बीभत्सेत पतिस्थितात् ।
पुंरूपो भगवान्विष्णू रेतसिस्थो द्युमत्प्रभः ॥
तस्माद्यद्भूमिगं विष्णोः स्त्रीरूपं तत्स्वयं हरिः ।
प्रादुर्भावगतो द्याद्दिवि स्थितपुमात्मनः ॥
सूर्यगस्य तथा पुंसो रेतसिस्थस्य चात्मनः ।
देवीषु यल्लोहितगं स्त्रीरूपं परमात्मनः ॥
तत्स सूर्यगतो विष्णुः पुंरेतःस्थस्य चात्मनः ।
दद्याद्भूमिगतस्यैव रूपद्वयमिदं ततः ॥
परस्परं सम्भवति विष्णोर्नित्यसुखात्मकम् ।
प्रादुर्भावस्थितं रूपं यच्च भूमौ पुमात्मकम् ॥
विष्णोस्तदपि देवीषु स्थितस्त्रीरूपकात्मना ।
एवमन्योन्यतो विष्णू रतः स्वस्मिन्न चान्यतः ॥
रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना ।
रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः ॥
रमया रमणं [१]तस्माद्रमाया रतिपात्रता ।
नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः[२] ॥ इत्यादि च ।

---

१. शुभतमकथाशय परम सदोदित जगदेककारण राम रमारमण ॥ इति द्वादशस्तोत्रे.
२. लक्ष्मीभुजान्तरगतः स्वरतोऽपि चाग्रे ॥ (म.भा.ता.नि. १/२)

स एव महिदास इन्द्रनामा प्राप्येमं लोकमत्र भूत्वा प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्यैषु लोकेषु राजति। नात्र प्रेत्यशब्दो मरणवाची। किन्तु 'प्रेतां यज्ञस्य शम्भुवे'त्यादिवत्प्राप्तिवाच्येव। न हि मृतः पुनरेषु लोकेष्वेव राजति। न च यशोमात्रराजनेन स्वस्य राजनं भवति। भिन्नपदार्थत्वात्। यद्वा एति च प्रेति चेत्यादौ प्राप्त्यर्थेऽपि वेदेषु प्रसिद्धत्वाच्च। 'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदित'मिति स्कान्दे। यदनेन रूपेणामुं लोकमभिसम्भवति। अनेन महिदासादिरूपेणामुं लोकं दिविष्ठं स्वरूपम्। लोक्यत इति स्वरूपवाची लोकशब्दः। 'आत्मानमेव लोकमुपासीते'तिवत्। यच्छब्दः किंशब्दार्थे। अनेन रूपेण तद्रूपमभिसम्भवति किम्? उभयोरपि परिहारदर्शनादस्यापि प्रश्नत्वमवगम्यते। 'यतश्चोदेति सूर्य' इत्यादिवत्। रङ्गस्तु प्रश्नविषयस्य दुरवगमत्वं प्रकाशयति। 'दुर्गमे प्रश्नविषये प्रश्नो रङ्गयुतो भवेदि'ति शब्दनिर्णये। केन रूपेणेमं लोकमाभवति। केन स्वरूपेण भूमिष्ठेनात्मन एव स्त्रीरूपेण विष्णुः सम्बध्यते। सोऽयं महिदासादिप्रादुर्भावरूप इदं भूमिष्ठस्त्रीरूपं लोहितगतं च स्वकीयमेव रूपममुष्मै दिविष्ठाय स्वपुरुषरूपाय प्रयच्छति देवरेतःस्थिताय च। देवी लोहितस्थितमात्मनः स्त्रीरूपं महिदासादिरूपेभ्यो मानुषरेतःस्थितरूपेभ्यश्च दिविष्ठैश्च विष्ण्वादिस्वरूपैः प्रयच्छति च। तानि भूमिष्ठत्वेन दिविष्ठत्वेन द्विविधत्वात्तावित्युच्यन्ते। अग्नेस्तद्रूपमग्निनाम्नो विष्णोः प्रतिमा तत्सन्निधानात्। एवमादित्यनाम्नो विष्णोः। न ह्यग्न्यादिस्वरूपमेव लोहितादि। न च लौकिकस्त्रीपुरुषसम्बन्धमात्रमत्रोच्यते। अप्रस्तुतत्वात्तस्य। भगवानेव ह्यत्र प्रस्तुतः। असावात्मेत्यात्मशब्दाच्च भगवानेवेति ज्ञायते।

आत्मशब्दः[१] परे विष्णौ नान्यत्र क्वचिदिष्यते।
गुणपूर्त्यभिधायी स नान्यस्य गुणपूर्णता॥
अमुख्यात्मान एवातो ब्रह्माद्याः सर्वे एव हि –इत्यादि च ब्रह्माण्डे।

---

१. दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्॥ - इति भागवते (४/१/१५)

यदक्षरं पञ्चविधं समेति । सत्यस्य सत्यमनु यत्र युज्यत इत्यादिनोक्तार्थविषयोदाहृतैः श्लोकैरपि भगवत एव स्वरूपाणां परस्परयोगस्योक्तत्वात् । गायत्र्युष्णिग्बृहतीत्यादिना भगवत एव पञ्चविधस्य स्त्रीरूपस्य महिदासादिपञ्चरूपाणां च प्रस्तुतत्वाच्च ॥ ७ ॥

टी— बहुषु खण्डेषु तद्वा इदं बृहतीसहस्रमिति पुनःपुनः कथनस्य प्रयोजनमाह । विद्येति । तद्वा इदं बृहतीसहस्रं सम्पन्नं तद्यशः इत्येतत् खण्डं व्याचष्टे । तदिदमिति । तस्येन्द्रत्वमुपपादयति । स हीति । प्राप्तेन्द्रपदत्वात् इन्द्रनामेत्यर्थः । इन्द्रशब्दप्रवृत्तिनिमित्तवत्वाच्च । तस्यैव मुख्येन्द्रत्वमित्याह । अन्येषामिति । अतः मुख्येन्द्रत्वात् का सा श्रुतिरित्यतः तां श्रुतिम् उदाहरति । मत्सीति । सोम सोमाभिमानिन् वरुण मत्सिमादयसि । मित्र मत्सि इन्दो अभीष्टप्रद मत्सि पवमान वायो इन्द्रं विष्णुम् इन्द्रनामानं विष्णुं मत्सीति श्रुताविन्द्रशब्दस्य विष्णुशब्दसामानाधिकरण्याच्च इन्द्रशब्दस्य विष्णुपरत्वं ज्ञायते । नात्र विष्णुशब्दसामानाधिकरण्येन इन्द्रशब्दस्य विष्णुपरत्वम् । इन्द्रं विष्णुं मत्सीति पृथगन्वयसम्भवादित्यत आह । न चेति । पृथगन्वयपक्षे बाधकमाह । तद्धेति । एवमन्वयाङ्गीकारेऽश्रुतकल्पनं स्यादित्याह । न चेति । द्वित्वगमकम् अयमेव न्यायो वाक्यान्तरेऽप्यनुसन्धेय इत्याह । तस्मादिति । तस्मात् द्वित्वगमकचकाराद्यभावात् ।

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्[1] ॥

इत्यादौ वाक्यभेदज्ञापकचकाराद्यभावेऽपि वाक्यभेदः कल्प्यते । तद्वदत्रापि वाक्यभेदः किं न स्यादित्यत आह । यत्र चैवमिति । एवंभूतेषु वाक्यभेदज्ञापकचकारादिरहितेषु एकत्वे एकवाक्यत्वे विरोधः पुनरुक्त्यादिविरोधः । न चात्र तादृशं विरोधं पश्याम इति भावः । भगवतः सर्वशब्दवाच्यत्वस्य प्राक् समर्थित्वात् च इन्द्रशब्दः तत्पर इत्याह । यो देवानामिति । सर्वशब्दवाच्यत्वे बहुवचनान्तशब्दवाच्यत्वं स्यात् । तच्च कथमेकस्य युज्यत इत्यत आह । बहुरूपेति । उपसंहरति । तस्मादिति । इतोऽपीन्द्रं विष्णुमिति एकेन्द्रशब्दो

१. महानारायणोपनिषत् (१०/१०)

विष्णुपर एवेत्याह । मत्सीति । मत्सि महामिन्द्रमितो मदायेत्युत्तरवाक्ये पुरन्दरस्य पृथगुक्तेः पूर्वोक्तेन्द्रो न पुरन्दरेन्द्रः इति ज्ञायते । महामिन्द्रमिति महत्वविशेषणात् कथमयमिन्द्रशब्दः पुरन्दर इत्यत आह । महत्त्वं चेति । अग्रजत्वे कथं महत्त्वमित्यत आह । महेति । सामर्थ्यतो महत्त्वं विष्णोरेव न पुरन्दरस्य इत्येतत् श्रुत्या दर्शयति । आयो इति । सुकृत्तरः सुष्टु कुर्वतां मध्ये श्रेष्ठः दैव्यः देवसम्बन्धी । अन्तर्यामितया यो विष्णुः सुकृते इन्द्राय सचथाय सख्याय आविवाय । संयुक्तोऽभूत् । त्रिषधस्थः श्वेतद्वीपादि-स्थानत्रयगतः । वेधाः जनकः आर्यं पूज्यमिन्द्रम् अजिन्वत् अजनयत् । यजमानं महाव्रतेनात्मानं यजमानम् ऋतस्य भागे यज्ञभागे आभजत् भाजयति स्म । यज्ञभागादियुक्तपदमदादित्यर्थः । अत्र श्रुताविन्द्रवाचकपदं दर्शयति । इन्द्रश्चेति । सामर्थ्याधिक्यं नेन्द्रस्येत्युक्तमुपसंहरति । तस्मादिति । तस्य सामर्थ्याग्रजत्वाभावे वाक्यान्तरं चाह । अन्येन्द्र इति । ग्रहं सोमग्रहं सोम-पात्रमित्यर्थः । विष्णोस्तु न वाय्वधीनत्वमित्याह । विष्णुस्त्विति । मारुतस्य वेधसः मारुतस्य विधातुः क्रतुं यज्ञं सचन्त अयोजयत् । तमुद्दिश्य यज्ञमकुर्वन्नित्यर्थः । वेधस इत्यस्य विधातुरित्ययमर्थः कथमित्यत आह । धात्र् इति । उपसंहरति । तस्मादिति । उक्तार्थे प्रमाणमाह । ऋक्सहस्रात्मकमिति । विष्णुः प्रथम इन्द्रो हीत्यन्वयः । स य एवमेतमिन्द्रं भूतानामधिपतिं वेदेत्यादि व्याचष्टे । एवमिति । प्रेत्येन्द्रो भूत्वेति व्याचष्टे । श्वेतद्वीपादिकादीति । तदाहुरित्यादिव्याचष्टे । तत्र पृच्छन्तीति । प्रभुर्म-हिदासादिरूपेण भूमिष्ठो विष्णुः स्त्रिया रमते किम् । यदा स्त्रिया रमते तदा कया स्त्रिया रमते । तदा कया स्त्रिया रतिं कुर्यात् न कयाऽपि । कुतः इत्यत आह । न ह्यन्यरतिरच्युत इति । तत्तस्मात् स्त्रीरूपे स्वस्मिन्नसौ भगवान् स्वयं रमते इति हि उत्तरं वाच्यम् । तत्र स्वस्मिन् रमत इति पक्षे भूमिष्ठरूपेण भूमिष्ठपुंरूपेणासौ भगवान् दिविस्थितं स्त्रीरूपं गच्छेत् किं यद्यत्र एवमङ्गीकारः। अथ तर्हि पृथिवीसंस्थं स्त्रीरूपं केन रूपेण संव्रजेत् । तद्यतेत्स्त्रियामित्यादि-व्याचष्टे । इति पृष्ट इत्यादिना । अग्निस्थो जनार्दनः तत्र सन्निहित इति शेषः। सः स्त्रीरूपोऽग्निनामा अग्निरितिनामवान् तस्मात् तस्मादित्येतद्व्याख्यानम् । तस्मादिति । अथ यदेतदिति व्याचष्टे । तथेति । आदेः सर्वस्यादित्वात्

आदित्यनामकः । द्युमत्प्रभः सूर्यप्रभः । सोऽयमात्मेममात्मानमित्यादि व्याचष्टे । तस्मादित्यादिना । प्रादुर्भावगतः महिदासादिरूपः पुमात्मनः पुंस्वरूपस्य स्वस्येति शेषः । तथा तत्सूर्यगतस्य आत्मनः पुंरूपस्य च दद्यात् । मनुष्यस्त्रीलोहितगं परमात्मनो यत् स्त्रीरूपं तत्पुंसो रेतसिस्थस्य द्युस्थ पुरुष-रेतस्सन्निहितस्यात्मनः पुंरूपस्य दद्यात् । तथा देवस्त्रीलोहितसन्निहितपरमात्मानं स्त्रीरूपं महिदासादिरूपात्मनो भूमिगतस्य मानुषपुरुषरेतोगतस्यात्मनः पुंरूपस्य च दद्यात् । तावन्योन्यमभिसम्भवत इत्येतद्व्याख्याति । रूपद्वयमिति । स्त्री-रूपं पुंरूपं चेति । ततः स्वरतत्वात् ।

अनेनाहरूपेणेत्येतद्विवृणोति । प्रादुर्भावस्थितमिति ।

रामकृष्णादिरूपं स्त्रीरूपकात्मना सम्भवतीति शेषः । निगमयति । एवमिति । अन्यतो न रमते इति कथम् । रमारमणस्य प्रसिद्धत्वादित्यत आह । रमयेति । तत्स्थेन रमास्थेनैव । तर्हि रमारमणत्वं कथमित्यत आह । रमयेति । तस्मात् रमया रमणं नाम रमाया रतिपात्रतैव । अस्याः विष्णोः रतिदातृत्वं नैव । रमा विष्णुरतिदा नैवेत्यर्थः । महिदास ऐतरेयः प्रेत्यैते-तद्वाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे । स महिदास इति । प्रेत्येत्यस्यार्थः । प्राप्येति । अत्र भूमौ । तदेव विशदयति । नात्रेति । शम्भुवा शम्भुवौ यज्ञस्य प्रेतां यज्ञं प्रत्यागच्छताम् । एष लोकेषु राजतीति । यशसा राजनं किं न स्यादित्यत आह । न चेति । यशोयशस्विनोर्भिन्नपदार्थत्वात् प्रसिद्धत्वाच्च प्रेत्यशब्दस्येति शेषः । यच्छब्दः यदनेनेत्यत्र यच्छब्दस्य किंशब्दार्थत्वे ज्ञापकमाह । उभयोरिति । यच्छब्दस्य प्रश्नार्थत्वे प्रयोगं दर्शयति । यतश्चेति । प्रश्नविषये दुर्गमे इत्यन्वयः । अथ केन रूपेणेत्येतत् प्रश्नवाक्यमनूद्य विवृणोति । केनेति । विष्णुः कर्ता भूमिस्थितेन रूपेण आत्मन एव स्त्री-रूपेण केन स्वपुंस्वरूपेणैव सम्पद्यत इत्यन्वयः । सोऽयमात्मेम-मात्मेत्यादिवाक्यं विवृणोति । सोऽयमिति । दिविष्ठैः विष्ण्वादिरूपैः । कर्तृभूतैः रूपाणां बहुत्वात् कथं ताविति द्विवचनेन निर्देशः इत्यत आह । तानीति । तानि स्त्रीपुंरूपाणि । अग्नेस्तद्रूपमित्यादि व्याचष्टे । अग्नेरिति । तल्लोहितमग्ने रूपम् अग्निनाम्नो विष्णोः प्रतिमा । तत्सन्निधानात् विष्णोः

सन्निधानात् । आदित्यस्य तद्रूपमित्यत्रापि आदित्यनाम्नो विष्णोः प्रतिमेत्यर्थः । प्रतीतार्थ एव किं न स्यादित्यत आह । न हीति । अपव्याख्याम् अपाकरोति । न चेति । वक्ष्यमाणपर्यालोचनयाऽप्यत्र भगवानेवोच्यत इत्याह । यदक्षर-मित्यादिना । पूर्वोक्तपर्यालोचनया च अयमेवार्थ इत्याह । गात्रयीति ।

तद्वा इदं बृहतीसहस्रं सम्पन्नं तदिदं बृहतीसहस्रं तद्यशः । तस्य विष्णोर्यशः स भगवानिन्द्रः । स भगवान् भूतादीनां ब्रह्मादीनाम् अधिपतिः । य एतमिन्द्रं भूतानामधिपतिं वेद विस्रस्ता अखिलबन्धविमुक्तः । स अस्माल्लोकात् प्रैति गच्छति । हरिलोकमिति शेषः । ऐतरेयो महिदास इत्याह स्म । तस्मान्नात्र संशयः कार्य इत्यभिप्रायः । स इन्द्रः प्रेत्य श्वेतद्वीपादिकात् । महिदास-रूपेणागत्य भूत्वा प्रादुर्भूय येषु लोकेषु राजति । तदाहुः तत्र केचिदेवमाहुः । पृच्छन्तीति भावः । अनेन रूपेण भूमिगतेन महिदासादिरूपेण अमुं दिविष्ठं लोकं लोक्यते दृश्यत इति लोकशब्दवाच्यम् । स्वस्त्रीरूपम् अभिसम्भवति । प्राप्नोति यत्किम् । यच्छब्दः किंशब्दार्थे । अथ प्रश्नान्तरम् । केन रूपेण द्युगतेन केन रूपेणेमं लोकं भूमिगतस्त्रीरूपमाभवति प्राप्नोति । इति प्रश्नः । तत् तत्र इदमुत्तरम् । स्त्रियां यदेतल्लोहितं तदग्नेः अग्निनाम्नो अग्निगतस्य हरेरूपं प्रतिमा । तस्मात् तेन कारणेन तस्मात् स्त्रीगतलोहितान्न बीभत्सेत न जुगुप्सेत । भर्तेति शेषः । अथ पुरुषे यदेतद्रेतो भवति तदादित्यस्य आदित्वादादित्यनाम्नो हरे रूपम् । तस्मात् तेन कारणेन तस्मात् पुरुषगतरेतसो न बिभत्सेत । भार्येति शेषः । सोऽयमात्मा भूमिष्ठमहिदासादिरूपो भगवान् भगवानिममात्मानं भूमिष्ठस्वस्त्रीरूपं भूमिष्ठं स्त्रीलोहितगतं स्वस्त्रीरूपम् अमुष्मै द्युस्थाय स्वपुंरूपाय सूर्यगताय च देवरेतोगतस्वपुंरूपाय च सम्प्रयच्छति । असावात्मा द्युस्थ-विष्णवादिरूपः अमुमात्मानम् आत्मनो द्युस्थस्त्रीरूपं देवी लोहितगतं स्त्रीरूपमिममस्मै भूमिगतमहिदासादिरूपाय स्वस्मै भूमिष्ठपुंरेतोगताय च स्वात्मने सम्प्रयच्छति । तौ द्युभूमिगतौ भगवन्तौ अन्योन्यमभिसम्भवतः । सम्बद्धौ भवतः । उपसंहरति । अनेनेति । अनेन रूपेण प्रादुर्भावगत-भूमिष्ठपुमात्मना अमुं लोकं द्युस्थदेवीगतस्त्रीरूपम् अभिसम्भवतीह । अमुना रूपेण द्युस्थपुंरूपेण इमं लोकं भूगतस्त्रीरूपं स्त्रीलोहितगतआत्मस्वरूपं च आभवति । प्राप्नोति ॥ ७ ॥

ऐतरेयोपनिषत्

तत्रैते श्लोकाः

यदक्षरं पञ्चविधं समेति युजो युक्ता अभियत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥
यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ।
यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।
तद्वियूया कवयोऽन्वविन्दन्नामायत्ता समतृप्यंच्छृतेऽधि ॥
यस्मिन्नामा समतृप्यंच्छृतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ॥

नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्रीपुमानुब्रुवन् । पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चन । अः इति ब्रह्म तत्राऽऽगतमहमिति । तद्वा यदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति जीवाक्षरेणैव जीवाहराप्नोति जीवाह्ना जीवाक्षरमित्यनकाममारोऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठति तदुक्तमृषिणा आतेन यातं मनसो जवीयसा [1]निमिषश्चिज्जवीयसेति जवीयसेति[2] ॥ ८ ॥

॥ इत्यैतरेयोपनिषत्सु द्वितीयारण्यके तृतीयोऽध्यायः ॥ २ ॥ ३ ॥

---

१. आतेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिवः उभे अहनी सुदिने विवस्वतः ॥ १२ ॥
(ऋग्वेद. १०-३९-१२) (२/३/४)

२. निमिषश्चिज्जवीयसा रथेना यातमश्विना ।
अन्तिषद् भूतु वामवः ॥ १३ ॥ (ऋग्वेद. ८-७३-२)

भा— यन्नारायणादिरूपेण पञ्चविधमक्षरं परं ब्रह्म तत्स्वस्मिन्नेव स्त्रीपुंरूपेण समेति । स्त्रीपुंरूपेण युजो देवा अश्वरूपेण रथे युक्ताः सन्तो यन्नारायणाख्यं परं ब्रह्माभिसंवहन्ति । तदेतत्सत्यस्य सत्यं नारायणाख्यं ब्रह्म यत्रानुयुज्यते यस्मिन् स्वरूप एव स्त्रीपुंरूपेण युज्यते । तत्र तस्मिन्नेव परे ब्रह्मणि नारायणाख्ये सर्वदेवा एकीभवन्ति मुक्ताः सन्तो मिलिता भवन्ति । नायमेकीभावो नाम स्वरूपैक्यम् । किंत्वेकस्थाने वासोऽत्यनुकूलचित्तता च । 'एकीभूय नृपाः सर्वे ववृषुः पाण्डवं शरैः'। 'एकीभूता तु सा सेना पाण्डवानभ्यवर्तत' इत्यादिवत् । न चैकीभावशब्दः स्वरूपैकत्वविषये प्रयुज्यमानः कुत्रदिद्दृष्टः । एकः पुरुषोऽपि यदा द्विधा भूत्वा एकीभवतीत्युच्यते तदाऽपि स्थानैक्यमेव । स्वरूपैक्यस्य पूर्वमेव सिद्धत्वात् । नचाज्ञात एकत्वे पुनर्ज्ञाते ऐक्यं प्राप्त इति प्रयोगो दृश्यते । किन्तु ज्ञात इत्येव प्रयुज्यते । तस्माद्भावसहित एकशब्दो न स्वरूपवाची । न हि पूर्वं भिन्नस्य पश्चात्स्वरूपैक्यं भवति किन्तु संसर्ग एव भवति । तस्मादत्रापि संसर्ग एव विवक्षितः । यदक्षरं पञ्चविधं समेतीत्युक्तस्य सत्यस्य सत्यमनु यत्र युज्यत इति परामर्शं कृत्वा तत्र देवाः सर्व एकं भवन्तीत्युच्यते तस्मान्न पुनरुक्तिः । यस्मादक्षरान्नारायणाख्यात्सस्वयमेव भगवान्प्रादुर्भावरूपी स्त्रीपुंरूपेण युक्त आगच्छति । तात्पर्यार्थं तस्यैवार्थस्य पुनरभ्यासः । वियूय विचार्य नामायत्तान्येव नामार्थभूतान्येव विष्णोर्माहात्म्यादीन्यन्वन्विन्दन् । ततश्चाधिकं समतृप्यन् । श्रुते परिपक्वे सति ज्ञाने । यस्मिन्विष्णौ नामानि ज्ञात्वा तस्मिन् ज्ञाने परिपक्वे समतृप्यन् तस्मिन्नेव देवाः सर्वयुजो भवन्तीत्यवधारणार्थं पुनर्वचनम् । सर्वयुजो भवन्ति मनोवाक्कर्मभिस्तत्रैव युक्ता भवन्ति । 'अर्थतः कठिनं क्रूरमुल्बणं श्रवणाप्रियमि'ति शब्दनिर्णये । अस्त्री पुमान्ब्रुवन् अस्त्री पुमांसं ब्रुवन् । ''सप्तसु प्रथमेति सूत्रात्'' । ''स्वातन्त्र्ये विभक्तिव्यत्यय''[1] इति च । स्वतन्त्रो हि भगवान् तत्प्रेरित एव तं वदतीत्यभिप्रायः । वदन्वदति वदन्नेव वदति ।

---

१. व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः ॥ इति ऋग्भाष्ये १/८९.

वदन्नेव न वदति । भवत्येव हि भगवान् स्त्रीरूपः पुंरूपश्च । तस्माद्वदत्येव । अप्रसिद्धत्वान्न वदति च ।

स्त्रीरूपश्चैव पुंरूपो यस्मान्नारायणः स्थितः ।
पुमांस्त्री चेति वाच्योऽतो वैलक्षण्यान्न चोच्यते ॥
विष्णोर्नपुंसकाकारो नैवास्ति क्वचन प्रभोः ।
तथाप्यरागाकृष्टत्वात्तच्छब्दैरपि कथ्यते ॥ इति गारुडे ।
नारायणादिरूपेण पञ्चधैव हरिः स्थितः ।
तन्नामभिश्च स्त्रीरूपैः समेति स्वैः स केशवः ॥
यत्स्यन्दनं वहन्त्येते देवा भार्यासमन्विताः ।
अधिदैवे तथाऽध्यात्मे जीवदेहात्मकं रथम् ॥
स सूर्यः सूर्यभार्या च चक्षुर्द्वयसमाश्रितौ ।
वहतोऽश्वात्मकौ देहं नारायणरथात्मकम् ॥
सोमश्च रोहिणी चैव दक्षवामश्रुतिस्थितौ ।
उभयोः पक्षयोः स्थित्वा वहतोऽश्वात्मकौ तयोः ॥
उद्धारणार्थमेतेषामुमा वाचि समास्थिता ।
नागाकारैव रश्मित्वमगमद्वैष्णवे रथे ॥
मनःस्थितः शिवश्चात्र मनोनामा महाबलः ।
अभवत्सारथिर्विष्णोर्विष्णुर्वायुश्च तं रथम् ॥
प्रकृष्टानन्दरूपत्वात्प्राणाख्यावधितिष्ठतः ।
तावेव चाश्विनामानौ हयास्यौ जगदीश्वरौ ॥ –इत्यादि गारुडे ।

'तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' –
- इति च श्रुतिः

सर्वसाधुगुणत्वात्तु वायुः सत्य इतीर्यते ।
तस्यापि सत्यतादाता साधुपूर्णगुणो हरिः ॥

सत्यस्य सत्य एतस्मात्स्त्रीपुंरूपः स केशवः ।
यस्मिन्स्वात्मनि युक्तः स रमते स्त्रीपुमात्मना ॥
मुनिगन्धर्वपित्राद्यैर्न तत्प्राप्यं कथञ्चन ।
आप्नुवन्ति सुराः सर्वे तद्रूपं जाज्वलत्सदा ॥
अर्धनारीपुमाकारं तस्य वामस्थितानि च ।
स्त्रीरूपाणि तु सर्वाणि विष्णोरत्यद्भुतानि च ॥
विष्णोर्यानि तु पुंरूपाण्यास्थितान्यस्य दक्षिणे ।
तान्यस्यैव तु रूपाणि युज्यन्तेऽत्र परस्परम् ॥
एष नारायणो देवो ह्यर्धनारीपुमात्मकः ।
सर्वे देवास्सभार्याश्च तं प्राप्य पुरुषोत्तमम् ॥
एकीभावं स्वभार्याभिरर्धनारीपुमात्मना ।
प्राप्यैवोपासते विष्णुं मुक्ताः संसारसागरात् ॥
मोदन्ते च रमन्ते च विभागं चेच्छयाऽऽप्नुयुः ।
बहुधा च भवन्त्येते स्त्रीपुमात्मपृथक्त्वतः ॥
प्रसादाद्वासुदेवस्य भागः स्त्रीपुंस्वरूपिणः ।
तेनैव नियता नित्यं तद्वशास्तत्परायणाः ॥
रमन्ते नान्यगम्योऽसौ देशो विष्णोः परात्मनः ।
स्त्रीपुंरूपेण युक्तं तद्विष्ण्वाख्यं परमक्षरम् ॥
अक्षरादेव परमात्पुंसो नारायणाभिधात् ।
आगच्छन्ति तदैते च देवा भार्यासमन्विताः ॥
वहन्त्यश्वादिरूपेण रथस्थं परमं वपुः ।
तत्सर्वदेवैः प्राप्यं च नान्यैः कथमपि क्वचित् ॥
मितादिपञ्चरूपं यद्वाक्यं लोकेऽथवा श्रुतौ ।
नारायणस्य नामैतदिति जानन्ति देवताः ॥
मनोवाक्कर्मभिस्तस्माद्योगमाप्स्यन्ति तत्र ते ।
सर्वशब्दान् हरौ नेतुं कस्य देवानृते बलम् ॥

वाय्वन्तास्तारतम्येन विष्णुनामार्थवेदिनः ।
सम्यग्वेत्ता मारुतोऽत्र तस्मान्मुक्तेभ्य एव च ॥
सुरेभ्योऽधिकमानन्दं नित्यं भुङ्क्ते हरेरनु ॥ इत्याद्यर्धनारीनारायणतन्त्रे

एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वा अकारो विशेषतो नारायणवाचक इत्याह । अः इति ब्रह्मेति ।

इति शब्दोऽभिधानान्ते यत्र वैशेषिकं हि तत् ।
नाम स्यादिति मे साक्षान्निर्णयः समुदाहृतः ॥ इति शब्दनिर्णये ।

तत्रागतमहमिति । यस्माद् अः इत्ययं शब्दः प्रस्तुतस्य भावं विरोधिनमन्यं च वदति तस्मात्प्रत्यक्षत्वाज्जीवजडात्मकस्य जगत एवानुक्तावपि प्रस्तुतरूपत्वात्तदन्यस्तद्विरोधी तत्र दृश्यमानदोषवर्जितश्चाकारशब्दार्थ इति सिद्ध्यति । मनसि प्रस्तुतत्वादवचनेऽपि प्रस्तुतमेवेदं सर्वम् । दृष्टसम्बन्धित्वाददृष्टं सर्वमपि प्रस्तुतं भवति । भगवांस्त्व इति पृथग्विवक्षितत्वादेव न प्रस्तुतसमुदाये । न च शून्यस्याशब्दार्थता । शून्याङ्गीकारे ह्यकारस्याभावताख्य एक एवार्थ इति सिद्ध्यति । विष्णोरङ्गीकारे त्वभावताऽन्यता विरोधितेति त्रयोऽप्यर्थाः सम्यगेव सिद्ध्यन्ति । तस्मादकारस्य भगवानेव मुख्यार्थो न शून्यम् । एकदेशार्थत्वात् । तस्मादमुख्यार्थत्वादन्ययुक्तेनैवाकारेणाभाव इति तदुच्यते न त्व इत्येव केनचित्कचित् । न च तथा प्रयोगोऽस्ति । तस्मात्पारतन्त्र्याल्पगुणत्वादिसर्ववस्तुस्वभावविरुद्धस्वभावं स्वतन्त्रं पूर्णगुणं सर्वजीवजडेभ्योऽन्यदज्ञानदुःखाल्पत्वपारतन्त्र्योत्पत्तिनाशादिसर्वदोषविवर्जितं ब्रह्मैवाशब्दार्थः । पूर्णं हि ब्रह्मशब्दस्यार्थः । न च दोषयुक्तस्य पूर्णता । न च जीवजडाद्यपूर्णवस्त्वभिन्नस्य पूर्णत्वं भवति । तस्मादकारशब्दार्थ एव ब्रह्मशब्दार्थः । तदेतदुक्तम् अः इति ब्रह्मेति । अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम् ।

विवृतावपि सर्गः स्यात्संहितायां च यत्र हि ।
समानोत्तमहीनत्वमुच्यते वस्तुनोऽञ्जसा । –इति शब्दनिर्णये ।

अः इति ब्रह्म पूर्णं वस्तूच्यते । तत्रागतमहमिति । तत्राकारस्य पूर्णवाचित्वेऽहमेव सोऽकारवाच्य इत्याह महिदासरूपो भगवान्नारायणः । अहमेक एव परिपूर्णः । अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति । मुक्तेभ्यः प्रलये लीनेभ्यश्च सर्ववस्तुभ्यः सदा विभिन्न एव भगवानिति दर्शयितुं च अः इति पृथग्वचनम् । तच्चोक्तं वाक्यनिर्णये–

मुक्ता अपि न विष्णुत्वं यान्ति तत्समतामपि ।
आधिक्यं कुत एव स्यान्मुक्तानां मुक्तिदातृतः ।।
कुत एव प्रलीनानां प्रलये तु तदात्मता ।
ब्रह्मशर्वेन्द्रपूर्वाणां मुक्तावपि न विष्णुता ।।
यदा तदा तु संसारे क्व तद्रूपत्वमिष्यते ।
अन्योऽसौ सर्वतो विष्णुः स्वातन्त्र्याद्गुणपूर्तितः ।।
सर्ववस्तुस्वभावस्य विरुद्धोरुस्वभावकः ।
पारतन्त्र्याल्पताज्ञानजनिनाशादिवर्जितः ।।
अकारेण ततो विष्णुः संहितायां पदात्मना ।
बह्वृचोपनिषत्प्रोक्तस्तेनैव परमात्मना ।।
महिदासावतारेण सोऽहमेवंविधस्त्विति ।
मत्तोऽन्यो न हि पूर्णोऽस्ति यतोऽकारश्च पूर्णताम् ।।
वक्ति तस्मादकारोऽयं मामेव वदति स्फुटम् ।
नाभाववाच्यकारः स्यादर्थत्रययुतो यतः ।।
एकार्थात्मा ह्यभावः स्यान्निषेधैकस्वरूपतः ।
अन्यता च निषेधश्च विरुद्धत्वमिति त्रयः ।।
अकारार्था ह्यभावस्तु निषेधैकस्वरूपतः ।
एकदेशस्वरूपत्वान्नाकारेणैव भण्यते ।
किंत्वभाव इति त्वेव तेनाकारोदितो हरिः ।। इति ।

न च निषेधस्वरूपे विरुद्धता चान्यता चास्तीत्येतावता पूर्णार्थता भवति । तदाऽर्थत्रयकल्पनस्य वैयर्थ्यात् । उक्तं हि शब्दनिर्णये–

विरुद्धता निषेधान्यभावयुक्ते हि केवलः ।
अकारो वर्तते तेषामेकार्थात्मन्यभावके ॥
वर्ततेऽभाव इत्येव न त्व इत्येव केवलः ॥ इति ।
तस्मान्नारायण एवाकारवाच्य इति सिद्धम् ।
यतोऽकारः सदा विष्णोर्वाचकत्वेन संस्थितः ।
तस्माद्वर्णत्रयात्माऽयं प्रणवोऽपि त्रयात्मकम् ॥
हरिमेव सदा वक्ति नवाऽन्यं कञ्चन क्वचित् ।
सृष्टिकर्ता[१] ब्रह्मनामा योऽसृजच्चतुराननम् ॥
अन्तर्यामी विरिञ्चस्य सोऽकारार्थो जनार्दनः ।
वैकुण्ठलोक आस्ते स द्वितीयवपुषा हरिः ॥
उकारवाच्यः स विभुर्नृसिंहो रुद्रनामकः ।
रौद्रत्वात्स शिवस्यापि स्रष्टा संहारकारकः ॥
अन्तर्यामी शिवस्यापि मकारार्थः प्रकीर्तितः ।
एवं त्रियात्मकं विष्णुं प्रणवोऽयं त्रियात्मकः ॥
एवं पृथगिवाचष्टे बिन्दुर्वक्त्यनिरुद्धकम् ।
प्रद्युम्नाद्यान्नादपूर्वाः सर्वान्नारायणात्मकान् ॥
पद्मनाभादिका एव मूर्तीर्नारायणोत्तराः ।
प्रणवोऽयं वदत्यष्टौ तस्मान्नान्याभिधायकः ॥ इति तत्त्वसारे ।
षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु
स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु ॥
सूर्यरूपेषु रूपाणि पुमाकाराणि सर्वशः ।
एतैः पुरुषगै रूपैर्बृहत्युक्थव्यवस्थितैः ॥
कदाचिद्भगवान्विष्णुः पुमाकाराणि तानि च ।
कृत्वा सूर्यगतान्येव स्त्रीरूपाणि विधाय च ॥

१. स्वस्तनौ चैव विरिञ्च आसीत्तमस्तनौ शर्व इति त्रयोऽस्मात्- म.भा.ता.नि.३/२१.

तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च ।
स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः ॥
पुंरूपप्रमदारूपस्वरूपैः रमते स्वयम् ।
एकीकृत्य च तान्येव द्विरूपो रमते तथा ॥
स एव रमते मायां स्थितात्मस्त्रीतनौ हरिः ।
प्राणस्योत्पत्तिकामः सन्ननेच्छामारनामकः॥ इत्यर्धनारीनारायणतन्त्रे ।

वायोरुत्पत्तिकामो मायां रमायां रमत इत्यनकाममारः । जीवस्थितेनाक्षरगेनाक्षरनाम्ना स्वरूपेण जीवाख्यसूर्यस्थितमहराख्यं स्वरूपमाप्नोति तेन चाक्षराख्यं स्वरूपमाप्नोति । यदक्षरादक्षरमेति युक्तमित्यस्य व्याख्यानरूपत्वाच्चैतदवसीयते । पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं रूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वाच्च स्त्रीत्वं पुंस्त्वं च प्रतीयते विष्णोः । न च नपुंसकरूपं भगवतः कुत्रचिदुक्तम् । प्रसिद्धमेव च रूपद्वयम् । अतो नपुंसके वदन्नपि न वदतीति न तद्वदनुषज्यते । नपुंसकरूपे प्रमाणाभावादेव । लौकिकस्त्रीपुंविलक्षणत्वादस्त्री[१] पुमानित्यपि वदन्निति भवति ।

स्त्रीपुंरूपद्वयं विष्णोर्न तृतीयं कथञ्चन ।
साक्षान्नपुंसकस्तस्मान्मुक्तिभागी न तु क्वचित् ॥ इति ब्रह्माण्डे ।

न च रक्ष इति नपुंसकशब्दमात्रेण रावणादयो नपुंसका भवन्ति । भवतीतिपदाभावादनकाममार इति भगवन्नामैवेति ज्ञायते ।

ऋष ज्ञान इति ह्यस्माद्धातोः सर्वज्ञ एकराट् ।
वेदद्रष्टा परमऋषिर्हयास्यः पुरुषोत्तमः ॥
मन्त्राणां प्रथमो द्रष्टा सर्वेषां यत एव तु ।
ऋषिणोक्तमिति प्राहुर्मन्त्रोक्तं ब्राह्मणान्यतः ॥
तत्प्रसादाद्धि तपसा पश्चान्मन्त्रान्प्रपेदिरे ।
ब्रह्माद्या ब्राह्मणं पश्चात्तैर्दृष्टमृषिभिः पृथक् ॥

---

१. स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः । इति ऋग्भाष्ये (१/१५२) घोषाः - पुरुषाभिलाषादयः इति तट्टीका ॥

मन्त्राश्चोपनिषच्चैव नाकृत्वा सुमहत्तपः ।
प्रथमं तद्धयास्येन दृष्टं केनचिदीक्ष्यते ॥
विना पृथक्तपो दृश्येद्‌ब्राह्मणं मुनिभिर्यतः ।
मन्त्राश्चोपनिषच्चैव ब्राह्मणादुत्तमास्ततः ॥
तत्राप्युपनिषत् श्रेष्ठा युक्तावस्थाऽधिगम्यतः ॥ –इत्यादि प्रमाणविवेके ।

तेन रथेनाध्यात्मशरीराख्येनाधिदैवं रथरूपेण । ऋभव इत्यत्र देवानां साधारणं नाम ।

आदित्या वसवो रुद्रः विश्वे ऋभव इत्यपि ।
सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि ॥ इति शब्दनिर्णये ।
निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।
अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनामकः ॥
सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् ।
देहाख्यस्य रथस्यैव तदा नारायणात्प्रभोः ॥
विविधं वासवत्वात्तु विवस्वन्नामकाच्छुभम् ।
संसारवारकं ज्ञानं दिवो दुहितृनामकम् ॥
विष्णुतत्त्वापरोक्षाख्यमहनी द्वे च शोभने ।
ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाह्नी परे ॥
जायन्ते देवतास्त्वेषां भारती वायुरेव च ।
जीवन्मुक्तेश्च मुक्तेश्च दाता रूपद्वयी प्रभुः ॥
सर्वस्त्रीणामुत्तमत्वाद् द्यौर्नामा श्रीरुदाहृता ।
दुहिताऽस्या भारती तु नित्याहेयस्वरूपतः ॥
अहरित्युच्यते वायुर्ज्ञानात्मत्वात्तथैव च ।
अधिदैवे रथेऽप्येते विष्णोर्लक्ष्म्यां प्रजज्ञिरे ॥
रथेन तेन देवेशौ विष्णुवायू जगत्पती ।
आयातमिति हैवैतौ प्रार्थयेद्यज्ञकर्मणि ॥

अन्यथाऽप्यर्थयेदेतौ ज्ञानेच्छुः पुरुषः सदा ।
जपेन्मन्त्रद्वयं नित्यमातेन निमिषस्तथा ॥
रक्षणं वां समीपे स्यान्ममेत्यध्यात्ममेव च ।
हयास्यत्वाच्चाश्विनौ तावित्याह परमा श्रुतिः ॥
ऐन्द्राग्नेयादिकाश्चैवं सर्वे मन्त्रा हरिं परम् ।
वदन्ति मुख्यतो नान्यं सर्वनामानमच्युतम् ॥
अथवा वायुदेवस्थं पृथक्संस्थं च केशवम् ।
मन्त्रो द्विवचनो वक्ति तथा बहुवचस्स्वपि ॥

– इत्याद्यैतरेयसंहितायाम् ।

सुखं ददत इति सुदिने । विवस्वतो विष्णोः सकाशाद्दिवो दुहिता अहनी च जायन्ते । अहनी इति द्विवचनेन द्वित्वे सिद्धेऽप्युभे इति वचनमध्यात्माधिदैवतयोरुभयोरपि वचनार्थम् । न च सूर्यरथोऽत्र वर्ण्यते । न चाहोरात्रे अहनी इत्युच्येते । सूर्यस्याश्विनामाभावात् सप्ताश्वत्वाच्च तद्रथस्य । चतुरश्वत्वं चात्रोच्यते । श्रोत्रे पक्षसी चक्षुषीयुक्ते इत्यध्यात्मसम्बन्धाच्च । न च रात्रौ सुदिनमितिप्रयोगो दृष्टः । असुदिनस्यापि तत एव जातत्वव्द्यर्थविशेषणता च । अस्मिन्पक्षे तु लौकिकाहर्व्यावृत्त्यर्थं सुदिने इति युज्यते । जीवन्मुक्तिश्च मुक्तिश्च हि मुख्ये सुदिने । 'स य आत्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' इति ज्ञानावस्थायां मुक्तौ भोगबाहुल्यकारणत्वात्साऽपि मुक्तिवत्सुदिनम् । न हि मुक्तावाधिक्यार्जनमस्ति । 'न हीयते यत्र गत्वा यत्र गत्वा न वर्धत' इति वचनात् । अतो ज्ञानोत्पत्तिसमनन्तरमेव मुक्तौ न पुनरार्जनमस्तीति किञ्चित्कालं ज्ञानित्वेनावस्थानमपि सुदिनमेव । ज्ञानात्पूर्वं तु पतनसंशयादेव न सुदिनम् । न चाश्विरथो वर्ण्यते । न ह्यश्विरथयोगादहनी जायेते । एकरासभयुक्तो हि तद्रथः । 'तद्रासभो नासत्या सहस्रमि'ति वचनात् । न च विवस्वच्छब्दोऽश्विनोर्विद्यते । 'यो देवानां नामधा एक एवे'ति

विष्णोः सर्वनामानि प्रसिद्धानि च । 'युजो युक्ता अभियत्संवहन्ती'-त्यादिना तस्यैव प्रस्तावाच्च । अतो विष्णुरेव मुख्यतः सर्वनामोक्त इति सिद्धम् ॥ ८ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके तृतीयोऽध्यायः ॥ २ ॥ ३ ॥

टी— तत्रैते श्लोका इत्येतत्खण्डं व्याचष्टे । यन्नारायणादीत्यादिना । एकं भवन्तीत्येकस्मिन् मिलिता भवन्तीति व्याख्यातम् । स्वरूपैक्यमेव तस्यार्थः किं न स्यादित्यत आह । नायमिति । स्थानैक्यमत्यैक्यविवक्षया प्रयोगं दर्शयति । एकीभूयेति । स्वरूपैक्ये एकीभावशब्दस्य प्रयोगो नास्तीत्याह । न चेति । न न्वर्जुनस्य इन्द्रात् पृथक् जातस्यापि पश्चात् तेन इन्द्रेण एकीबभूवार्जुनः इति प्रयोगो विद्यते । तत्कथं स्वरूपैक्ये एकीभावव्यवहारो नास्तीत्युच्यत इत्यत आह । एक इति । तत्र स्थानैक्यमेव एकीभावशब्दार्थ इति भावः । स्वरूपैक्यस्य पूर्वमेव सिद्धत्वात् सिद्धस्य पुनर्विधानायोगादिति भावः । ऐक्यस्य पूर्वमेव सिद्धत्वेऽपि पूर्वमज्ञातस्य पश्चात् ज्ञाने सति तद्विवक्षया एकीभवतीति व्यवहारः किं न स्यादित्यत आह । न चेति । उपसंहरति । तस्मादिति । पूर्वमभिन्नस्य पश्चादैक्यविधानमयुक्तं चेत् मा भूत् तर्हि पूर्वं भिन्ना एव मुक्तावेकीभवन्तीति व्यवहारो अस्त्वित्यत आह । न हीति । ननु यदक्षरं पञ्चविधं समेति । यन्नारायणादिरूपेण पञ्चविधमक्षरं परं ब्रह्म तत्समेति स्वस्मिन्नेव स्त्रीपुंरूपेण संयुक्तं भवति । युजो युक्ता अभियत्संवहन्ति । स्त्रीरूपेण युजो मिलिता । देवा युक्ता अश्वरूपेण रथे युक्ताः सन्तो यन्नारायणाख्यं परम्ब्रह्माभिसम्भवन्ति । सत्यस्य सत्यम् । तदेव ब्रह्म सत्यस्य वायोरपि सत्यं सत्यताप्रदम् । नारायणाख्यं ब्रह्म यत्र अनुयुज्यते यस्मिन् स्वरूप एव स्त्रीपुंरूपेणानुयुज्यते तत्र तस्मिन्नेव परब्रह्मणि नारायणाख्ये सर्वे देवा ऐकीभवन्ति । मुक्तास्सन्तो मिलिता भवन्तीत्यस्य श्लोकस्यार्थः । तथा च यदक्षरं पञ्चविधं समेतीत्यनेन सत्यस्य सत्यमनु यत्र युज्यते इत्यस्य वाक्यस्यैकार्थत्वात् पुनरुक्तता स्यादित्यत आह । यदक्षरमिति । यदक्षरं पञ्चविधं समेतीत्युक्तार्थ एव । सर्व एकीभवन्तीति ऐक्यं वक्तुं सत्यस्य सत्यमनु

यत्र युज्यत इति अनूद्यत एव । न तु विधीयते । अतो न पुनरुक्तिः । यदक्षरादक्षरमेति युक्तमित्येतव्द्याचष्टे । यस्मादिति । यदक्षरादिति द्वितीयश्लोके युजो युक्त इत्यादि पूर्वश्लोकोक्तेन पुनरुक्तमित्यत आह । तात्पर्यार्थमिति । तस्यैव पूर्वश्लोकोक्तस्यैव । तद्वियूय कवयोऽन्वविन्दन्नामायत्त समतृप्यंच्छ्रुतेऽधि इत्येतव्द्याचष्टे । वियूयेति । यस्मिन्नामा समतृप्यंच्छ्रुतेऽधीत्येतव्द्याचष्टे । यस्मिन्निति । तत्र हरौ । नामायत्ता समतृप्यन् श्रुतेऽधीत्यनयोः पुनरुक्तता स्यादित्यत आह । अवधारणार्थमिति । क्रूरोल्बणिष्णुशब्दयोः अर्थभेदमाह । अर्थत इति । नैनमस्त्री पुमान्ब्रुवन् इत्येतदनूद्य व्याचष्टे । अस्त्रीति । स्वातन्त्र्ये विभक्तिव्यत्यय इत्युक्तमेव विवृणोति । स्वतन्त्रो हीति । यः अस्त्री पुमानित्युच्यते सः भगवान् स्वतन्त्रः वदन्नस्वतन्त्र इति भावः । वदन्वदतीत्यनूद्य व्याचष्टे । वदन्निति । भगवान् स्त्रीरूपश्च भवति । पुंरूपश्च भवतीति वदन् वदत्येव । तथा पुमान् स्त्री चेति वदन् न वदति च । तदुभयं क्रमेणोपपादयति । भवत्येवेति । उक्तार्थे प्रमाणमाह । स्त्रीरूप इति । वैलक्षण्यात् लौकिकस्त्रीपुरुषवैलक्षण्यात् । अरागाकृष्टत्वात् । नपुंसकस्य यथा स्त्रीपुरुषरागेणाकृष्टत्वाभावः तथा परमात्मनोऽपि स्त्रीपुरुषविषयरागेण अनाकृष्टत्वात् । तच्छब्दैर्नपुंसकलिङ्गशब्दैरपि कथ्यते । यदक्षरं पञ्चविधं समेतीत्येतत् प्रमाणेन व्याचष्टे । नारायणेति । अधिदैवे भार्यासमन्विता देवाः यत्स्यन्दनं यस्य स्यन्दनं वहन्ति । अध्यात्मे जीवदेहात्मकं रथं वहन्ति । देवा अध्यात्मं जीवदेहाख्यभगवद्रथं वहन्तीत्युक्तं विविच्य दर्शयति । स सूर्य इति । अधिदैवं स्यन्दने युक्तः । एवं सोम इत्यत्रापि । तयोरध्यात्माधिदैवरथयोः तस्य वाग्बुद्धिः इत्येतद्विवृणोति । उद्धारणार्थमिति । एतेषामुद्धारणार्थम् उमा वाचि समास्थिता । वैष्णवे रथे नागाकारैव रश्मित्वमगमत् अश्वरूपसूर्याद्युद्धारणार्थं तदयं प्राणो अधितिष्ठतीत्येतव्द्याचष्टे । विष्णुरिति । सत्यस्य सत्यमनु यत्र युज्यते इत्यत्र सत्यमित्यस्यार्थमाह । तस्येति । श्रुत्यर्थे प्रमाणमाह । सर्वेति । एतस्मात्सत्यस्य सत्यतादातृत्वात् । यस्मिन् स्थाने तस्य अर्धनारीपुमाकारस्य विष्णोः सर्वाणि स्त्रीरूपाणि वामस्थितानि । अस्य अर्धनारीनरात्मकस्य तानि वामदक्षभागस्थितस्त्रीपुंरूपाणि । अर्धनारीपुमात्मकः । नारायणो देव एषः ।

एवं विधः । स्त्रीपुमात्मपृथक्कृतः स्त्रीपुमात्मनोः पृथग्भावानन्तरं बहुधा च भवति । भागस्त्रीपुंस्वरूपिणः अर्धनारीनरात्मकाः । तद्वियूयेत्यत्र तच्छब्देन यद्वाचः ॐमित्यादिकमेव न परामृश्यते किन्तु तर्हि पूर्वोक्तमितादिपञ्चकमपि परामृश्यते इति भावेन स्मृत्या व्याचष्टे । मितादीति ।

तत्र देवाः सर्वयुजो भवन्तीत्यस्यार्थः । मनोवागिति । तस्मात् एतज्ज्ञानपरिपाकात् देवाः सर्वयुजो भवन्तीत्यनेन एतज्ज्ञाने देवानामेवाधिकार इति सूचितम् । तदुपपादयति । सर्वशब्दानिति । अः इति ब्रह्मेति वाक्यमवतारयति । एवमिति । अः इति ब्रह्मेत्यत्र इतिशब्दकृत्यमाह । इतीति । यत्राभिधानान्ते इतिशब्दः स्यात् तन्नाम वैशेषिकम् इतरनामभ्यो विशिष्टं नाम स्यात् । अः इति ब्रह्मेत्यत्र अकारस्य विशेषनामत्वमुक्तम् । तत्कथमित्यतः तत्रागतमहमित्येतदनूद्याकारार्थकथनपूर्वकम् अकारवाच्यत्वं हरेरुपपादयति । तत्रागतमित्यादिना । प्रस्तुतरूपत्वात् प्रस्तुतप्रायत्वात् । तद्विरोधी तद्विरुद्धधर्मवान् । प्रकारान्तरेण जगतः प्रस्तुतत्वमाह । मनसीति । दृष्टसम्बन्धित्वात् ऐन्द्रियकार्थसम्बन्धित्वात् । अदृष्टमतीन्द्रियमपि प्रस्तुतं भवति । दृष्टप्रपञ्चसम्बन्धेन अदृष्टस्य प्रस्तुतत्वे अदृष्टस्य हरेरपि प्रस्तुतत्वं स्यात् । तथा च तस्य स्वस्मादन्यत्वमप्यकारार्थः स्यादित्यत आह । भगवानिति । अः इत्यनेन पृथक्प्रस्तुतदृष्टादृष्टप्रपञ्चवैलक्षण्येन विवक्षितत्वात् । भगवान् न प्रस्तुतसमुदायान्तर्गतः । शून्यमेव अकारवाच्यमिति केचित् व्याचक्षते । तन्निराकरोति । न चेति । अशब्दार्थता अकारवाच्यता । तत्र हेतुमाह । शून्येति । तस्मादेकदेशार्थत्वात् । अन्ययुक्तेन पदान्तरयुक्तेन तच्छून्यमुच्यते । कथमभाव इति । अन्ययुक्तेनैवेत्यवधारणव्यावर्त्यमाह । न त्विति । विष्णोरकारमुख्यार्थत्वं निगमयति । तस्मादिति । ब्रह्मैव ब्रह्मशब्दार्थ एव अशब्दार्थः अकारशब्दार्थः । ब्रह्मशब्दार्थमाह । पूर्णमिति । अनेन कथमकारब्रह्मशब्दयोरेकार्थत्वमित्यतो दोषवर्जितत्वाद्यपि ब्रह्मशब्दार्थ इत्युपपादयति । नेति । अपूर्णवस्त्वभिन्नस्य पूर्णत्वायोगादन्यत्वमपि ब्रह्मशब्दार्थ एव । स्वोक्तार्थम् उपनिषदारूढं करोति । तदेतदिति । अः इति सविसर्गकथनस्याभिप्रायमाह । अः इतीति । पृथक्त्वेन विसर्गत्वेन । उक्तार्थे प्रमाणमाह ।

विवृताविति। यत्र वाक्ये संहितायां सन्धिकार्यप्राप्तौ सत्यामपि विवृतौ संहितां विना कथने सर्गः विसर्गः स्यात् तत्र वाक्ये वस्तुनः तत्प्रतिपाद्यवस्तुनः। अः इति ब्रह्म तत्रागतमहमित्येतद्योजयति। अः इति। तदुपपादयति। अहमेक एवेति। अः इति पृथग्वचनस्य प्रयोजनान्तरमाह। मुक्तेभ्य इति। पृथग्वचनं सविसर्गवचनं मुक्तिदातृतः मुक्तिदातुः सकाशात्। संहितायां संहिताप्राप्तावपि पदात्मना सविसर्गेणेत्यर्थः। अकारस्य शून्यार्थत्वं नेत्युक्तम्। तदुपपादकमेतत्। नाभाववाच्यकारः स्यादित्यादि। अभावस्याकारैकदेशार्थत्वं वक्तुम् अकारार्थमाह। अन्यता चेति। अकारस्याभावार्थत्वेऽपि पूर्णार्थत्वं स्यादेव। भावान्यत्वभावविरुद्धत्वयोरपि अभावे सत्वादित्यत आह। न चेति। निषेधस्वरूपे अभावे तदा तस्मिन् पक्षे विरुद्धता निषेधान्यभावयुक्ते विरुद्धत्वयुक्ते निषेधयुक्ते अन्यभावयुक्ते अन्यत्प्रयुक्ते वस्तुनि। केवलो अकारो वर्तते। तेषां त्रयाणामर्थानां मध्ये एकार्थात्मनि निषेधाख्ये कार्यरूपे यद्वाचमित्येतद्व्याचष्टे। यतोऽकार इति। प्रणवगताकारादिवाच्यमाह। सृष्टीत्यादिना। स वैकुण्ठगतो विष्णुरकारवाच्यः। रुद्रान्तर्यामी नृसिंहो मकारार्थः प्रकीर्तितः। नादपूर्वा नादघोषशान्तातिशान्ताः। प्रद्युम्नाद्यान् प्रद्युम्नसङ्कर्षणवासुदेवनारायणान्। बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्तीत्यादि व्याचष्टे। षट्त्रिंशतीति। हरेः बृहत्युक्थार्णगानि षट्त्रिंशतिसहस्राणि स्त्रीरूपाणि सन्ति। अह्नाम् अभिमानिषु सूर्यरूपेषु तावन्ति पुमाकाराणि रूपाणि सन्ति। बृहत्युक्थव्यवस्थितैः पुरुषगैः एतैः षट्त्रिंशत्सहस्रस्त्रीरूपैः सूर्यगतानि तानि पुमाकाराणि आप्नोति। भगवान् कदाचित् सूर्यगतानि स्त्रीरूपाणि विधाय तानि पुरुषगतानि पुमाकाराणि कृत्वाऽऽप्नोति। परस्परमिति शेषः। कदाचित् तैरेव सूर्यगतैरेव पुंरूपैः अक्षराणि स्त्रीरूपाणि आत्मेच्छया प्राप्नोति। तानि सूर्यगतान्येकीकृत्य तानि पुरुषगतानि चैकीकृत्य एवं द्विरूपे रमते। अनेन जीवाक्षरेणैव जीवाहराप्नोति। जीवाह्ना जीवाक्षरमित्येतत् उक्तार्थं भवति। अनकाममार इत्येतद्व्याचष्टे। स एवेति। मायां रमायाम्। प्राणस्योत्पत्तिकामः सन् रमायां रमते। अतः अनेच्छामारनामकः। अनकाममार इत्येतत् स्ववाक्येन स्पष्टं व्याचष्टे। वायोरिति। जीवाक्षरेणैव

जीवाहराप्नोतीत्यादि विवृणोति । जीवेति । अक्षरगेन बृहतीसहस्राक्षरगतेन जीवाक्षरेणैव जीवाहराप्नोति । ते तत् जीवगताक्षरैः स्त्रीरूपैः सूर्यगतपुंरूपाण्याप्नोतीति प्रमाणबलेन व्याख्यातम् । प्रकृतपर्यालोच-नयाऽप्यस्यायमेवार्थः इत्याह । यदक्षरादिति .। विष्णोरुभयात्मकरूपत्वं युक्त्याऽपि सिद्धमित्याह । पुमांसमिति ।

भगवतः स्त्रीपुंरूपे एव न नपुंसकरूपमित्याह । नचेति । तद्वत् स्त्रियं ब्रुवन् वदतीत्यादिवत् नपुंसके नपुंसकरूपविषये भगवतः स्त्रीपुंरूपसद्भावात् । अस्त्रीपुमानिति ब्रुवन् वदतीत्युक्त्वा पुनरस्त्रीपुमानिति वदन् वदतीति कथं युज्यते विरोधादित्यत आह । लौकिकेति । भगवतो रूपद्वयमेव न नपुंसकरूपमित्यत्र प्रमाणमाह । स्त्रीति । न तृतीयं रूपं विष्णोः तस्मान्नपुंसकरूपाभावात् साक्षान्नपुंसकः निरुपाधिकनपुंसकः । नपुंसकरूपाभावे कथं नपुंसकशब्दवाच्यत्वमित्यत आह । न चेति । अनेच्छामारनामक इत्यनेन अनकाममार इति भगवतो नामेति व्याख्यातम् । तत्र ज्ञापकयुक्तिमाह । भवतीति । तदुक्तम् ऋषिणेत्यस्यार्थमाह । "ऋषज्ञान इति" सर्वेषां मन्त्राणां प्रथमो द्रष्टा यतः अतः ब्राह्मणानि मन्त्रोक्तम् ऋषिणोक्तमित्याहुः । ब्रह्माद्यास्ततः पश्चात् तपसा तत्प्रसादात् मन्त्रान्प्रपेदिरे । पश्चात् ब्राह्मणम् । तैर्दृष्टं ब्रह्मादिभिः दृष्टम् । मन्त्राः उपनिषच्च ऋषिभिः पृथगेकैकदेशतो दृष्टाः । प्रथमं हयास्येन दृष्टं तन्मन्त्रादिकं सुमहत्तपः अकृत्वा केनचिन्नेक्ष्यते । मुनिभिः ब्राह्मणं पृथक् तपो विना दृश्येत् । यतः येन तपसा मन्त्रोपनिषदो मुनिभिर्दृश्यन्ते । तेनैव तपसा ब्राह्मणं दृश्यते । न तदर्थं पृथक्तप अपेक्ष्यते । यत् ततो मन्त्राश्चोपनिषच्च ब्राह्मणादुत्तमाः । तत्रापि मन्त्रोपनिषदोर्मध्येऽपि उपनिषच्छ्रेष्ठा कुतः। युक्तावस्थाधिगम्यतः। ध्यानावस्थायामेवाधिगम्यत्वात् । आ तेन यातमिति मन्त्रं व्याचष्टे । तेनेति । अध्यात्मं शरीराख्येन अधिदैवं रथरूपेणेत्युक्तार्थे प्रमाणमाह । निर्मित इति । तस्य देहाख्यस्य मनोवाक्कर्मभिः सह यदा सम्यग्योगो भवेत् । सम्यग्योगो नाम मनोवाक्कायकर्मणां भगवति समर्पणम् । तच्च सम्यक् तदधीनत्वज्ञानमेव । वासो निवासो अस्यास्तीति वासवान् । तस्मात् तदा विष्णुतत्वापरोक्षाख्यं दिवो दुहितृनामकं

ज्ञानं द्वे अहनी च जायन्ते । जीवन्मुक्तेश्च मुक्तेश्च दाता । रूपद्वयीति वायोर्द्विरूपत्वोक्त्या देवतास्त्वेषां भारती वायुरेव चेति बहुवचनं चोपपद्यते । द्युशब्दार्थमाह । सर्वेति । आतेन निमिषस्तथा आतेन यातमिति मन्त्रम् । तथा निमिषश्चिज्जवीयसेति च मन्त्रं जपन् अर्थयेत् । अन्तिषद्भूतु वामव इत्येतद्व्याचष्टे । रक्षणमिति । यथा अश्विविषयतया प्रतीयमानयोरनयोर्मन्त्रयोर्यथा भगवद्विषयत्वं व्याख्यातम् । एवम् इन्द्रादिविषयतया प्रतीयमाना मन्त्रा अपि भगवद्विषया एवेत्याह । ऐन्द्रेति । प्रकारान्तरेण अश्विनावायातमिति द्विवचनविषयं दर्शयति । अथवेति । बहुवचस्सु बहुवचनयुक्तेषु । उभेऽहनीत्यादि विवृणोति । सुखमिति । उभे उभयविधे इत्यभिप्रायः । अपव्याख्यानं निराकरोति । न चेति । तज्ज्ञापकाभावात् । ननु अहनी जायेत इति अहर्नियमनमत्रोच्यते तदेव ज्ञापकमिति चेन्न । सर्वाहर्जनकेऽहर्द्वयजनकत्वकथनस्य प्रयोजनाभावात् । नात्राहनी इत्यहर्द्वयमात्रमुच्यते । किन्तु अहोरात्रविवक्षयाऽहनीति द्विवचनोपपत्तिरित्यत आह । न चेति । अहश्च रात्रिश्च अहोरात्रे । बाधकान्तरमाह । सूर्यस्येति । सूर्यरथस्य समासत्वात् अस्य च श्रोत्रे पक्षसी चक्षुषी युक्ते इति चतुरश्वत्वस्याध्यात्मसम्बन्धित्वस्य चोच्यमानत्वात् । न सूर्यरथोऽत्र वर्ण्यते इति भावः । अहश्शब्देन अहोरात्रविवक्षायां सुदिन इति रात्रिविशेषणं च स्यात् । तच्चायुक्तमित्याह । न चेति । नास्मत्पक्षे विशेषणवैय्यर्थ्यमित्याह । अस्मिन् पक्ष इति । अस्मिन् पक्ष इत्युक्तं पक्षं निर्दिशन्नेव सुदिनत्वमुपपादयति । जीवन्मुक्तिश्चेति । अस्तु मुक्त्यवस्थायाः सुदिनत्वम् । जीवन्मुक्त्यवस्थायास्तु कथं सुदिनत्वमित्यत आह । स य इति । मुक्तावपि भोगसाधनानुष्ठानसम्भवात् । किं जीवन्मुक्त्यवस्थयेत्यत आह । न हीति । अतः मुक्तावधिक्यार्जनाभावात् ज्ञानोत्पत्तिसमनन्तरमेव मुक्तौ सत्याम् । यदि मुक्तौ भोगसाधनार्जवत्वात् जीवन्मुक्त्यवस्थायाः सुदिनत्वं तर्हि ज्ञानात्पूर्वावस्थाया अपि मुक्तिसाधनानुष्ठानहेतुत्वात् सुदिनत्वं स्यादित्यत आह । ज्ञानादिति । उक्तानुपपत्तिबलात् सूर्यरथाङ्गीकारो न युक्तश्चेत् मा भूत् । अश्विरथोऽत्र वर्ण्यत इति किं न स्यादित्यत आह । न चेति । तत्र हेतुमाह । नहीति । बाधकान्तरं चाह ।

न चेति । यथाश्विनोर्विस्ववच्छब्दो न युज्यते तथा विष्णोरपीत्यत आह । यो देवानामिति । युजो युक्ता इत्यत्र विष्णुरथं प्रस्तुत्य तत्रैवास्य मन्त्रद्वयस्य प्रमाणतयोदाहृतत्वात् अत्र विष्णुरथ एव उच्यते । विवस्वदादिशब्दवाच्यश्च स एवेति ज्ञायत इत्याह । युजो युक्ता इति । उक्तार्थमुपसंहरति । अत इति ।

तत्र उक्तार्थे एते श्लोकाः प्रमाणतया उदाह्रियन्त इति शेषः । पञ्चविधं नारायणादिरूपैः पञ्चविधम् अक्षरम् अक्षरशब्दवाच्यं यत्परंब्रह्म तत्समेति । स्वस्मिन्नेव स्त्रीपुंरूपेण संयुक्तं भवति । युजः स्त्रीपुंरूपेण संयुक्ता देवाः युक्ताः अश्वरूपेण रथे नियुक्ताः सन्तो यन्नारायणाख्यं परं ब्रह्माभिसंवहन्ति । तदेव सत्यस्य सत्यं सत्यस्य वायोः सत्यताप्रदम् । नारायणाख्यं ब्रह्म यत्रानुयुज्यते । यस्मिन् स्वपुंरूप एव स्त्रीपुंरूपेण युज्यते । तत्र तस्मिन्नेव परे ब्रह्मणि नारायणाख्ये सर्वे देवा एकं भवन्ति । मुक्ताः सन्तो मिलिता भवन्तीत्यर्थः । यदक्षरात् नारायणाख्यात् । अक्षरं प्रादुर्भावरूपी स नारायण एव युक्तं स्त्रीपुंरूपेण युक्त एवेति । आयाति युजो युक्ता अभि संवहन्ति । सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्तीति तात्पर्यार्थे पुनरुक्तिः । यद्वाचः वाचः अकारस्य यदोमिति यः ॐकाराख्यो विकारः यच्च नेति यच्चास्याः वाचः क्रूरं अर्थतः कठिणं यदु च यच्च उल्बणिष्णु श्रवणाप्रियम् । कवयः तत्सर्वं वियूय विचार्य नामायत्ता नामायत्तानि ॐकारादिनामार्थभूतानि भगवन्माहात्म्यादीनि अन्वविदन् ज्ञातवंतः । श्रुतेन तस्मिन् ज्ञाने परिपक्के सति अधि अधिकं समतृप्यन् । यस्मिन् विष्णौ नामा नामानि ज्ञात्वा तस्मिन् ज्ञाने श्रुते परिपक्के सति यस्मिन् विष्णौ अधि समतृप्यन् । तत्र विष्णौ देवाः सर्वयुजो भवन्ति । मनोवाक्कायकर्मभिः तत्रैव युक्ता भवंति । विद्वानेवं जानन् तेन ब्रह्मणा तदनुग्रहेण पाप्मानपहत्य निरस्य स्वर्गलोकं विष्णुलोकं अत्येति प्राप्नोति । एनं स्त्रीपुंरूपिणं विष्णुं वाचा स्त्रियं ब्रुवन् स्त्रियमेव ब्रुवन् न वदति । एतं अस्त्रीपुमान् अस्त्रीपुमांसं स्त्रीरूपः पुंरूपश्च न भवतीति ब्रुवन् न वदति । विष्णोः स्त्रीपुंरूपयोः सद्भावादिति भावः । एनं पुमासं ब्रुवन् न वदति । पुमानेवेति ब्रुवंश्च न वदति । कश्चन वदन् स्त्रीपुंरूपवानिति वदन् वदति । स च वदत्येव । भवत्येव हि भगवान् स्त्रीरूपः पुंरूपश्चेति भावः । वदन्नेव कश्चन

वदति । भगवान् स्त्रीरूपः पुंरूपश्चेति वदन्नपि अप्रसिद्धत्वान्न वदति । अः इति ब्रह्म अः इत्यकारेणोच्यमानं ब्रह्म परिपूर्णं वस्तु नारायणाख्यम् । तत्र अकारस्य पूर्णवाचित्वे सिद्धेऽहं पूर्णोऽहमेव पूर्ण अहमेवागतम् अकारवाच्यत्वेन स्थित इति । इत्याह महिदासरूपी भगवान् नारायणः ।

तद्वा इदं बृहतीसहस्रं संपन्नम् । संपन्नस्यैतस्य बृहतीसहस्रस्य पुरुषगतस्य अक्षराणां षट्त्रिंशत्सहस्राणि भवन्ति । अक्षरगतानि तावन्ति स्त्रीरूपाणि संति । पुरुषायुषः शतसंवत्सरस्य अह्नां सहस्राणि शतसंवत्सरस्य अहर्नियामक सूर्यगतभगवत्पुंरूपाणि । तावंति षट्त्रिंशत्सहस्राणि भवंति । जीवाक्षरेणैव पुरुषगतबृहतीसहस्राक्षरगतषट्त्रिंशत्सहस्रस्त्रीरूपैरक्षरशब्दवाच्यैर्जीवाख्यसूर्यगत अह्नर्नामकपुंरूपाण्याप्नोति । जीवाह्ना जीवाख्यसूर्यगतार्हनामकस्त्रीरूपैर्जीवाक्षरं जीवगताक्षरशब्दवाच्यपुंरूपाण्याप्नोति । एवं स्वपुंरूपैः स्वस्त्रीरूपाण्याप्नोति । अनकाममारः अनकामः प्राणस्योत्पोत्तिकामः मायां रमायां रमते इति अनकाममारनामा । अथ देवरथः देवस्य विष्णोर्वायोश्च अध्यात्ममधिदैवं च रथ उच्यत इति शेषः । तस्याध्यात्मदेहाख्यरथस्य वाक् वागाख्योमा उद्धिः उद्धारणरज्जुरूपा । तत्राधिदैवं विष्णुरथस्य उमा नामाकारा उद्धिः । श्रोत्रे दक्षवामश्रोत्रगतचंद्रतद्भार्ये पक्षसी । पार्श्वयुक्ताश्वौ । अन्यत्र चंद्रस्तद्भार्या च अश्वरूपौ पार्श्वयोर्युक्तौ । चक्षुषी सूर्यः तद्भार्या च चक्षुर्गतौ । प्रेरकौ च युक्तौ । अग्रतो नियुक्ताश्वौ अन्यत्र सूर्यः सूर्यभार्या च । अग्रतो नियुक्ताश्वौ मनः मनोभिमानी रुद्रः मनोगतः । संगृहीता सारथिः । उभयत्राप्येवं तद्देहाख्यं स्यंदनं अधिदैवम् । स्यंदनं च अयं प्राणः प्राणशब्दवाच्यो विष्णुर्वायुश्च अधितिष्ठति । तदुक्तमृषिणा । सर्वज्ञहयग्रीवेण ।

आतेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः[१] ॥

हे अश्विनौ अश्वरूपत्वात् अश्विनामानौ । विष्णुवायू । मनसो जवीयसा मनसस्सकाशादप्यतिवेगवता । तेन रथेन अधिदैवं रथेन अध्यात्मं देहाख्यरथेन च आयातम् आगच्छतम् । ऋभवः सर्वदेवाः वां यं रथं चक्रुः यस्य

१. ऋ. १०/३९/१२

देहाख्यरथस्य मनोवाक्कर्मभिर्योगे जाते सति विवस्वतः विवस्वन्नामकात् विष्णोः दिवो रमायाः दुहिता पुत्री सरस्वती तदभिमन्यमानं भगवदपरोक्ष-ज्ञानमिति यावत् । जायते उभयविधे सुदिने सुखप्रदे अह्नी जीवन्मु-क्त्यवस्थालक्षणे च जायते । निमिषश्चिज्जवीयसा रथेनायातमश्विना अति-षत्भर्तुवामवः हे अश्विना अश्विनौ अश्विनामानौ विष्णुवायू निमिषश्चित् निमिषादपि जवीयसा अति वेगवता रथेन आयातं वां युवयोः अवः अवनं रक्षा अतिशत् । अंतिके स्थितं भूत् भवत् इति मंत्रद्वयम् ऋषिणोक्तमिति पूर्वेणान्वयः ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायां ऐतरेयभाष्यटीकायां
द्वितीयप्रघट्टके तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः

ऐतरेयोपनिषत्

हरिःॐ ॥ आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्स ईक्षत लोकान्नु सृजा इति स इमांल्लोकानसृजताम्भो मरीचीर्मर-मापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासि-काभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदया-न्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ १ ॥

भा — एको नारायणस्त्वासीत्प्रलये रमया सह ।
नित्याततगुणत्वात्स आत्मेति श्रुतिषूदितः ॥
इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा ।
अग्र्य एव समस्तेभ्यस्तद्वशत्वाद्रमाऽपि सा ॥
विद्यमानाऽपि नाग्रस्था गुणैरूना ततो यतः ।
न ब्रह्मा न शिवश्चासीन्नैवान्यच्च मिषत्कचित् ॥
सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।
असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ॥
अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।
नारायणो न चान्योऽस्ति पूर्णोन्मीलद्गुणात्मकः ॥
पराधीनेन वित्तेन भुंजन्नपि हि भिक्षुकः ।
वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि ॥
मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन ।
सर्वदाऽप्येक एवायं स्वतन्त्रो नापरः कचित् ॥
कालाग्र्यत्वं वक्तुमस्य प्रलये स्थितिरुच्यते ।
स ऐच्छद्भगवान्विष्णुः स्रष्टुं लोकाभिमानिनः ॥
लोकाभिधानवद्देवाञ्डलोकांश्च शाश्वतः ।
स लोकेभ्यः पूर्वतनानबाख्यान्महदादिकान् ॥
ब्रह्मशर्वादिकान् सृष्ट्वा जडैस्सह जनार्दनः ।
दिवमाकाशमुर्वी च ससृजेऽथ द्विसप्तकान् ॥
इति सृष्ट्वा स लोकांस्तु पुनस्तानेव लोकपान् ।
अन्डान्तः स्रष्टुमैच्छच्च तेषां पूज्यत्वसिद्धये ॥
अम्नामकेभ्यस्तेभ्यः स पूर्वसृष्टेभ्य एव तु ।
सर्वजीवाधिकत्वात्तु ब्रह्माणं पुरुषाभिधम् ॥
अंशेनोद्धृत्य रुद्राद्यैः सह चैनमयोजयत् ।
तथैव चेतनानाञ्च भागानुद्धृत्य पिण्डवत् ॥

चेतनाचेतनं राशिमेकस्थं विदधे प्रभुः ।
पुनरैच्छज्जगन्नाथस्तस्याङ्गोत्पत्तिमच्युतः ॥
अण्डवन्मुखमस्यासीत्प्रथमं तु शिरोऽभिधम् ।
भिन्नमास्यं पुनस्तस्य विष्णोरेवेच्छया प्रभुः ॥
तत्र वाङ्नामकं रूपं वह्नेरासीत्पुरातनम् ।
तस्यैवाथ द्वितीयं च यदग्निरिति गीयते ॥
तथैव नासिकातोऽभून्मुख्यवायोः सुतो मरुत् ।
प्राणो वायुरिति द्वेधा चक्षुषोऽभूत्तथा रविः ॥
द्विरूप एव कर्णाभ्यां मित्रधर्माप्यवित्तपाः ।
दिग्देवता द्विरूपेण बभूवुः सर्व एव च ॥
हृदयाद्गरुडानन्तशिवचन्द्राः पृथक्पृथक् ।
मनो बुद्ध्यभिमानाश्च तन्नामानश्च जज्ञिरे ॥
त्वचश्च रोमनामानो वृक्षनामान एव च ।
द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः ॥
हस्ताभ्यां द्विविधः शक्रः पद्भ्यां तत्सूनुरेव च ।
यज्ञस्त्वजनि पायोश्च यमो निर्ऋतिरेव च ॥
रेतोम्नामा द्विरूपस्तु शिव एव च गुह्यतः ।
अपानो मृत्युरिति च मुख्यो नाभेस्तु मारुतः ॥ १ ॥

टी—आत्मा वा इदमेक एवाग्र आसीत् इत्येतत्खण्डं व्याचष्टे । एको नारायण इत्यादिना । इदमग्र इत्येतद्व्याचष्टे । इदमिति । इदं सर्वं रमादिकम् । रमामपेक्ष्य कालतोऽग्रत्वं कथमित्यत आह । तद्वशत्वादिति । सा रमा सर्वदा विद्यमानाऽपि नाग्रस्था कुतः । तद्वशत्वादिति । तद्वशत्वमपि कुतः गुणैस्ततः ऊना यतः । स्वातंत्र्येणाग्रस्थत्वमत्र विवक्षितम् । रमायास्तु तन्नास्तीति भावः । नान्यत् किंचन मिषदित्येत् विवृणोति । न ब्रह्मेति । मिषत् उन्मेषणं कुर्वत् । तदुपपादयति सुप्ता इति । रमायाः मुक्तानां च सुप्त्यभावात् । नान्यत् किंचन मिषदिति कथमित्यत आह । असुप्ता इति । पराधीनस्याप्युन्मेषणस्य

विद्यमानत्वात् कथं अनुन्मेषो रमादीनामित्यत आह । पराधीनेति । भगवतः प्रलये स्थितिकथनस्य प्रयोजनमाह । कालाग्र्यत्वमिति । स ईक्षत लोकान्नु सृजा इत्येतद्विवृणोति । स ऐच्छदिति । अंभो मरीचीर्मरमापोऽदोऽम्भ इत्येतत् लेशतो विवृणोति । स लोकेभ्य इति । लोकेभ्यः पूर्वतनानबाख्यान् महदादिकान् इत्यनेन आप इत्युक्तार्थं भवति । द्विसप्तकान् लोकान् जडैः सह ससृज इत्यनेन लोकानसृजत इत्युक्तार्थं भवति । दिवमाकाशमुर्वीं चेत्यनेन अंभोमरीचीर्मरमित्युक्तार्थं भवति । स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति इत्येतद्व्याचष्टे । इति सृष्ट्वेति । सोऽद्भ्य एव पुरुषं समुद्धृत्येतद्व्याचष्टे । अंनामकेभ्य इति । पुरुषशब्दार्थो । ब्रह्माणमिति । अमूर्छयत् इत्यस्यार्थो अयोजयदिति । रुद्राद्यैः रुद्रायंशैः । तदेव विवृणोति । तथैवेति । पुनरैच्छत् जगन्नाथस्तस्यांगोत्पत्तिमित्यनेन तमभ्यतपदित्युक्तार्थम् । तस्याभितप्तस्य मुखं निरभिद्यत यथांडमित्यस्यार्थः । अंडवदिति । मुखाद्वाक् वायोरग्निरित्यादि व्याचष्टे । तत्रेत्यादिना । पुरातनं प्राथमिकम् । रविश्चक्षुरादित्य इति द्विरूपकः । आप्यो वरुणः द्विरूपगः । अध्यात्माधिदैवभेदेन गरुडानंतशिवचंद्राः हृदयात्प्रजज्ञिरे । पृथक्पृथक् मनोबुद्ध्यभिमानाः । मनोबुद्ध्यभिमानिदेवाः । तन्नामानः मनोबुद्ध्यादिनामानः । पारिजाताद्याः पारिजातादिवृक्षाभिमानिनः । अध्यात्मं लोमनामानः । अधिदैवं वृक्षनामानः । इति द्वेधा प्रजज्ञिरे । अपानात् मृत्युरित्यस्यार्थः । वायोश्च यमो निर्ऋतिरेव चेति । शिश्नाद्रेतो रेतस आपः इत्यस्यार्थः । रेतोऽम्नामेति मुख्यो मारुतो नाभेः । अपानो मृत्युरिति । द्विरूपो जज्ञे ॥

इदं रमाब्रह्मशिवादिकं सर्वं जगदपेक्ष्य आत्मा आततगुणत्वादात्मा विष्णुरेव अग्रः अग्र्यः गुणाधिकः आसीत् । कालतोऽप्यग्र आसीत् । गुणाग्र्यत्वे हेतुः नान्यत्किंचन मिषदिति । अन्यत् आत्मनोऽन्यत् किंचन मिषत् । स्वातंत्र्येणोन्मेषवन्नासीत् । स आत्मा ईक्षत ऐक्षत ऐच्छत् । लोकान् जडलोकाभिमानिनश्च । सृजा इति सृजे इति नु । स्रक्ष्यामीति ऐक्षत । स आत्मा इमान् लोकान् लोकाभिमानिनश्च असृजत । इमानित्युक्तान् निर्दिशति । अंभोमरीचीर्मरमाप इति । तत्रांभश्शब्दार्थमाह । अदोंऽभः परेण दिवं द्यौः

प्रतिष्ठेति । अदः असौ विष्णुलोकः अंभ इत्युच्यते । कोऽसौ परेण दिवं दिवः परे महदादयश्च द्यौश्च एतत् सर्वम् अं विष्णुं बिभर्तीत्यंभ इत्युच्यते । एतत् प्रतिष्ठा च भगवानत्र प्रतितिष्ठतीति । अंतरिक्षं मरीचय इत्युच्यते । मरीचीनां सूर्यरश्मीनां अयनं मरीचयः पृथिवी मरः पृथिव्यां क्षिप्रं म्रियंत इति । या अधस्तात् पूर्वमेव सृष्टा देवताः ता आप इत्युच्यंते । स ईक्षत ऐच्छत् इमे नु लोकाः इमे लोकाः मया सृष्टा वै । लोकपालान्नु सृजा इति स आत्मा अद्भ्यः अम्नामकेभ्यो ब्रह्मादिभ्यः अंशानुद्धृत्य पुरुषं ब्रह्माणं अमूर्च्छयत् मूर्तमकरोत् । तैश्चेतनाचेतनांशैः तं ब्रह्माणं अभि प्रति अतपत् ऐच्छत् । तस्यां-गोत्पत्तिमैच्छदिति भावः । तस्याभितप्ततस्य एवमीप्सितस्य मुखं निरभिद्यत । शिरोभिधं मुखं अजायत । अंडं यथा अंडवत् पिंडाकारमिति भावः । मुखं निरभिद्यत आस्यमप्यभूत् । मुखाद्वाक् वाङ्नामकं वह्ने रूपं वाचोऽग्निः वाचः वागिंद्रियादग्निः ब्रह्मणो वागिंद्रियादेव वाङ्नामकं वागभिमानिवह्ने रूपमजायत । वागिंद्रियादेव वह्नेरग्न्याख्यं द्वितीयं रूपमप्यजायत । एवं वाय्वादीनां अध्यात्मं अधिदैवतं च रूपभेदो द्रष्टव्यः । नासिके निरभिद्येतां नासिकाभ्यां प्राणः अध्यात्मं प्राणनामा । अधिदैवं वायुनामा मुख्यवायुसूनुः । अक्षिभ्यां चक्षुः । चक्षुष आदित्यः । रवेरध्यात्मं चक्षुर्नामकं रूपम् । अधिदैवम् आदित्यनामकम् । कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः । मित्रयमवरुणकुबेराः अध्यात्मं श्रोत्रनामानः अधिदैवं दिङ्नामान इति द्विरूपाः । हृदयान्मनो मनसश्चंद्रमाः चंद्रमा इत्यनेन गरुडानंतशिवा अपि गृह्यंते । अध्यात्मं मनोनामानः अधिदैवं चंद्रादिनामानः नाभेनार्भिस्थानतः अपानो अपाननामा मुख्यप्राणो जज्ञे । अपानात् अपानोत्पत्त्यनंतरमिति शेषः । मृत्युरिति द्वितीयरूपवानजायत मुख्यप्राणः । शिश्नाद्रेतो रेतस आपः शिश्नाद्रेतोनामा द्विरूपः शिवो जज्ञे । मुखं वाक् वाचो अग्निरित्यादौ सर्वत्र मुखादिगोलकं वागादींद्रियं तदभिमानिदेवतारूपद्वयं च विवक्षितम् ॥ १ ॥

ऐतरेयोपनिषत्

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपा-साभ्यामन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता

अन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्त्सुकृतं बतेति पुरुषो वाव सुकृतं ता अब्रवीद्यथायतनं प्राविशतोत्यग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशंस्तमशनापिपासे अब्रूतामावाभ्यामभि प्रजानीहीति ते अब्रवीदेतास्वेव वा देवतास्वाभजाम्येतासु भागिन्यौ करोमीति तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥ २ ॥

भा— एवं रूपद्वयेनापि स्तुवन्तो विष्णुमव्ययम् ।
दिव्याम्बराः कुण्डलिनः प्राविशन्नुदकार्णवम् ॥
तदाऽशनापिपासाख्यं द्विरूपं मारुतं पुनः ।
तस्मिन्देवसमूहे तु विष्णुः प्रावेशयत्प्रभुः ॥
तेऽब्रुवन्देहि नो वासं यत्र चान्नमदामहे ।
गोरूपमेभ्यो ब्रह्माणं ददौ नारायणः प्रभुः ॥
तत्र प्रविश्य ते देवा नालमित्यब्रुवन्पुनः ।
अश्वरूपं विरिञ्चिश्च पुनरेवावदत्प्रभुः ॥
तद्रूपेऽपि प्रविश्यैव नालमित्यब्रुवन्पुनः ।
पूर्वसृष्टं पुमाकारं ब्रह्मणोऽदात्पुनर्हरिः ॥
तद्दृष्ट्वैवालमित्यूचुर्विशतेति स चाब्रवीत् ।
विविशुश्च यथोत्पन्नाः सर्वे देवाश्चतुर्मुखम् ॥

अशनापिपासामानी तु द्विरूपो मारुतोऽवदत् ।
कुर्वाज्ञामावयोश्चैव यथा त्वच्छासनानुगौ ॥
नित्यं भवावेति हरिः सर्वत्र प्रविशेत्यमुम् ।
आह तस्माद्देवतानां सर्वासां भागभुङ्मरुत् ॥
एक एव प्राणनामा नाभिस्थोऽपि स एव तु ।
अशनापिपासाऽपानश्च मृत्युश्चेति चतुर्विधः ॥
एक एव महान्वायुः सर्वदेवेषु संस्थितः ॥ २ ॥

टी— ता एता देवताः सृष्टा इत्येतत्खंडं व्याचष्टे । एवमिति । तं अशनापिपासाभ्यां अन्ववार्जत् इत्यस्यार्थमाह । तदेति । अन्ववार्जत् इत्यस्यार्थः । प्रावेशयदिति । ता एनमब्रुवन् इत्यस्यार्थमाह । ते ब्रुवन्निति । यथायतनं प्रविशतेत्यस्यार्थो । विशतेत्यादि । अग्निर्वाग्भूत्वेत्यादेर्विवरणम् । विविशुश्च यथोत्पन्ना इति । प्राणनामक एव मरुत् सर्वासां देवतानां भागभुक् स एव नाभिस्थोऽपि अशनापिपासामृत्युरपान इति चतुर्विधः । स एव महान्वायुः सर्वदेवेषु स्थितः । ता वा एता देवताः वागादिभ्यः सृष्टास्ता एता देवताः अस्मिन् महत्यर्णवे उदकार्णवे प्रापतन् प्राविशन् ॥

तं देवसमूहम् अशनापिपासाभ्यां अशनापिपासाख्यवायुरूपाभ्याम् अन्ववार्जत् प्रापयामास । विष्णुरिति शेषः । ता देवता एनं परमात्मानम् अब्रुवन् । नः आयतनं भोगायतनं प्रजानीहि अनुजानीहि देहीति यावत् । यस्मिन्नायतने प्रतिष्ठिता अन्नमदाम इति । ताभ्यो देवताभ्यः गां गोरूपं चतुर्मुखमानयत् । ता इत्यब्रुवन् अयं गौः नः नालं वै इति । तत्र प्रविश्याब्रुवन् । ताभ्यो अश्वम् अश्वरूपं चतुर्मुखमानयत् । ता इत्यब्रुवन् सुकृतं भवता सुष्ठु कृतं बत हर्षे । पुरुषः पुरुषदेहः सुकृतं वाव सुकृतसाधनं वै । भगवान् यथायतनं यथास्थानं येन येन यतो यतः उत्पन्नं तत्तदित्यर्थः । यथास्थानं प्रविशतेति ता देवता अब्रवीत् । अग्निर्वाग्भूत्वा अधिदैवतं अग्निनामा वह्निः अध्यात्मं वाङ्नामको भूत्वा मुखं प्राविशत् । एवमुत्तरत्रापि । मृत्युनामा मुख्यवायुरपाननामा भूत्वा नाभिं प्राविशत् । अशनापिपासे

अशनापिपासाख्यमुख्यप्राणरूपे तं भगवंतमब्रूताम् । आवाभ्यां अभिप्रजानीहि । यथा त्वदाज्ञावर्तिनौ भवाव तथा अनुज्ञां देहीति । आत्मा ते अशनापिपासे अब्रवीत् । वां एतासु देवतासु शिवादिषु आभजामि प्रवेशयामि । एतासु देवतासु भागिन्यौ अग्रभागार्हे करोमीति । तस्मात् अग्रभागत्वात् यस्यै कस्यै च देवतायै हविर्गृह्यते दीयते तस्यां देवतायाम् अशनापिपासे भागिन्यौ भवतः ॥ २ ॥

ऐतरेयोपनिषत्

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्तिरजायतान्नं वै तत्तदेनत्सृष्टं पराङ्त्यजिघांसत्तद्वाचाऽजिघृक्षत्तन्नाशक्नोद्वाचा गृहीतुं स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्तच्चक्षुषाऽजिघृक्षत्तन्नाशक्नोच्चक्षुषा गृहीतुं स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण गृहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यत् श्रुत्वा हैवान्नमत्रप्स्यत्तत्त्वचाऽजिघृक्षत्तन्नाशक्नोत्त्वचा गृहीतुं स तद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत्तन्मनसाऽजिघृक्षत्तन्नाशक्नोन्मनसा गृहीतुं स यद्धैतन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन गृहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्तदपानेनाजिघृक्षत्तदावयत्सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत सैषा विदृतिर्नाम द्वास्तदेतन्नांदनं तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमा-

वसथोऽयमावसथ इति स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदि-
षदिति स एतमेव पुरुषं ब्रह्मततममपश्यदिदमदर्शमिर्ति३ तस्मादिदंद्रो
नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण
परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ ३ ॥

॥ इत्यैतरेयोपनिषत्सु द्वितीयारण्यके चतुर्थोऽध्यायः ॥ २ ॥ ४ ॥

भा— पुनरैच्छत्केशवोऽसावन्नमेभ्यः सृजा इति ।
अबाख्या देवताः पूर्वं सृष्ट्वा ब्रह्मादिकाः पुनः ॥
ददर्श सुविशालाभ्यां नेत्राभ्यां पुष्करेक्षणः ।
तद्दर्शनात्तदिच्छातस्तासां देहोऽभवत्पृथक् ॥
सर्वासामपि देहैकदेशेभ्यो मिलितं शुभम् ।
सर्वैरधिष्ठितं चैव विरिञ्चेन विशेषतः ॥
दिव्यावयवसम्पन्नमेकमेव सुलोचनम् ।
भोग्यभोक्त्रात्मना नास्ति तस्य दुःखं कथञ्चन ॥
ते हि देवाः स्वयं भोग्याः स्वयं भोक्तार एव च ।
क्रीडन्ते मोदिनो नित्यं तथाऽप्यन्नात्मकस्त्वसौ ॥
क्रीडयाऽपाक्रमत्किञ्चित्तं तदाऽसौ चतुर्मुखः ।
अत्तुं वागादिभिः सर्वै रैच्छन्नाप्यशकत्तदा ॥
जानन्नपि क्रीडयैव तारतम्यं प्रकाशयन् ।
एवं चकार ब्रह्मा स काज्ञानं लोककर्तरि ॥
क्षुत्पिपासादयश्चैव देवानां भोगसाधकाः ।
न तु पीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः ॥
अन्नमूर्तिं ततो ब्रह्मा प्रधानेनैव वायुना ।
अपानाख्येनात्तुमैच्छत्तदैवाशकदाशु सः ॥
तस्माद्ब्रोक्तैक एवासौ सर्वस्यान्नस्य मारुतः ।
तत्प्रसादात्परेऽश्नन्ति किञ्चित्किञ्चिन्न चाखिलम् ॥

आयूरूपोऽखिलानां च देवानां वायुरेव हि ।
अन्नदेवस्य चायुः स तस्माद्देवोत्तमो मरुत् ॥
आयुःशब्दो ज्ञानवाची गतिवाची च यत्ततः ।
चेष्टामोक्षज्ञानदाता सुराणां मारुतस्ततः ॥
अन्योन्यगुणदातृत्वात्समानौ ब्रह्ममारुतौ ।
तस्मान्मोक्षे सुखे ज्ञाने विष्णुभक्त्यादिकेष्वपि ॥
सर्वेभ्यश्चाधिकौ तौ हि तयोर्विष्णुः परस्सदा ।
देवतानां प्रवेशात्तु पूर्वमेव जनार्दनः ॥
इत्थमैक्षत देवेशो ब्रह्माद्या यदि मां विना ।
क्रियादिषु समर्थाः स्युर्न मे विष्ण्वभिधा भवेत् ॥
सर्वचेष्टयितृत्वाच्च विशिष्टबलतस्तथा ।
विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् ॥
स्वतन्त्रत्वे ततः सर्वे मद्वशा एव नान्यथा ।
तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुना ॥
इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः ।
मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः ॥
अग्न्यादयस्ततः पश्चात्प्रविष्टास्तन्नियोजिताः ।
प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश सः ॥
बिभर्ति देहं तेनैव मूर्धाविष्टेन चेष्टयन् ।
नारायणो वासुदेव इति द्विधा व्यवस्थितः ॥
मूर्धाविष्टो वासुदेवस्तस्य चावसथास्त्रयः ।
अक्षि कण्ठो हृदित्येव त एव स्वप्ननामकाः ॥
आप्नोत्यत्र स्वयं विष्णुरतः स्वप्नाः प्रकीर्तिताः ।
अनिरुद्धादिरूपेण त्रिधा तेषु व्यवस्थितः ॥
दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः ।
सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थितः ॥

तस्यामेव ब्रह्मनाड्यां स्थितो नारायणः प्रभुः ।
स एव भगवान्विष्णुः प्रादुर्भावात्मना पुनः ॥
जातो मत्स्यादिरूपेण सर्वभूतेषु चाविशत् ।
असुराणां निहन्तारं ज्ञानादिगुणदं तथा ॥
चेष्टाप्रदं च भूतेषु न मदन्यं वदत्यपि ।
इति मत्वा जगन्नाथो दैत्यनिग्रहणेच्छया ॥
ज्ञानदानार्थमपि तु प्रादुर्भूतो भुवि प्रभुः ।
तथा जीवेषु सर्वेषु प्रविष्टः प्रेरणेच्छया ॥
को ह्यन्यस्तमृते विष्णुमेतत्कर्म करिष्यति[१] ।
स सर्वगुणसम्पूर्णं सर्वगं नित्यमव्ययम् ॥
एतदेवस्वरूपं स त्वपश्यदवतारगम् ।
तस्मात्सर्वावताराश्च सर्वजीवेषु संस्थिताः ॥
प्रादुर्भावाः सर्वगुणैः पूर्णा एव सदा स्थिताः ।
पश्यन्ति च तथा नित्यं निर्दोषोरुस्वसंविदा ॥
गुणपूर्णस्वरूपस्य त्वापरोक्ष्येण दर्शनात् ।
सर्वदैव ह्यसौ विष्णुरिदन्द्रो नामतो मतः ॥
ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते ।
जानन्ति न स्वतस्तेन नेदन्द्रास्ते प्रकीर्तिताः ॥
रमाऽपि तत्प्रसादेन जानाति किमुतापरे[२] ।
अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः ॥
रमाजशंकरेन्द्राद्यास्तेनानिन्द्राः क्रमेण ते ।
पापैरज्ञाततां देवा मानयन्ति सदाऽऽत्मनः ॥

---

१. को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥ इतिवत् ।
२. यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ।
ज्ञानस्फूर्तिः सदा तस्मै हरये गुरवे नमः ॥ इति ईशावास्यभाष्ये ।
को नाम विष्ण्वनुपजीवक आस यस्य
नित्याश्रयादभिहिताऽपि रमा सदा श्रीः ॥ - इति म.भा.ता.नि. (१९/९)

हर्षेण तेन विष्णुः स इन्द्र इत्यभिशब्द्यते ।
नेदन्द्रताऽसुरादीनां ज्ञायेतेति श्रुतिर्हरिम् ॥
इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम् ॥
-इत्याद्यैतरेयसंहितायाम् ।

आततगुणत्वादात्मा नारायणः । ब्रह्म पन्थाः सत्यं कर्मेति तस्यैव पञ्चरात्रप्रसिद्धैरेव नामभिरारब्धत्वाच्च ।

मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः ।
अनिरुद्धतनुश्चैत तत्र ह्यमितचेष्टितः ॥
कर्माभासा जीवसञ्ज्ञाः सत्यं प्रद्युम्ननामकः ।
सङ्कर्षणो हरिः पन्था ब्रह्मोक्तो वासुदेवकः ॥ -इत्यादिनामनिर्णये ।

'मत्सीन्द्रमिन्दो पवमानं विष्णुम्' इत्यादिश्रुतौ तस्मिन्नेव प्रसिद्धस्येन्द्रशब्दस्य बहुशोऽभ्यासाच्च । अकारस्य च विष्णावेव प्रसिद्धस्यात्राप्यभ्यासात् । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी इति सूर्यमण्डले पुण्डरीकाक्षत्वेन निर्दिष्टस्यात्रापि य एष तपतीत्यादिना बहुशोऽभ्यासाच्च । सूर्यो हि हिरण्याक्षः । सविता देव आगादिति पिङ्गलाक्षः प्रसिद्धः ।

विरूपाक्षः शिवः सूर्यः सुराचार्यो विनायकः ।
पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ॥ -इति च स्कान्दे ।
यो देवानां नामधा एक एव ।
नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ।
यमिन्द्रिमाहुर्वरुणं यमाहुः ।
चन्द्रसूर्यादयः शब्दा विष्णावेव हि मुख्यतः ।
उपचारात्तदन्येषां विष्णुनैव कृताः पुरा ।
-इत्यादिना तस्यैव सर्वनामवत्त्वाच्च

णकारो बलं षकारः प्राण आत्मेत्यादिनाऽन्तेऽपि
विष्णुशब्दव्याख्यानेनोपसंहाराच्च ।
आत्मब्रह्मादयः[१] शब्दास्तमृते विष्णुमव्ययम् ।
न वर्तन्ते तदन्यत्र शृङ्गिबेरेऽग्निशब्दवत् । -इति च पाद्मे
एको नारायण आसीन्न ब्रह्मा न च शंकरः ।
एको नारायण आसीन्न ब्रह्मा नेशानः ।
वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शंकरः ।
-इत्यादि श्रुतिभ्यश्च ।

अग्रशब्दो गुणाधिक्यवाची । इदं रमाब्रह्मशिवादिकं सर्व जगदपेक्ष्यात्मैवाग्रे विष्णुरेवाग्र्यः सर्वगुणैरित्यर्थः । तत्र हेतुस्तदन्यत्किञ्चिन्न मिषदासीत् । सर्वस्याप्युन्मेषणं नासीदित्यर्थः । स्वत उन्मेषणं कस्यापि नास्ति । अस्तिशब्दवदासीच्छब्दोऽपि सर्वकालसाधारणः । भगवत्प्रसादादेव सर्वदा सर्वं किञ्चिदुन्मिषति । स्वातन्त्र्येण पूर्णोन्मेषो विष्णुरेव ।

उन्मेषो गुणसंपूर्तोद्रिक्तानुभवः स्मृतः ।
तदेव मिषणं नाम सद्रूपं मिनुते यतः ॥
मिषच्च नान्यद्विष्णोर्हि किमुतोन्मिषदिष्यते ।
उच्चैर्मिषन्हि भगवान्सर्वदैव जनार्दन ॥ -इति च सत्तत्त्वे
नास्ति नारायणसमं न भूतं न भविष्यति[२] ॥ -इति च भारते

सर्वजीवानां रमायाश्च प्रलयेऽपि विद्यमानत्वादेव नाग्र इति कालापेक्षया तदधीनमिषत्वादन्येषामग्र्यः स एवेत्याशयः । तदधीनत्वमेव तेषां सृष्ट्यादिना दर्शयति । स्थूलशरीरस्य पूर्वाभावस्तत एवार्थतः सिद्ध्यति ।

---

१. आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता ॥
- इति ब्रह्मवैवर्ते (ब्रह्मसूत्रभाष्ये १/३/१)

२. आदि (१/१/१८) (P.P.S. Sastry Edition)

प्रलयेऽप्यखिलं देवी रमा विष्णुप्रसादतः ।
जानाति नित्यज्ञानेन मुक्ता ध्यानस्थिता लये ॥ -इति च सत्तत्वे
ब्रह्मादीनां शरीरान्तरस्यापि प्रलयेऽनुक्तेरेवाभावः सिद्ध्यति ।
आत्मा ब्रह्माग्र इत्यादि गुणाग्र्यत्वं हरेर्वदेत् ।
कालज्यैष्ट्यं न यस्मात्तत्सृष्ट्युक्तेरेव सिध्यति ॥ -इति वाक्यनिर्णये

गुणाग्र्यतायामेव कालज्यैष्ट्यस्याप्यन्तर्भावाच्च । अं विष्णुं बिभर्तीत्यम्भो विष्णुलोको दिवः परः । महरादयश्च दिव्यपि भगवान्प्रतितिष्ठतीति प्रतिष्ठा । तेषु सर्वेषु प्रत्यक्षतश्चरति विष्णुस्तस्मादम्भ इत्युच्यते। दिवः परे द्यौश्चाम्भोनामका इत्यर्थः । सूर्यमरीचीनां तत्र विशेषेण विततत्वादन्तरिक्षं मरीचयः । मरीचीनामयनात् । पृथिव्यां क्षिप्रं मरन्तीति पृथिवी मरः ।

भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः पुरा प्रभुः ।
लोकभेदांश्च चक्रेऽत्र पश्चाद्ब्रह्मा विशेषतः ।
सम्यक्चकार लोकांस्तांल्लोककर्ता ततः स च ॥ -इति ब्रह्मवैवर्ते ।

या अधस्तात्पूर्वमेव सृष्टा देवतास्ता आप इत्युच्यन्ते । आपा इत्याप इतीति पूर्वं भगवदङ्गसृष्टानामेवाप्शब्देनोक्तेः । अयं पितैते पुत्रा इति च। आहं मां देवेभ्यो वेद ओमद्देवान्वेदेति च ।

ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ ।
शिवस्तद्दयिता शक्रकामौ तद्दयितादयः ॥
सर्वे सुराः क्रमेणैव विष्णोर्जाता अबाख्यकाः ।
ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः ॥
हीनाः शतगुणेनैव क्रमेणानेन ते मताः ।
तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च ॥
विशेषतस्तु मुक्तानां सर्वसंसारबन्धनात् ।
क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभोगिनाम् ॥

न विशेषो ब्रह्मवाय्वोरधिकाराविभेदतः[1] ।
न शेषशिवयोश्चैव तत्पत्नीनां च सर्वशः ॥
सुपर्णशेषयोश्चैव साम्यं सर्वगुणेष्वपि ।
साम्यमेवैतयोः पत्न्योः साम्यं शक्रमनोजयोः ॥
एते तु महदादीनां सर्वेऽपि ह्यभिमानिनः ।
पूर्वस्य प्रतिबिम्बश्च चरमस्तत्सुतस्तथा ॥
तद्वशाश्चाखिला विष्णोर्न विष्णुः कस्यचिद्वशे ।
महदादिमानिनश्चैते जातास्तैः सह सर्वशः ।
एते लोका इति प्रोक्ता लोकानामभिमानिनः ॥
त एव लोकपालाश्च यदा पश्चात्प्रजज्ञिरे ।
पश्चाज्जातैर्हि रूपैस्तैर्लोकस्थान्पालयन्त्यलम् ॥ -इत्यादि तत्त्वसारे ।

अमूर्च्छयत् मूर्तमकरोत्। अग्निर्वाग्भूत्वेत्यादिना पश्चादैक्यप्रतीतेरेकस्यैव रूपद्वयं तदिति प्रतीयते । प्रजानीहि प्रकर्षेणानुजानीहि। अन्नदेवता च सर्वदेवतायुक्तो विरिञ्च एव । ग्रसनं चैतस्मिन्प्रवेश एव । न तु पीडा तस्य । एक एव हि ब्रह्मा भोक्तृभोज्यत्वेन स्थितो भोज्यरूपेणैकीभूयातितरां मुमोदेत्यर्थः । देवानामुपद्रवाभावाद्भोक्तृत्वशक्तियोजममेवाशनापिपासाभ्यामन्ववार्जनम् । वायुरेव च भोक्तृत्वशक्तिरूपः । यदि वागादीनामेवाभिव्याहरणादिशक्तिः स्यान्मां विना तर्हि विष्णुत्वं न मम स्यात् तस्मात्कोऽहं भवानीत्याक्षेपः । विशेषेण प्राणयति सर्वान्सर्वेभ्यो विशिष्टश्चेति हि विष्णुः । णकारो बलं षकारः प्राण आत्मेति व्याख्यानात् । तस्मान्मत्प्रेरिता एवैते अभिव्याहारादिशक्ता इत्यभिप्रायः । पूर्णानन्दस्वरूपत्वान्नन्दनो[2] भगवान् । प्रादुर्भावरूपेण जातोऽपि भगवान् सर्वभूतान्यभितः सर्वकालेषु विशेषेण

---

१. एको ब्रह्मा च वायुश्च वीन्द्रो रुद्रसमस्तथा ।
एको रुद्रस्तथा शेषो न कश्चिद्वायुना समः ॥ इति म.भा.ता.नि. १/७३

२. आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः । - इति विष्णुसहस्रनामसु ॥

पश्यत्येव । इह भूतेषु मत्तोऽन्यं प्रवर्तकं वदेत्किमित्याक्षेपः । अहमेव स्वतन्त्रः परिपूर्णगुण इति कृष्णराघवादिसर्वावतार रूपोऽपि सर्वदाऽनुभवत्येव ।

नायं दशरथाज्जातो न चापि वसुदेवतः ।
कास्याज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभोः[१] ॥
प्रादुर्भूतश्चिदानन्दशरीरो राघवः स्वयम् ।
स्तम्भाद्वा नरदेहाद्वा नैवास्य प्राकृती तनुः ॥
दैत्यानां मोहनार्थाय सोऽज्ञानाद्यं प्रकाशयेत् ।
पूर्णचित्सुखरूपोऽपि सदा सर्वावतारगः ॥ -इत्यादि स्कान्दे ।

एतमेव पुरुषं व्यासकृष्णकपिलराघवादिरूपं ततमपश्यत् । ततमं परिपूर्णतमं ब्रह्माऽपश्यत् । इदं मे स्वरूपमदर्शमेवाहमिति । रङ्गस्त्ववधारणे । 'रङ्गोवधारणे चैव संवादे च प्रयुज्यते' । –इति पदविवेके । अपश्यदित्यत्र नातीतकालत्वं विवक्षितम् । अभिव्यैख्यदित्यभिशब्द-

---

१. वसुदेवसुतो नायं नायं गर्भेऽवसत् प्रभुः ।
नायं दशरथाज्जातो न चापि जमदग्नितः ॥
जायते नैव कुत्रापि म्रियते कृत एव तु ।
न बध्यो मुह्यते नायं बध्यते नैव केनचित् ॥
कुतो दुःखं स्वतन्त्रस्य नित्यानन्दैकरूपिणः ॥
- इति म.भा.ता.नि. २/७८-८०.

नात्मानं वेद मुग्धोऽयं दुःखी सीतां च मार्गते
बद्धः शक्रजितेत्यादि लीलैषाऽसुरमोहिनी ॥
मुह्यते शस्त्रपातेन भिन्नत्वगुधिरस्रवः ॥
अजानन् पृच्छति स्मान्यान् तनुं त्यक्त्वा दिवं गतः ।
इत्याद्यसुरमोहाय दर्शयामास नाट्यवत् ॥
अविद्यमानमेवेशः कुहकं तद्विदुः सुराः ।
प्रादुर्भावाः हरेः सर्वे नैव प्राकृतदेहिनः ॥
निर्दोषगुणसम्पूर्णा दर्शयत्यन्यथैव तु ।
दुष्टानां मोहनार्थाय सतामपि च कुत्रचित् ॥
यथायोग्यफलप्राप्त्यै लीलैषा परमात्मनः ॥ - इति म.भा.ता.नि. २/८/८५.

स्यानुषङ्गात् । अपश्यत्पश्यतीति चैककालसम्बन्धं विना वक्तुमशक्यत्वा-त्तथा प्रयोगः ।

प्रयोग एककालीनः सर्वकालेऽनुषज्यते ।
ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ॥ - इत्यादि सत्तत्त्वे ।

परोक्षप्रिया इवेत्यसुराणां सम्यगदर्शनेन पतनं देवानां प्रियं तथाप्य-परोक्षदर्शिन्येव प्रीतिं कुर्वन्तीतीवशब्दः ॥ ३ ॥

इति श्रीमदान्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये
द्वितीयप्रपट्टके चतुर्थोऽध्यायः ॥ २ ॥ ४ ॥

टी— स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इत्येतत्खण्डं व्याचष्टे । पुनरैच्छदित्यादिना । सृजा सृजेयम् । सोऽपोऽभ्यतपत् इत्यस्य विवरणम् । अबाख्या इति । ताभ्यो अभितप्ताभ्यो मूर्तिरित्यस्य विवरणम् । तद्दर्शनादिति । या वै सा मूर्तिः अजायतान्नं वै तदित्यस्य व्याख्यानम् । सर्वासामिति । सर्वासां देहैकदेशेभ्यः देहैकभूतजडैकदेशेभ्यः मिलितत्वादिति विशेषणयुक्तमेकं रूपं जातमित्यर्थः । विशेषतो विरिंचाधिष्ठितस्यास्य देहस्यान्नत्वे चर्व्यत्वादिना दुःखं स्यात् इत्यत आह । भोग्येति । तस्य तद-धिष्ठितदेवसमूहस्य तदुपपादनम् । ते हीति । तदेतत् सृष्टं पराङ्त्यजि-घांसदित्यादि व्याचष्टे । तथाऽपीति । तथापि दुःखाभावेऽपि असौ देवाधि-ष्ठितः अन्नात्मकदेहः वागादिभिः सर्वैः करणैः । अनेन तद्वाचाऽजिघृक्षत् तन्नाशक्नोदित्यादि विवृतं भवति । जानन्नपि अपानेनैवान्नग्रहः न वागादि-भिरिति जानन् । तारतम्यं वागादीनां वाय्वन्तानां तदवैत् सैषोऽन्नस्य ग्रह इत्येतद्व्याचष्टे । अन्नमूर्तिमिति । अन्नायुर्वा एष यद्वायुरित्येतव्याचष्टे । आयूरूप इति । आयुस्वरूपः आयुर्देवतेत्यर्थः । स वायुरन्नदेवस्य चतुर्मुखस्य चायुः आयुःप्रवर्तकः । आयुःशब्दस्यापूर्वमर्थमाह । आयुश्शब्द इति । आयुश्शब्दो गतिवाची । यत् ततो ज्ञानवाची च । ततः मारुतः सुराणां चेष्टामोक्षज्ञानदाता । मोक्षदातेत्यनेन नित्यायुष्यदातेत्युक्तं भवति । ननु ब्रह्मवाय्वोः समानत्वात् कथं वायोर्ब्रह्मणोऽप्यायुःप्रदत्वमित्यत आह ।

अन्योन्येति । ईक्षेत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति। स ईक्षत वाचाऽभिव्याहृतमित्यादि व्याचष्टे । देवतानामित्यादिना । देवतानां प्रवेशात्पूर्वम् अन्नरूपशरीरे इति शेषः । अथ कोऽहमित्यस्यार्थो । न मे विष्ण्वभिधा भवेदिति । सर्वचेष्टयितृत्वाभावे विष्ण्वभिधा कुतो न स्यादित्यत आह । सर्वेति । तस्मात् सुराणामस्वतंत्रत्वात् । स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत इत्येतत् व्याचष्टे । इति मत्वेति । तेन प्रपदाविष्टेन देहे बिभर्ति । मूर्धाविष्टेन देहं चेष्टयन् । तस्य त्रय आवसथाः त्रयः स्वप्नाः इत्यादि व्याचष्टे । तस्य चावसथास्त्रय इति । त एव आवसथा एव तेषु अक्षिकण्ठहृत्सु अवस्थात्रयस्य जाग्रदादेः सञ्जातो भूतान्यभिव्यैख्यत् इत्येतत् विवृणोति । स एवेति । किमिहान्यं वावदिषदित्येत् व्याख्याति । असुराणामिति । स एवमेव पुरुषं ब्रह्मततममपश्यत् इत्येतद्व्याचष्टे । सर्वगुणसंपूर्णमिति । तस्मात् पूर्णत्वात् तथा सर्वे प्रादुर्भावा नित्यं निर्दोषोरुस्वसंविदा सर्वं पश्यंति च । इदं अदर्शमिति । तस्मादिदंद्रो नाम इदन्द्रो ह वै नामेत्येतत् विवृणोति । गुणेति । गुणपूर्णस्वरूपस्य स्वस्य रूपं स्वरूपं गुणपूर्णं च तत् स्वरूपं चेति गुणपूर्णस्वरूपम् । तस्य सर्वेषां ब्रह्मादीनां तत्प्रसादेन जायते । दर्शनमिति शेषः । तत्प्रसादेन जातेति स्वतो न जानन्ति तेन ते इदन्द्राः न प्रकीर्तिताः इत्यन्वयः । क्रमेणानिंद्राः अनिदंद्राः इत्यन्वयः । परोक्षेण परोक्षप्रिया इव हि देवा इत्येतद्व्याचष्टे । पापैरिति । आत्मनः परमात्मनः पापैरज्ञाततां हर्षेण मानयंतीति यतः तेन श्रुतिरपि हरिमिदंद्र इत्येव पारोक्ष्येण वदति । कुतः असुरादीनां इंद्रता न ज्ञायेतेति ।

प्रमाणेन व्याख्यातेऽपि खंडत्रये केषांचित्पदानामव्याख्याततत्वात् । केषांचित्पदानां व्याख्याततत्वेऽपि अस्फुटत्वात् कुत्रचिदन्यथा प्रतीतेश्च यथावत् स्ववचनेन व्याचष्टे । आततगुणत्वादिति । साधारणात्मशब्दस्य कथं भगवद्विषयत्वमङ्गीक्रियत इत्यतः उपक्रमपर्यालोचनयाऽयं भगवद्विषय एवेत्याह । ब्रह्मेति । विष्ण्वैकनिष्ठतया पञ्चरात्रप्रसिद्धैः ब्रह्म पन्थाः सत्यं कर्मेति नामभिस्तस्यैव नारायणस्यैष पन्था एतत् कर्मेत्यादिनाऽऽरब्धत्वात् उपक्रान्तत्वात् । कर्मादिनाम्नामनिरुद्धादिषु प्रवृत्तिप्रकारं दर्शयति । मुख्यत इति ।

प्रादुर्भावात्मको मत्स्यादिरूपः । तत्र अनिरुद्धतनौ । श्रुत्यन्तरे भगवत्येव प्रसिद्धेन्द्रशब्दस्याभ्यासाच्च । इयम् उपनिषत् भगवद्विषयेत्याह । मत्सीति । अभ्यासान्तरं चाह । अकारस्येति । पुण्डरीकाक्षत्वलिंगबलेन सूर्यमण्डलस्थत्वं विष्णोः प्रसिद्धम् । तदेवात्र अनुसंधीयते । य एष तपतीत्यादौ । अतः तत्समाख्यानाच्चेयं श्रुतिर्भगवद्विषयेत्याह । तस्येति । पुण्डरीकाक्षत्वलिंगं सूर्यस्य किं न स्यादित्यत आह । सूर्यो हीति । पुण्डरीकाक्षत्वं विष्णोरेवेत्यत्र प्रमाणमाह । विरूपाक्ष इति । इतश्चात्मशब्दो विष्णुविषय इत्याह । यो देवानामिति । सर्वनामवत्वाच्च आत्मशब्दो विष्णुविषय इत्यर्थः । उपसंहार-बलाच्चेयमुपनिषत् विष्णुविषयेत्याह । णकार इति । इतश्च आत्मशब्दो विष्ण्वावेव मुख्य इत्याह । आत्मेति । न वर्तते मुख्यत इति शेषः । अन्य-त्रात्मशब्दस्त्वमुख्य एव । तत्र दृष्टान्तमाह । शृंगिबेरेऽग्निशब्दवदिति । अत्रा-त्मनोऽग्रेऽवस्थानमुच्यते । अग्रे अवस्थितत्वं च विष्णोरेव सुप्रसिद्धमित्याह । एक इति । इदमेक एवाग्र आसीदित्येतद्योजयति । इदमिति ।

तत्र हेतुः अच्युत इति शेषः । रमाया मुक्तानां च प्रलयेप्युन्मेषणसद्भावात् कथं नान्यत्किञ्चन मिषदित्यत आह । विष्णोः सर्वदा विद्यमानत्वात् कथम् आसीदिति प्रयोग इत्यत आह । अस्ति शब्दवदिति । अस्ति ब्रह्मेत्युक्ते यथा ब्रह्मणः सर्वकालसम्बन्धित्वमर्थः तथा आसीत् शब्दस्यापि सर्वेषामपि । यथा स्वमुन्मेषसद्भावात् कथं नान्यत् किंचन मिषदित्यत आह । भगवदिति । किमेतद्दूषणं नाम यद्विष्णोरेव स्वातंत्र्येण नान्येषामित्युच्यते । तदाह । उन्मेष इति । गुणसम्पूर्तेः उद्रिक्तानुभवः सम्पूर्णानुभवः उन्मेषो नाम । सद्रूपं विद्यमानस्वरूपं मिनुते । यतः जानातीति यत् । तदेव मिषणं नाम । विष्णोरन्यः स्वातन्त्र्येण मिषच्च नास्तीति किमुतेत्यन्वयः । विष्णोरेव सर्वोत्तमत्वे प्रमाणमाह । नास्तीति । अग्र इति विष्णोर्गुणाग्र्यत्वमुक्तम् । कालाग्र्यत्वमेव किं न स्यात् इत्यत आह । सर्वजीवानामिति । आत्मैक एवाग्रे नान्यत्किञ्चन मिषदित्येत्तात्पयर्यमाह । तदधीनेति । गुणाग्र्यत्व-विवक्षायां सृष्टिकथनस्य कोपयोगः इत्यत आह । तदधीनत्वमिति । स्रक्ष्यमा-णस्थूलशरीरादीनां प्रागभावव्युत्पादनार्थम् आत्मा वा इदमेक एवाग्र आसी-

दित्यनेन परमात्मन एव कालज्यैष्ठ्यमुच्यत इति किं न स्यादित्यत आह । स्थूलशरीरस्येति । तत एव सृष्टिकथनादेव तस्मान्न तदर्थं परमात्मनः कालज्यैष्ठ्यं वक्तव्यमिति भावः । रमाया मुक्तानां च तदधीनोन्मेषत्वे प्रमाणमाह । प्रलय इति । मुक्ताः प्रलये विष्णुप्रसादतः ध्यानस्थिताः । सृष्टिकथनेनास्त्वन्येषां स्थूलशरीराभावः । पूर्वं ब्रह्मादीनां तु कथं तेषामुत्तमत्वादित्यत आह । ब्रह्मादीनामिति । शरीरांतरस्य स्थूलशरीरस्य । उक्तार्थे प्रमाणमाह । आत्मेति । इतश्च कालाग्र्यत्वं पृथङ् न वक्तव्यमित्याह । गुणेति । अंभश्शब्दं निर्वक्ति । अमिति । दिव्यपि प्रतितिष्ठतीति प्रतिष्ठा । द्यौरिति शेषः । तदुपपादयति । तेष्विति । मरीचिशब्दार्थमाह । सूर्येति । मरन्ति म्रियन्ते । ब्रह्मणो लोकसृष्ट्युक्तेः कथमात्मनो लोकसृष्टिकथनमित्यत आह । भूतेभ्य इति । भगवत्सृष्टानामेव लोकानां पश्चात् सम्यक्करणमात्रेण ब्रह्मणो लोकस्रष्टृत्वोक्तिरिति भावः । या अधस्तात् ता आप इत्येतद्विवृणोति । या अधस्तादिति । पूर्वमेव ब्रह्माण्डसृष्टेः देवानां अप्शब्दवाच्यत्वमुपपादयति । आपाः इत्यापा इतीति । अं नाम्नो हरेः पुत्रत्वात् । आह मां देवेभ्यो वेद इत्थं नाम्नां हरिणा व्याप्तत्वात् च तेषाम् अंनामकत्वमिति भावः । ब्रह्मदीनाम् अप्शब्दवाच्यत्वं महदाद्यभिमानित्वं तारतम्यस्थितानामेव तेषां लोकशब्दवाच्यत्वं लोकपालत्वं च प्रमाणेन विशदयति । ब्रह्मेत्यादिना । तत्सुतः पूर्वस्य सुतः तैर्महदादिभिः सह जाताः । यदा पश्चादण्डान्तः प्रजज्ञिरे तदा लोकपालाः सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयन् इत्यस्यार्थमाह । अमूर्च्छयदिति । मुखाद्वाग्वाचोऽग्निरित्यादौ अग्न्यादीनां अध्यात्माधिदैवभेदेन रूपद्वयमुक्तम् । तत्रैकेकस्य रूपद्वयसद्भावे ज्ञापकमाह । अग्निरिति । आयतनं नः प्रजानीहीत्येतच्छब्दार्थमाह । प्रजानीहीति । अन्नं वै तदित्यत्रान्नशब्दवाच्यमाह । अन्नदेवता चेति । अन्नम् अन्नदेवता वै । स च विरिंच इत्यर्थः। अजिघृक्षत् ग्रसितुमैच्छदित्यत्र ग्रसनं नाम किमित्यपेक्षायामाह ग्रसनं चेति । एतस्मिन्नन्नरूपे तदपानेनाजिघृक्षत् तदाऽवयदित्यस्य तात्पर्यमाह । एक एव हीति । तम् अशनापिपासाभ्यां अन्ववार्चत् अन्ववार्जदित्यस्याभिप्रायमाह । देवानामिति । अशनापिपासाभ्याम् अन्ववार्जदित्यस्य भोक्तृत्वशक्तियोजनमर्थश्चेत् तदा अशनापिपासाख्यं द्विरूपं मारुतं पुनः तस्मिन् देवसमूहे तु

विष्णुः प्रावेशयत् प्रभुरित्युक्तिविरोध इत्यत आह । वायुरेवेति । भोक्तृत्वशक्तेर्वायुरूपत्वात् तद्योजनं नाम वायुयोजनमेवेति नोक्तविरोध इति भावः । यदि वाचाऽभिव्याहृतमित्यारभ्य अथ कोऽहमित्यन्तवाक्यतात्पर्यमाह । यदीति । किमिदं विष्णुत्वं यद्देवानामेव स्वातन्त्र्येण चेष्टकत्वेन मम न स्यादित्यतस्तदेवाह । विशेषेणेति । तदुपपादयति । णकार इति । तदेतन्नांदनमित्यत्र नान्दनशब्दार्थमाह । पूर्णानन्देति । नन्दनो भगवान् तत्सम्बन्धित्वात् नान्दनम् । सजातो भूतान्यभिव्यैख्यत् इत्यस्यार्थमाह । प्रादुर्भावेति । किमिहान्यं वावदिषदित्यत्र किंशब्दार्थमाह । इहेति । आक्षेपफलितार्थमाह । अहमिति । कृष्णरामादीनां जन्मादिदोषदर्शनात् कथं परिपूर्णगुणत्वमित्यत आह । नायमिति । एतमेवेतिपरामर्शविषयं दर्शयति । एतमेवेति । अपश्यदित्यस्याभिशब्दस्सम्बन्धे सति अभ्यपश्यदिति भवति । अभितो दर्शनं च सार्वकालिकमेव । तर्हि अपश्यदित्यतीतकालसम्बन्धितया निर्देशः कथमित्यत आह । अपश्यदिति । कालविशेषसम्बन्धं विना लकारेण निर्देष्टुमशक्यत्वादेव तथा व्यवहारः । न तु तत्कालमात्रसम्बन्धित्वादिति भावः। तत्र प्रमाणमाह । प्रयोग इति । तत्र हेतुर्नित्यचिद्रूपता हरेरिति । परोक्षप्रिया इवेत्येतदभिप्रायमाह । परोक्षप्रिया इति । तर्हीवशब्दवैय्यर्थ्यमित्यत आह । तथापीति ॥

स आत्मा ईक्षत ऐक्षत ऐच्छत् । लोकाश्च लोकपालाश्च इमे नु एवं सृष्टा हि एभ्योऽन्नं सृजा इत्यैक्षदिति पूर्वेणान्वयः । स आत्मा अपः अबाख्यान्देवान् अभ्यतपत् अभ्यपश्यत् । अभितप्ताभ्यो दृष्टाभ्यस्ताभ्यो मूर्तिरजायत । तेषां देहेभ्यश्चतुर्मुखाद्यधिष्ठितः कश्चन देहोऽजायत । या वै सा मूर्तिरजायत । तदन्नं वै अन्नरूपं वै भोग्यरूपं वै । सृष्टं तदेतत् शरीरम् अतीत्य पराङ्पश्चात् अजिघांसत् अगच्छत् । ब्रह्मा तद्भोग्यरूपं वाचा वागाख्यकरणेन अजिघृक्षत् । ग्रसितुमैच्छत् । तद्वाचा ग्रहीतुं नाशक्नोत् । स ब्रह्मा एनत् वाचा ग्रहिष्यत् । यदि वाचा एनद्ग्रहीतुम् अमनिष्यत् । तर्ह्यग्रहिष्यद्वा अग्रहिष्यदेव । न च वाचा गृहीतुम् अमन्यत । तस्मात् स्वेच्छयैव नाशक्नोदिव । तर्हि किमकरोदत्राह । अन्नम् अभिव्याहृत्य अन्नमित्युक्त्वा रप्स्यत् । तृप्तोऽभूत् । एवमुत्तरत्रापि

योजना द्रष्टव्या । तदपानेन अपाननाम्ना मुख्यवायुना अजिघृक्षत् । तदाऽवयत् अशक्नोत् । यद्वायुः यो वायुः स एषः अन्नस्य ग्रहः । सर्वान्नस्यात्ता । यद्वायुर्यो वायुरेष अन्नायुर्वै अमृतत्वादन्नं सकलस्यायूरूपत्वादायुः । स भगवान् दैवतानां ब्रह्मशरीरे प्रवेशात् पूर्वमित्थमीक्षत ऐक्षत । इन्द्रब्रह्मादिजीवजातं मद्दते मां विना मत्प्रेरणां विना कथं नु स्यात् । कथं विशिष्टचेष्टादिमत् स्यात् । न कथमपि । तस्मात् तस्मादेषां चेष्टासिद्ध्यर्थमहं एतेषु प्रवेक्ष्यामीत्याशयः । स आत्मा कतरेण द्वारेण प्रपद्ये प्राप्नुयामिति ईक्षत ऐक्षत ऐक्षत् । कथम् । यदि वागादिभिरिन्द्रियैः स्वातन्त्र्येणाभिव्याहारादिकर्म कृतं स्यात् । अथ तर्हि अहं कस्यां विशिष्टचेष्टावत्त्वाद्यर्थं विष्णुशब्दार्थो न स्यादित्यभिप्रायेण ऐक्षतेति पूर्वेणान्वयः । स भगवानेवं मत्वा एतमेव सीमानं शिरोमध्यं विदार्य एतया द्वारा सुषुम्नानाड्या प्रापद्यत प्रविवेश । सैषा द्वाः विद्दतिर्नाम विदारितत्वात् विद्दतिः । तदेतन्नान्दनं तदेतत्स्थानं नान्दनं पूर्णानंदत्वात् नंदननाम्नो हरेः सम्बन्धित्वात् नान्दनम् । तस्य नन्दनस्य त्रय आवसथाः त्रीणि स्थानानि । त्रयः स्वप्नाः । तानि त्रीणि स्थानानि सुखरूपहरिणा प्राप्यन्त इति स्वप्ननामकानि । तानावसथान्निर्दिशति । अयम् आवसथः अयम् अक्ष्याख्यः आवसथः एकः अयं कर्णदेश एक आवसथः अयं हृदयदेश एक इति त्रय आवसथा इति पूर्वेणान्वयः । स भगवान् जातः मत्स्यादिरूपेण प्रादुर्भूतः भूतानि सर्वभूतानि अभितः सर्वदेशकालेषु व्यैख्यत् विशेषेण पश्यत्येव । इह भूतेष्वन्यं मत्तोऽन्यं प्रवर्तकं वावदिषत् किं वदेत् किम् । किमित्याक्षेपे न वदेदेवेत्यर्थः । स भगवानेतमेव पुरुषं व्यासकृष्णादिरूपं स्वात्मानमेव ततमं अतिशयेन व्याप्तं ब्रह्म सर्वगुणपूर्णमपश्यत् । इदमदर्शमितीं सर्वं दृष्टवानिति । यस्मात् तस्मात् इदन्द्रो नाम । इदं दृष्टवानिति इदन्द्रः इत्यर्थः । इदन्द्रो नाम ह वै । तात्पर्यार्थं पुनर्वचनम् । इदन्द्रं सन्तं इदन्द्रनामानं परोक्षेण व्यवधानेन इन्द्र इत्याचक्षते देवाः परोक्षप्रियाः । अपरोक्षोपदेशे दैत्यानां सम्यग्ज्ञानं भवतीति परोक्षोपदेशप्रिया इव न तु सर्वथा परोक्षोपदेशप्रियाः । योग्येष्वरोक्षोपदेशेन अतिप्रीतिमत्वात् ॥ ३ ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायाम् ऐतरेयभाष्यटीकायां

द्वितीयप्रघट्टके चतुर्थोऽध्यायः ॥

# पंचमोऽध्यायः

## ऐतरेयोपनिषत्

॥ हरिः ॐ ॥ (अपक्रामन्तु गर्भिण्यः) ॥ पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति साऽस्यैतमात्मानमत्र गतं भावयति सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येतेषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयतेऽथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म तदुक्तमृषिणा–

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयम्[१] ॥

इति गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्मच्छरीरभेदादूर्ध्वं उत्क्रम्यामुष्मिन्त्स्वर्गे लोके सर्वान्कामानास्वाऽमृतः समभवत्समभवत् ॥ १ ॥ (यथास्थानं गर्भिण्यः) ॥

इत्यैतरेयोपनिषत्सु द्वितीयारण्यके पञ्चमोऽध्यायः ॥ २ ॥ ५ ॥

भा— अयं नारायणो देवः पुरुषे प्रथमं विशेत् ।
अन्नस्थोऽन्नेन सहितस्तस्मिन् रेतस्त्वमागते ॥

---

१. ऋ. २०/३९/१२

तस्मिन् स्थितं स्वरूपं स पुरुषस्थो बिभर्त्यजः ।
तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः ॥
स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः ।
प्रथमं जन्म विष्णोस्तु स तस्या अङ्गवत्प्रभुः ॥
नैनां हिनस्त्यानुकूल्यात्सा पुत्रं भावयत्यथ ।
पुत्रस्य भावना सैव तद्गत्वाद्धरिभावना ॥
सम्भावितव्या सा चैव भर्त्रा पुत्रश्च सादरम् ।
सम्भावनं कुमारस्य जानतः केशवे भवेत् ॥
तस्येत्यर्पणमात्रेण पूजितो हि भवेद्धरिः ।
पुत्रस्थस्य हरेः पूजां कुर्वतः पृथिवीस्थितिः ॥
स्वर्गस्थस्यापि भवति पुत्रपुण्यं यतोऽखिलम् ।
अत्यल्पपुण्यभाक्स स्यान्नार्चयेत्केशवं यदि ॥
पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि ।
एतद्रूपं निधायैव जीवार्थे धर्मकर्तवे ।
पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः ॥
पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः ।
अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम् ॥
सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम् ।
नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम् ॥
यो वेद देहबन्धात्स विमुक्तो नित्यमुत्तमान् ।
भोगान्भुङ्क्ते यथायोग्यमिति वेदानुशासनम् ॥

-इत्यैतरेयसंहितायाम् ।

नात्र जीवोत्पत्तिमात्रमुच्यते । न हि जीवोत्पत्तिमात्रपरिज्ञानादमृतत्वं भवति । ज्ञातमेव सर्वैः पितापुत्रसम्बन्धमात्रं पश्वादिभिरपि । 'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वे'त्युक्तार्थं उदाहृतमन्त्रे देवजन्मकथनाच्च । विष्णुर्हि परमो देवः । तेनैव सह सर्वेऽपि देवा

जीवदेहजनने जायन्त इव । शरीरप्राप्तिरेव हि जन्मान्येषामपि । अयमेव विशेषो देवानां दुःखाभोगः । स्वातन्त्र्यं च विष्णोः । आत्मन्येवात्मानं बिभर्ति आत्मानमेव तद्भावयतीत्याद्यात्मशब्दश्च मुख्यतो विष्णावेव युज्यते । णकारो बलं षकारः प्राण आत्मेति विष्णुशब्दार्थैकदेशवाचित्वाच्चात्मशब्दस्य । एतया द्वारा प्रापयतेति तस्यैव शरीरप्रवेशस्य प्रस्तुतत्वाच्च । जीवशरीरं परित्यज्यान्यत्रगमनमात्रं विष्णोरप्यस्तीति प्रैतीत्युक्तेऽप्यविरोधः । कृष्णराघवादिस्वरूपमेव ह्यसौ न परित्यजति[१] ।

कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहवदेव च ।
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ॥
येन रूपेण कंसादीन् जघ्ने तद्रूपमेव हि ।
पूज्यतेऽद्यापि शर्वाद्यैर्निर्मिताऽन्या शवाकृतिः ॥
स्वर्गारोहणकाले तु जनास्तेनैव मोहिताः ।
यत्तद्रूपं निजं विष्णोर्दृष्टं सर्वजनैर्भुवि ॥
अद्यापि तद्देवलोके पूज्यते सर्वदैवतैः ॥ -इत्यादि स्कान्दे ।
प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम्[२] ॥ -इति च भागवते ।

---

१. यतो न दर्शिता भ्रान्तिः प्रादुर्भावेष्वपि क्वचित् ।
देहत्यागानुकारेण हरिणा तदिहाच्युतः ॥
मोहित्वाऽसुरानन्धन्तमः प्रापयितुं प्रभुः ।
चिदानन्दैकदेहोऽपि त्यक्तं देहमिवापरम् ॥
सृष्ट्वा स्वदेहोपमितं शयानं भुव्यगाद्दिवम् ॥ इति म.भा.ता.नि. (३२/३३-३५)
जगतां मोहनार्थाय भगवान् पुरुषोत्तमः ।
दर्शयेन्मानुषीं चेष्टां तथा मृतकवद्विभुः ॥
प्रकाशयेददेहोऽपि मोहाय च दुरात्मनाम् ।
मायया मृतकं देहं तदा सृष्ट्वा प्रदर्शयेत् ॥
कुतो हि मृतकं तस्य मृत्यभावात् परात्मनः ।
- इति भागवततात्पर्योद्धृत(११/३१/१३)प्रमाणवचनम् ।

२. भा. ३/२/११

प्रेतां यज्ञस्य शम्भुवेत्यादिवत्प्रकृष्टगतिवाच्येवायं शब्दः । प्रकृष्टगतित्वादेव च मरणेऽपि प्रयुज्यते । एषामवेदमहमित्यत्रापि जीवभेद एवोक्तः । अन्यथा मम जनिमानीत्येवोच्येत । व्यर्थता चैषामित्यादि विशेषणानाम् । अवेदमित्यनेनैव स्वस्य सिद्धत्वादहमित्यप्यहेयत्वेनेति क्रियाविशेषणम् । जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामीत्यर्थः। तस्मादहं मनुरित्यादावत्यहेयगुणं भगवन्तमेवाहंशब्दो वक्ति। सर्वान्तरत्वात्तस्मिन्नेवाभवमित्युत्तमपुरुषशब्दोऽपि सर्वो वर्तते ।

अहेयत्वादहं[१] विष्णुः स तु सर्वान्तरत्वतः ।
अस्यस्तीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः ॥ -इति ब्रह्मवैवर्ते ।

न च मूढव्यापार एव वेदनिर्णयाय भवति । किं तु सर्वेषामनुभवो युक्तयश्च वाक्यान्तरं च निर्णयकारणम् । तस्मात्सर्वजीवादिभ्योऽन्यः सर्वोत्तमो विष्णुरेवात्रोक्तः ।

न वेदेषु पदं किञ्चिद्वर्णो वा व्यर्थ इष्यते ।
यथायोग्यं चार्थभेद ऊह्यः सर्वत्र वेदिभिः ॥ -इति शब्दनिर्णये ।
शब्दा रेतोऽन्नमित्याद्या अपि तत्र गतं हरिम् ।
वदन्त्यविष्णुवाची हि न शब्दः क्वचिदिष्यते[२] ॥ -इति च ।

---

१. अहंनामा हरिर्नित्यमहेयत्वात् प्रकीर्तितः ।
त्वं चासौ प्रतियोगित्वात् परोक्षत्वात् स इत्यपि ॥
सर्वान्तर्यामिणि हरावस्मच्छब्दविभक्तयः ।
युष्मच्छब्दगताश्चैव सर्वास्तच्छब्दगा अपि ॥
सर्वशब्दगताश्चैव वचनान्यखिलान्यपि ।
स्वतन्त्रत्वात् प्रवर्तन्ते व्यावृत्तेऽप्यखिलात् सदा ।
तत्सम्बन्धात्तु जीवेषु तत्सम्बन्धादचित्स्वपि ।
वर्तन्त उपचारेण तिङ्पदान्यखिलान्यपि ।
तस्मात् सर्वगतो विष्णुरेको(ऽ)भिन्न ततो बहुः ॥ - इति च नारायणश्रुतिः ।

२. सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता ।
अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिः ॥ इति कौर्मे (ब्रह्मसूत्रभाष्ये १/४/२९)

भावयति सम्भावयति । सोऽग्र एव सोऽग्र्यो विष्णुरेव । पुत्रसम्भावनमपि तत्रस्थं विष्णुं सम्भावयामीति तत्तस्यैव भवति । एवं भावयतामेवैष पन्था उरुगाय इत्याद्यपि । तं पश्यन्ति पशव इत्याद्यपि दिव्यपश्वादीनामेव । अन्येषां स्वभावप्रवृत्तिः । ता एव देवताः शतं पुर आयसीर्ज्ञानिन्यो विशेषतः । अय पय गताविति धातोः । मानुषानपेक्ष्य पूर्णत्वात्पुरः । विष्णुर्मुख्यत एव पूर्णः । न च शरीरैर्जीवो रक्षितः । मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः । शमस्य विद्यत इति शी विष्णुः पूर्णानन्दत्वात् । स एव ज्ञानत्वाद्यश्चेति श्यः । सोऽस्य जीवस्येन इति श्येनः । विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । निरदीयं निष्क्रम्यातीतोऽस्मि गर्भवासं स्वरानन्दो विष्णुरत्रग इति स्वर्गलोको विष्णुलोकः । अमृतः सन्सर्वान्कामानाप्त्वा तानेव सर्वान्कामान्समभवदनुभवति । अपेक्षितवस्तुस्वीकारः आप्तिः । सम्भवो भोगः तान्समभवत्ततो मनुष्या अजायन्तेत्यादिवत् । मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः । मुख्य एव चार्थः स्वीकार्यः । अमुक्तानां विष्णुलोकगानामपि न सर्वकामावाप्तिः । जयविजयादीनामप्रियदर्शनात् । अतोऽमृतः सन्सर्वान्कामानाप्त्वेत्यर्थः ।

मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेष्टतः ।
सर्वानपि निरातङ्कं सर्वदा च हरेर्वशः[१] ॥ -इति सत्तत्त्वे ॥ १ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये
द्वितीयप्रघट्टके पञ्चमोऽध्यायः ॥ २ ॥ ५ ॥

टी— पुरुषे ह वा इत्येतत् खण्डं व्याचष्टे । अयं नारायण इत्यादिना । आदितो गर्भो भवतीत्यस्य व्याख्या । प्रथमं विशेदिति । यदेतत् रेतः तदेतत्

---

१. मुक्ताश्चैवाधिकारस्था द्वेधा वैकुण्ठलोकगाः ।
अमुक्तानां भ्रमः क्वापि न मुक्तानां क्वचिद्भवेत् ॥
- इति भविष्यत्पुराणे (भागवततात्पर्ये ३/१६/१७)

सर्वेभ्योऽङ्गेभ्यस्तेजस्सम्भूतमात्मन्नेवात्मानं बिभर्तीत्येतद्व्याचष्टे । तस्मिन्निति । तस्मिन् स्थितं स्वरूपं स पुरुषस्थो बिभर्त्यजः इति । तस्मिन् रेतसि स्थितं स्वरूपं बिभर्ति तद्यदा स्त्रियां सिञ्चति अथैनं जनयतीत्येद्व्याख्याति । तद्रूपमिति । तदस्य प्रथमं जन्मेत्यस्यार्थः । तस्यैवेति । तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथेत्येतद्विवृणोति । स तस्य इति । अङ्गवत्तिष्ठतीति शेषः । तस्मादेनां न हिनस्तीत्यस्य व्याख्यानम् । नैनामिति । तस्मादित्यस्यार्थः । आनुकूल्यात् अङ्गवदनुकूलत्वादिति । साऽस्यैतमात्मानमित्यस्यार्थः । सेति । अथ सा पुत्रं भावयति । पुत्रो भवेदिति भावयति । तद्गतत्वात् हरेः तस्मिन् गर्भे स्थितत्वात् सैव पुत्रस्य भावना । पुत्रभावना हरिभावना । अनेन सा यत्कुमारं जन्मनो अग्रेऽधिभावयत्यात्मानमेव तद्भावयति इत्येतदुक्तार्थं भवति । सा भावयित्री भावयितव्या भवतीत्येतद्व्याचष्टे । सम्भावितव्येति । सैव सम्भावयित्री । पुत्रश्च गर्भगतो भावयितव्य इति शेषः । पुत्रस्य भावना तद्गतहरिभावनेत्युक्तम् । तन्न सर्वेषां किन्तु ज्ञानिनामेव इत्याह । सम्भावनमिति । कुमारस्य सम्भावनं जानतः तद्गं हरिं जानतः केशवे भवेत् । कृतमिति शेषः । पुत्रभावनायाः हरिभावनात्वप्रकारमाह । तस्येति । पुत्रसम्भावनां भगवत्पूजात्वेन आर्पयतः फलमाह । पुत्रस्थस्येति । पुत्रस्थस्य हरेः पूजां कुर्वतः स्वर्गस्थस्यापि पृथिवीस्थितिर्भवति । कुतः स्वर्गस्थस्यापि पितुः पुत्रपुण्यमखिलं भवति । यतः यदि पुत्रस्थं केशवं नार्चयेत् तर्हि अत्यल्पपुण्यभाक् स्यात् । तदस्य द्वितीयं जन्मेत्यस्यार्थमाह । पृथिव्यामिति । सोऽस्यायमात्मेत्यादि व्याख्या । एतद्रूपमिति । एतद्रूपं पुत्रगतरूपं जीवार्थे मृतपितुर्जीवार्थे धर्मकर्तवे धर्मकारणाय अथास्यायमितर आत्मेत्यादि व्याचष्टे । पितृस्थेनेति । स इतः प्रयन्नेव पुनर्जायत इत्यस्य विवरणम् । पितुरिति । स एवं विद्वानित्यादि फलवाक्यतात्पर्यमाह । अन्तर्यामितयेति । अस्मिन् खण्डे जीवोत्पत्तिरेवोच्यत इति यदपव्याख्यानं तदपाकरोति । नात्रेति । इतश्चात्र न जीवोत्पत्तिमात्रमुच्यत इत्याह । गर्भे न्विति । देवजन्मकथनात् न जीवजन्ममात्रमुच्यत इति भावः । कोऽयं देव इत्यत आह । विष्णुरिति । तर्हि देवानां जनिमानीति कथमित्यत आह । तेनैवेति । जायन्त इवेत्युपमार्थमाह ।

शरीरेति । अन्येषामपि जीवानामपि तर्हि मुख्यजन्मैव किं न स्यादित्यत आह अयमेवेति । देवानां पित्रादिशरीरादिप्रवेशादौ दुःखाभोगो जीवानां अयं विशेषो जीवेभ्यः । विष्णोः स्वातन्त्र्यं विशेषो देवेभ्यः इति शेषः । इतोऽप्ययं खण्डो भगवद्विषय एव मुख्यत इत्याह । आत्मनीति । विष्णावेव मुख्यस्यात्मशब्दस्यात्र श्रवणात् । आत्मशब्दस्य भगवति मुख्यत्वे युक्तिमाह । णकार इति । अतीताध्याये परमात्मनः शरीरप्रवेशस्य प्रस्तुतत्वाच्च अयमात्मशब्दो भगवद्विषय इत्याह । एतयेति । अत्रात्मशब्देन परमात्माङ्गीकारे प्रैतीति युक्तिविरोध इत्यत आह । जीवशरीरमिति । यदि शरीरं परित्यज्य चान्यत्र गच्छति परमात्मा प्राप्तं तर्हि तस्य मरणम् । शरीरत्यागस्यैव मरणत्वादित्यत आह । कृष्णराघवादीति । तत्र प्रमाणमाह । कृष्णो हीति । स्वर्गारोहणकाले अन्या शवाकृतिर्निमिता । तेन शवाकृतिदर्शनेन मोहिताः भगवान्मृतः इति मोहं प्रापिताः । अन्तर्धानमेव रामकृष्णादिरूपेषु न तु स्वदेहपरित्याग इत्यत्र प्रमाणमाह । प्रदर्श्येति । अतप्ततपसां नृणां लोकलोचनं स्वबिम्बं प्रदर्श्य तेषाम् अवितृप्तदृशां सतां स्वबिम्बमादायान्तरधादित्यन्वयः। प्रैतीत्यस्य गतिवाचित्वे उदाहरणमाह । प्रैतामिति । तर्हि मरणेन तत्प्रयोगो न स्यादित्यत आह । प्रकृष्टेति । ननु जीवब्रह्मणोरभेदात् जीवस्य मरणं न ब्रह्मणः इति कथमित्यत आह । एषामिति । पूर्वोक्तभेदप्रमाणसमुच्चयार्थोऽपिशब्दः । जीवभेदो जीवानां भेदः । जीवानां भेदोक्तौ जीवब्रह्मणोरपि भेदस्सिद्ध्यति । न हि परस्परभिन्नानाम् एकेन वस्तुना अभेदो युज्यते । एतद्वाक्ये जीवभेदस्याविवक्षितत्वे बाधकमाह । अन्यथेति । अन्यथा स्वस्य जीवेभ्यो भेदाभावे दूषणान्तरं चाह । व्यर्थता चेति । आदिपदेन देवानां मा रक्षन् इति गृह्यते । अहमित्यस्य वैय्यर्थ्यमाशंक्य परिहरति । अवेदमिति । अस्मिन् पक्षे योजनाप्रकारमाह । जन्मेति । अहंशब्दार्थो दुःखादिहेयरहितत्वेनेति । नन्वहंमनुरभवमित्यस्मिन् वाक्ये अहंशब्दस्य अस्मच्छब्दगतत्वात् अत्राप्यहं शब्दो अस्मच्छब्दगत एव स्यात् । अन्यथा प्रकरणविरोधप्रसंगादित्यत आह । तस्मादिति । अभवमित्यनेनैव अहमित्यस्य सिद्धत्वात् । यदि अहं शब्दो अस्मच्छब्दगतो न स्यात् तर्हि अभवमित्या-

द्युत्तमपुरुषानुपपत्तिरित्यत आह । सर्वान्तरत्वादिति । अन्तर्याम्यपेक्ष-योत्तमपुरुषप्रयोगः इति भावः। उक्तार्थे प्रमाणमाह । अहेयत्वादिति । अहमस्म्यादिशब्दानां लोकप्रसिद्धार्थ एव किं न स्यांदित्यत आह । न चेति ।

नात्र जीवोत्पत्तिमात्रमुच्यत इत्याद्युक्तमुपसंहरति । तस्मादिति । तस्मा-दुक्तयुक्तिसमुच्चयात् । गर्भे नु सन्नन्येषामिति वाक्यस्याभेदपरत्व-मंगीकृत्यैषामित्यादि विशेषणानां वैय्यर्थ्यांगीकारे किं बाधकमित्याशंकां सिंहावलोकनन्यायेन परिहरति । न वेदेष्विति । यदेतद्रेत इत्यत्र रेतश्शब्देन रेतसि स्थितो भगवानुच्यते इति व्याख्यातम् । रेतश्शब्दस्य भगवद्वाचित्वे प्रमाणमाह । शब्दा इति । साऽस्यैतमात्मानमत्रगतं भावयतीत्यत्र भावय-तीत्यस्यार्थमाह । सोऽग्र एवेति । स यत्कुमारजन्मनोऽग्रे अधिभावयति आत्मानमेव तद्भावयति इत्यस्य तात्पर्यमाह । पुत्रसंभावनेति । तत्पुत्र-सम्भावनमपि तत्रस्थं पुत्रस्थं विष्णुं सम्भावयामीति ज्ञाने सति तस्यैव भवति । तस्य विष्णोरेव भवति । उक्तन्यायमन्यत्रातिदिशति । एवमिति । एष पंथा उरुगाय इत्यादि फलमपि एवं भावयतां जानतामेव भवति । तं पश्यन्ति पशव इत्यादिना पशूनामपि गर्भस्थभगवत्सम्भावनारहितानां तद्दर्शनस्य विद्यमानत्वात् कथं भावयतामेवेत्यवधारणमित्यत आह । तमिति । पश्यन्तीति अज्ञानाम् अन्येषां स्वभावत एव प्रवृत्तिः । पुत्रसम्भावनादौ इति शेषः । शतं मा पुर आयसीरित्येतद्विवृणोति । ता एवेति । ताः पूर्वोक्ताः शतान्ता एव देवताः स्वभावप्रवृत्तिः आयसीरित्यस्य ज्ञानिन्य इत्यतोऽस्य धातुमाह । अय पयेति । शतं पुरः देहान् अरक्षन्नित्यस्य अर्थः किं न स्यादित्यत आह । न चेति । शरीरस्य जीवरक्षकत्वसद्भावात् । कुतो नेत्यत आह । मुख्य इति । श्येनशब्दार्थमाह । शमिति । शमस्यास्तीति शी ज्ञानरूपत्वाद्यः शी चासौ यश्चेति श्यः । श्य इनो यस्यासौ श्येनः । विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । सर्वान्कामनाप्त्वा अमृतः समभवदित्यस्य मुक्तविषयत्वमुपपादयति । मुक्त्य-नन्तरमिति । विष्णुलोकगतानां सर्वेषामपि सर्वकामभोगसद्भावात् कथं मुक्त्यनंतरमेव सर्वकामावाप्तिरुच्यत इत्यत आह । अमुक्तानामिति । कुतः जयविजयादीनामप्रियदर्शनात् । शापाद्यप्रियदर्शनात् मुक्त्यनन्तरमेवानु-पचरितसर्वकामावाप्तिरित्यत्र प्रमाणमाह । मुक्त इति ॥

अयं नारायणः आदितः प्रथमं पुरुषगर्भे अन्तर्गतो भवति । अन्नस्थो अन्नेन सहित इति शेषः । यद्यदा एतत् अन्नं रेतः रेतोरूपेण परिणमते तदेतद्रेतः सर्वेभ्योंऽगेभ्यः पुरुषस्य सर्वाङ्गेभ्यः सम्भूतं तेजः तेजोरूपं सारभूतमिति यावत् । तदाऽन्नस्थितो भगवान् रेतःस्थो भवति । आत्मानं रेतोगतस्वस्वरूपम् आत्मनि पुरुषगतस्वात्माधारतया बिभर्ति । तद्रेतोगतं स्वरूपं रेतसा साकं पुरुषस्थो भगवान् यदा स्त्रियां सिञ्चति । अथ अनन्तरम् एनद्रेतोगतस्वरूपं जनयति । मातृशरीरे प्रादुर्भावयति । तत् तस्मात् मातृशरीरावस्थानम् अस्य भगवतः प्रथमं जन्म । पितृशरीरान्मातृशरीरप्राप्तिरेव भगवतो जन्मेति भावः । तद्रेतोगतभगवत्स्वरूपं च स्त्रिया आत्मभूयं गच्छति । भगवत आत्मभूयं नाम स्त्रीगतलोहितगतस्वस्वरूपेणैकीभावः । रेतस आत्मभूयं स्त्रीशरीरेण संश्लेषविशेषः । स्त्रियाः स्वमङ्गं यथा तथा संश्लेषं प्राप्नोत्यात्मा तस्मात् संश्लेषविशेषेणानुकूल्यात् एनां स्त्रियं न हिनस्ति न हन्ति । सा स्त्री अस्य परमात्मनः एतमात्मानं स्वगर्भगतमेतत्स्वरूपं भावयति । सम्भावयति । आद्रियत इत्यर्थः । भावयित्री परमात्मस्वरूपमेवं भावयितव्या भवति । भर्त्रेति शेषः । तं स्त्रीगतं गर्भं बिभर्ति । स्त्रीगतः परमात्मा गर्भगतं स्वात्मानं बिभर्ति । सोऽग्र एव परमात्मा अग्र एव । तत्र तत्र स्थितोऽपि सर्वदा सर्व-गुणाग्र्य एव । जन्मनोऽग्रे पूर्वं जन्मैव अधिकत्वेन कुमारं पुत्रं भावयति सम्भावयति । पितेति शेषः । स पिता जन्मनोऽग्रे कुमारमधिभावयतीति यावत् । तत्तेन आत्मानमेव भावयति । पुत्रगतं परमात्मानमेव संभावयति । जानतः पुत्रसम्भावना परमात्मसम्भावना भवतीत्यर्थः । एषां लोकानां सन्तत्यै एव जनानाम् अव्युच्छेदाय भगवानेवं गर्भगतो भवतीति शेषः । इमे लोका एवमुक्तरीत्या भगवत्प्रादुर्भावेन सन्तता हि । अव्युच्छिन्नपरंपरा हि । तदस्य द्वितीयं जन्म । अस्य परमात्मनः तन्मात्रशरीरात् पृथिव्यां पुत्रगतरूपेण प्रादुर्भावो द्वितीयं जन्म । अस्य परमात्मनः अयमात्मा पुत्रगतस्वरूपं पुण्येभ्यः कर्मभ्यः जीवहिताय पुण्यकर्म कारयितुं प्रतिधीयते निधीयते । अत्रैवेति शेषः । अथास्य परमात्मनः अयमितरः वयोगतः आत्मा वयोगतपितृसन्निहित-परमात्मस्वरूपं प्रैति । प्रकर्षेण गच्छति । पितृशरीरं परित्यज्य पितृशरीराभि-मानिजीवं लोकान्तरं नयतीत्यर्थः । स पितृजीवः इतः प्रयन् गच्छन्

पुनर्जायते। स भगवान् तत्राभिव्यज्यते तन्नियामकत्वेन । तदेवंविधमन्यत्र जननं हरेस्तृतीयं जन्मेत्युपचर्यते । तदुक्तं ऋषिणा । गर्भेनु सन् गर्भे एव वर्तमानः । एषां विश्वे देवानां विश्वेषां देवानां जनिमानि जन्मानि । अहं दुःखादि हेयरहितत्वेन अवेदं ननु । आयसीः विशेषतो ज्ञानिन्यः पुरः पूर्णाः मनुष्यापेक्षया शतं शतं संख्याका देवताः मा माम् अरक्षन् । श्येनः सुखज्ञानरूपी विष्णुर्मम स्वामीति जानन् अहं जवसा वेगेन अधः निरदीयम् । अधस्तात् गर्भवासमतीत्य निर्गतोऽस्मीति ऋषिणोक्तमिति पूर्वेणान्वयः । गर्भे शयानो वामदेवः एतदेवमुवाच । सः य एवमुपासकः एवं विद्वान् अस्मात् शरीरभेदात् शरीरसम्बन्धादूर्ध्वमुत्क्रम्य ब्रह्मनाड्योत्क्रम्य अमुष्मिन् स्वर्गे लोके विष्णुलोके अमृतो मुक्तस्सन् सर्वान् कामान् आप्त्वा समभवत् सर्वदा अनुभवति ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायां ऐतरेयभाष्यटीकायां
द्वितीयप्रपाठके पंचमोऽध्यायः ॥

## षष्ठोऽध्यायः

ऐतरेयोपनिषत्

कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामोऽवश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्त्येष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि

जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रोऽलोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म स एतेन प्रज्ञेनात्मना-स्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभव-त्समभवत् ॥ १ ॥

इत्यैतरेयोपनिषत्सु द्वितीयारण्यके षष्ठोऽध्यायः ॥ २ ॥ ६ ॥

भा— अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः ।
इत्यपृच्छद्रमा देवी महिदासं जनार्दनम् ॥
आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति ।
उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः ॥
येन जीवो दर्शनादीन्प्रेरितः कुरुते सदा ।
यो विष्णुर्हृदयमिति हृद्गतत्वात्प्रकीर्तितः ॥
मन्तृत्वान्मन इत्येव यच्च ज्ञानस्वरूपतः ।
एतत्सन्निहितत्वाच्च पूर्णत्वादेति कीर्तित(म्)ः ॥
इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः ।
गुणानामुच्चयो यस्मात्स च इत्येवशब्दितः ॥
सम्यग्ज्ञानस्वरूपत्वात्संज्ञानमिति कीर्तितः ।
आततज्ञानरूपत्वादाज्ञानं भगवान्हरिः ॥
विविधज्ञानरूपत्वाद्विज्ञानमिति कीर्तितः ।
प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यते ॥
अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः ।
धृतिर्धारणरूपत्वान्मतिर्मासु ततत्वतः ॥
मनुनाम्नामजादीनां मनीषेशो यतो हरिः[1] ।
सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते ॥

---

१. मनवो बोधवैशेष्याद् देवा ब्रह्मादयः स्मृताः । (१०/६)
- गीतातात्पर्योद्धृत महाविष्णुपुराणवचनम् ॥

सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः[1] ।
समं रमत इत्येव स्मृतिर्नाम जनार्दनः ॥
सर्वस्य क्लृप्तिकर्तृत्वात्सङ्कल्प इति गीयते ।
क्रतुः स सर्वकर्तृत्वादसुरप्यसनाद्धरिः ।
अमेयानन्दरूपत्वात्काम इत्यभिधीयते ॥
अवशः स स्वतन्त्रत्वात् त्रयोविंशतिनामकम् ।
यो वेदैवं हरिं सम्यङ्मुच्यतेऽखिलसंमृतेः ॥
ब्रह्मा शिवश्च शक्रश्च देवाश्चान्ये समस्तशः ।
तथैव पञ्चभूतानि पुण्यपापविमिश्रिताः ।
क्षुद्रात्मानस्तु ये मर्त्या इतरे असुरा अपि ॥
सर्वं जगदिदं विष्णोर्वशे तिष्ठति सर्वदा ।
तेनैव नीयते नित्यं तस्मिन्नेव प्रतिष्ठितम् ॥
मुक्ता ये लोकनामानो नीयन्ते तेऽपि विष्णुना ।
स्वयं चानन्यनिष्ठत्वात्प्रतिष्ठेत्यभिधीयते ॥
देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।
विष्णोर्ब्रह्मेति नामैतन्मुख्यतोऽन्यत्र न क्वचित् ॥
सोऽलोकनामा मुक्तास्तु चितिमात्रस्वरूपतः ।
प्रकृष्टज्ञानरूपस्य प्रसादात्परमात्मनः ॥
अस्माद्देहात्समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम् ।
अमृतः सन्विष्णुलोके भोगान्सम्प्राप्य पुष्कलान् ॥
भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम् ॥

- इत्याद्यैतरेयसंहितायाम् ।

जानन्त्याऽपि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च कोऽयमात्मेति पृष्टः स भगवानाह । कतरः स आत्मेति । कतरः आनन्दतमः 'यत्रो-

---

१. सर्वदेशेषु कालेषु स एकः परमेश्वरः ॥ - इत्यणुभाष्ये ।

भयोः प्रयोगो न तत्रैकार्थौ तरप्तमौ' इति शब्दनिर्णये[१] । यत्प्रेरणादयं जीवो दर्शनादीन्करोति च । रमाब्रह्मादीनामपि तत्प्रेरितत्वात् । सर्वेषां दर्शनादिकारणत्वमेकैकमपि तस्य लक्षणं भवतीति वा शब्दः सर्वत्रानुषज्यते । प्रजापतिः शिवः लिङ्गाभिमानित्वात् ।

प्रजापतिः शिवः शेषो लिङ्गमित्यभिधीते ।
लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ॥ -इति शैवपुराणे ।
सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः ।
वाक्यं शिवस्य तत् श्रुत्वा शक्रो नेत्याह सत्वरः ॥ -इति भारते ।

क्षुद्रमिश्राणीव बीजानि शाल्यादिबीजवत् । भिन्नस्वभावा ब्रह्मादयः सर्वजीवाः ।

ब्रह्माद्याः सर्व एवैते जीवा भिन्नस्वभावकाः ।
यथा शाल्यादिबीजानि भिन्नवीर्याणि सर्वशः ॥ -इति सत्तत्वे ।

प्रथमेतराणीतिशब्दो मानुषाणां द्वितीयो सुरादीनाम् । प्रज्ञानेत्रोऽलोक इति । अलोकशब्देन मुक्तसमुदाय उच्यते । ब्रह्मादिस्थावरान्तस्य लोकस्य सर्वं तत्प्रज्ञानेत्रमिति विष्ण्वधीनत्वस्य पूर्वमेवोक्तत्वात्पुनः प्रज्ञानेत्रोऽलोक इति मुक्तविषयमेव । मुक्तो ह्यलोक्यत्वादलोकः । अण्डजानि चेत्याद्युक्त्वा पुनरश्वा गाव इत्यादि देवादीनां मन आदेरेव जातानामपि स्वीकारार्थम् । अण्डजत्वाद्युत्पत्तिप्रकारोऽपि विष्ण्वधीन इति ज्ञापयितुं तत्कथनम् । 'तथाऽश्मानस्तृणकाष्ठाश्च सर्वे दिदृक्षये स्वां प्रकृतिं भजन्ते' इति भारतवचनादश्मादीनामपि प्राणित्वात्तत्स्वीकारार्थं प्राणीति । गमनपतनस्थिरत्वादयोऽपि भावा[२] विष्ण्वधीना इति ज्ञापयितुं जङ्गममित्यादिवचनम् । स एतेनेत्यलोकशब्दोक्तो मुक्तः परामृश्यते ।

१. एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ (गी. १२/१) इतिवत् ॥
२. भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ इति गी. १०/५.

सकलकर्मबन्धमुक्त्यनन्तरं हि शरीरादुत्क्रामति। प्रकृष्टज्ञानरूपेण विष्णुना प्रेरितः प्रज्ञेनात्मनैवोत्क्रम्य तेनैव सर्वान्कामानाप्त्वा तेनैव सर्वान्कामान्स भुङ्क्त इति सर्वत्रानुषज्यते। प्रज्ञानेत्रोऽलोक इत्युक्ते कथं प्रज्ञानेत्रो मुक्त इत्याकाङ्क्षायां तस्यैव व्याख्यानं स एतेन प्रज्ञेनात्मनेत्यादि। अनुक्तविशेषणानामपि भगवदधीनत्वज्ञापनार्थं प्रज्ञानेत्रो लोक इति सामान्यवचनम्।

अनारब्धफलानां च प्रारब्धानां च सर्वशः।
कर्मणां दाह एवायं मुक्तिरित्यभिधीयते॥
स तु मुक्तस्ततो देहादुद्गच्छति परात्मना।
प्रेरितो विष्णुलोकं च प्राप्य भोगानवाप्य च॥
भुङ्क्ते विष्णुप्रसादेन न विष्णोरवशः क्वचित्।
विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिलाः॥ -इति ब्रह्माण्डे।

ब्रह्मेन्द्रादिशब्दा विष्णावेव मुख्यत इति तद्व्यावृत्त्या जीवानां स्वीकारार्थमेष इत्यादिशब्दः। स हि भगवान्स्वनेत्रकोऽपि नानुग्राह्यः। अनुग्राह्यत्वं हि ब्रह्मादीनामत्र विवक्षितम्। 'नेयताऽनुग्राह्यताऽपि न सा विष्णोः स्वतोऽपि त्वि'ति शब्दतत्त्वे॥ १॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेतोपनिषद्भाष्ये द्वितीयप्रघट्टके षष्ठोऽध्यायः॥

टी— कोऽयमात्मेत्येतत्खण्डं व्याचष्टे। अयं विष्णुरित्यादिना। कोऽयमात्मेति वयमुपास्महे इति प्रश्नवाक्यं विवृतं भवति। कतर आत्मेति परिहारवाक्यं व्याचष्टे। आह तामिति। तादृशो ह्यस्य स्वभावः परमात्मन इत्यनेन स आत्मेति परामर्शविषयस्वरूपमुक्तं भवति। येन वा पश्यतीत्यादि विवृणोति। येनेत्यादिना। यदेतदित्यादित्रयोविंशतिनामार्थमाह। यो विष्णुरित्यादिना। ज्ञातृस्वरूपतः यत् यदित्युच्यते। सन्निहितत्वादेतदित्युच्यते। पूर्णत्वात् आ इति कीर्तितः। इति तदिति नाम यस्य स इतन्नामेत्यर्थः। स

भगवान् च इतिशब्दितः । भगवान् गुणानामुच्चयः गुणसमूहरूपः प्रकृष्टात्मकं च भगवद्गुणरूपं च ज्ञानं स्वरूपं यस्य सः । प्रकृष्टत्मगुणज्ञानरूपः । मासु प्रमाणेषु ततत्वतः नियामकत्वेन प्रतिपाद्यत्वेन चेति शेषः । ज्ञानित्वात् मनुनाम्नामजादीनां ईशो यतोऽतो मनीषा । मनीषानामकः । असनादसुः असुनामा । कं सुखम् अमं अमितं यस्यासौ कामः । न वशः अवशः । एष ब्रह्मैष इंद्र इत्यादिव्याचष्टे । ब्रह्मेति । ब्रह्मा चतुर्मुखः । एष प्रजापति-रित्यस्यार्थः । शिव इति । इमानि च क्षुद्रमिश्राणीव बीजानीत्यस्यार्थः । क्षुद्रात्मान इति । इतरे असुराः इति द्वितीयेतरशब्दार्थः । सर्वं तत्प्रज्ञानेत्रमित्यस्यार्थो । विष्णोर्वशे तिष्ठतीति । तेनैव नीयत इति । प्रज्ञाने प्रतिष्ठितमित्यस्यार्थः । तस्मिन्नेव प्रतिष्ठितमिति प्रज्ञानेत्रो लोक इत्येतद्विवृणोति । मुक्ता इति । प्रज्ञा प्रतिष्ठा इत्यस्यार्थो स्वयं चानन्यनिष्ठत्वात् अनन्याश्रयत्वात् प्रतिष्ठेति । मुक्ते अलोकप्रवृत्तिनिमित्तं वदन्नेव । तेन प्रज्ञेनात्मनेत्यादि फलवाक्यं व्याचष्टे । सोऽलोकनामेति । चितिमात्रस्वरूपेण स्वरूपत्वेन लोकविलक्षणत्वात् अलोकनामा मुक्त इत्यर्थः । कोऽयमात्मेति वयमुपास्महे कतरः स आत्मेति प्रश्नपरिहारवाक्ययोस्तात्पर्यमाह । जानान्त्याऽपीति । कतर इत्यस्य कतम इति व्याख्यानं कथमि-त्यतस्तदुपपादयति । यत्रेति । यत्र वाक्ये उभयोर्मिलितयोः प्रयोगो नास्ति तत्र वाक्ये तरप्तमावेकार्थौ । येन वा पश्यतीति विवृणोति । यत्प्रेरणादिति । रमादीनामपि दर्शनादिकर्तृत्वात् कथं विष्णोरेवैतदित्यत आह । रमेति । सर्वदर्शनादिकर्तृत्वं विष्णोरेवेति भावः । सर्वत्र वाशब्दानुषङ्गस्य प्रयोजनमाह । सर्वेषामिति । एष प्रजापतिरित्यत्र प्रजापतिशब्दार्थमाह । प्रजापतिरिति । क्षुद्रमिश्राणीव बीजानीत्येतदनूद्य इव बीजानीत्यस्यार्थमाह । क्षुद्रमिश्राणीति । इव बीजानीत्यनेन शाल्यादिबीजदृष्टांतेनोक्तस्वभावत्वम् एष ब्रह्मेत्यारभ्योक्त-देवानामितराणि चेतराणि चेत्युक्तदेवमनुष्याणामसुराणां च विशेषणमित्युक्तं भवति । अतः प्रमाणस्ववाक्ययोर्न विरोधः । प्रज्ञानेत्रो लोक इत्यत्र अलोक इति पदविभागं दर्शयन्नेव तदर्थमाह । प्रज्ञानेत्र इति । तदुपपादयति । ब्रह्मादीति । अलोक्यत्वात् संसारिभिरिति शेषः । अश्वा गाव इत्यादे-र्वैय्यर्थ्यमाशंक्य परिहरति । अण्डजानीति । तर्हि अश्वा गाव इत्याद्येवालम्

अण्डजानीत्यादि व्यर्थमित्यत आह । अण्डजत्वादिति । जंगमं च पतत्रि चेत्यनेन प्राणिनामपि गृहीतत्वात् प्राणिशब्दो व्यर्थ इत्याशंक्य शिलादीनामपि प्राणित्वात् तत्स्वीकारार्थं तदित्यभिप्रेत्य शिलादीनां च प्राणित्वे प्रमाणमाह । तथेति । एवं तर्हि स्थावरजङ्गमात्मकस्य सर्वस्य जगतः प्राणिशब्देन गृहीतत्वात् पृथक्जङ्गममित्यादि ग्रहणं व्यर्थमित्यत आह । गमनेति । स एतेन प्रज्ञानेत्यत्र स इति परामर्श्यविषयं दर्शयति । स एतेनेति । परामर्शस्य मुक्तविषयत्वज्ञापकमाह । सकलेति । प्रज्ञेनात्मना अस्मात् लोकादुत्क्रम्य इत्यत्रोत्क्रान्तिमात्रं भगवदधीनं नान्यदिति प्रतीतिनिरासाय यथावद्व्याचष्टे । प्रकृष्टेति । सर्वत्रानुषज्यते प्रज्ञेनेति पदमिति शेषः । प्रज्ञानेत्रोऽलोक इत्यनेनैव मुक्तस्य भगवदधीनत्वस्योक्तत्वात् पुनः स एतेन प्रज्ञेनात्मनेति व्यर्थमित्याशंक्य पूर्वोक्तस्य व्याख्यानरूपत्वात् न वैय्यर्थमित्याह । प्रज्ञानेत्र इति । तर्हि प्रज्ञेनात्मनेत्यलं प्रज्ञानेत्रोऽलोक इति पूर्ववाक्यं व्यर्थमित्यत आह । अनुक्तेति । उत्क्रांतस्यैव मुक्तत्वात् कथं स एतेन प्रज्ञेनेत्यत्र मुक्तं परामृश्य तस्योत्क्रमणमुच्यत इत्याशंकां प्रमाणेन परिहरति । अनारब्धेति । प्रारब्धानां प्रारब्धफलानां स तु मुक्तः प्रारब्धाप्रारब्धकर्मदाहाख्यमुक्तिं प्राप्तः । एष ब्रह्मेत्यादौ ब्रह्मादिजीवानामेव इति प्रस्तुतपरमात्मैक्यमुच्यत इत्यन्यथा-प्रतीतिनिरासाय एष इति निर्देशविषयं दर्शयति । ब्रह्मेन्द्रादीति । अनेन एष इत्यादिना निर्देशो न परमात्मविषयः किं तर्हि ब्रह्मादिशब्दानाम् अमुख्यार्थतया प्रसिद्धचतुर्मुखादिविषय एवेत्युक्तं भवति । अवश इति भगवतः स्वनि-यतत्वमुक्तम् । भगवन्नियतत्वं च ब्रह्मादीनां भगवतश्च सममिति भगवतो ब्रह्मादिसाम्यं स्यादित्यत आह । स हीति । ब्रह्मादीनां भगवन्नियतत्वं भग-वदनुग्राह्यत्वम् । न च भगवतो भगवदनुग्राह्यत्वमस्तीति न ब्रह्मादिसाम्यमिति भावः । अनुग्राह्यत्वमेव ज्ञेयत्वमित्यत्र प्रमाणमाह । नेयतेति । स्वतः स्वेनानुग्राह्यत्वमपि शब्दात् परतोऽनुग्राह्यत्वमपि नास्तीत्यर्थः ॥

अयमात्मा प्रकृतः परमात्मा क इति किंगुणविशिष्टः इति वयमुपास्महे इति रमायाः प्रश्नः । भगवतः परिहारप्रकारमाह । कतर इति । कतरः कतमः परिपूर्णानंदः उपास्यः सम्पूर्णानन्द आत्मा स्वभावः परमात्मन इति शेषः । न

केवलं पूर्णानन्दत्वेनोपास्यः किन्तु सर्वदर्शनकर्तृत्वादिलक्षणविशिष्टतया चोपास्य इति तल्लक्षणान्याह । येन वा पश्यतीत्यादिना । प्रत्येकं वा शब्दानुषङ्गः । पृथग्लक्षणत्वज्ञापनार्थः । जीवो येन यत्प्रेरणया पश्यतीत्यत्रापि सर्व-दर्शनकतृत्वादिपञ्चलक्षाणानीत्युक्तं भवति । तस्य नामान्याह । यदित्यादिना । ज्ञातृत्वात् यत् । सन्निहित्वादेतत् । हृद्गतत्वात् हृदयम् । मन्तृत्वान्मनः । सर्वगुणसमुच्चयरूपत्वात् चः । पूर्णत्वात् आ । इतत्वात् ततत्वाच्च इतत् । सम्यज्ञानस्वरूपत्वात् संज्ञानम् । आततज्ञानस्वरूपत्वात् आज्ञानम् । द्विविधज्ञानरूपत्वात् विज्ञानम् । प्रकृष्टज्ञानरूपत्वात् प्रज्ञानम् । अविस्मृत-ज्ञानरूपत्वात् मेधा । दर्शनरूपत्वात् दृष्टिः । धारणरूपत्वात् धृतिः । मासु प्रमाणेषु ततत्वान् मतिः । मनूनां ब्रह्मादीनामीशत्वात् मनीषा । सर्व-प्रेरणकतृत्वात् जूतिः । सर्वेषु देशकालेषु स्वरूपेषु च समं रमत इति स्मृतिः । सर्वक्लृप्तिकर्तृत्वात् संकल्पः । सर्वकर्तृत्वात् क्रतुः । असनात् असुः । अमितानंदरूपत्वात् कामः । स्वतन्त्रत्वात् अवशः । इति एतानि यदादीनि त्रयोविंशतिनामानि प्रज्ञानस्य नामधेयानि भवन्ति । एष ब्रह्मा चतुर्मुखः । एष इन्द्रः पुरन्दरः । एषः प्रजापतिः शिवः । एते सर्वे देवाः । इमानि पञ्चमहाभूतानि च । तानि कानीत्याशङ्कायां पृथिवीवायुराकाश आपो ज्योतीषीत्येतानि क्षुद्रमिश्राणि । अल्पा क्षुद्राः मिश्राणि पुण्यपापमिश्राः । इमानीतराणि एते मनुष्याः इतराणि च असुराश्चेति सर्वे बीजानीव शाल्यादिबीजानि । यथा भिन्नस्वभावानि तथा ब्रह्मादयस्सर्वेऽपि भिन्नस्वभावाः अण्डजानि अण्डं भित्वा जातानि । जारुजानि जरायुजानि । स्वेदजानि स्वेदाज्जातानि यूकादीनि । उद्भिज्यानि भुवं भित्वा जातानि । तृणादीनि देवानां मनआदिभ्यो जाता अश्वा गावः पुरुषा हस्तिनश्च । यत्किञ्चेदं प्राणिशिलादार्वादि जङ्गमं पतत्रि च यच्च स्थावरं तत्सर्वं प्रज्ञानेत्रम् । प्रकृष्टज्ञानरूपकपरमात्मनेतृकम् । प्रज्ञाने प्रतिष्ठितं प्रज्ञानाधारतया स्थितम् । अलोक्यत्वादलोकः मुक्तवर्गः । प्रज्ञानेत्रः प्रज्ञा प्रतिष्ठा प्रज्ञानरूपो भगवानाधारः । प्रज्ञानं ब्रह्म परिपूर्णं स एवंवित् कर्मबन्धविमुक्तः । एतेन प्रज्ञेनात्मना प्रज्ञानरूपपरमात्मानुग्रहेण अस्माल्लोकात् शरीरात् उत्क्रम्य ब्रह्मनाड्या निर्गत्य अमुष्मिन् स्वर्गे लोके विष्णुलोके सर्वान् कामान् आप्त्वा

परमात्मानुग्रहेण सर्वान् कामान् आप्त्वा अमृतः परमात्मानुग्रहेण मुक्तः समभवत् । परमात्मानुग्रहेण सर्वान् कामान् अनुभवति ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायां ऐतरेयभाष्यटीकायां
द्वितीयप्रघट्टके षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः

ऐतरेयोपनिषत्

॥ हरिः ॐ ॥ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रात् संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु माम् अवतु वक्तारम् ॥ १ ॥ २६ ॥

॥ इत्यैतरेयोपनिषत्सु द्वितीयप्रघट्टके सप्तमोऽध्यायः ॥ २ ॥ ७ ॥

भा— वाङ्मे मनसि प्रतिष्ठिता । अवबोधरूपे विष्णौ प्रतिष्ठिता स च विष्णुर्मे वाचि स्थितः । यदेतद्धृदयं मनश्चेति विष्णुनामधेयेषूक्तत्वात् । आविराविर्म एधि हे विष्णो ममाविराविर्भव । आणीस्थित आण्यां स्थित विष्णो इति संबोधनम् ।

आधारः सर्ववेदानां वेदाणी प्राण उच्यते ।
तस्मिन् स्थितो हरिर्नित्यमाणीस्थ इति गीयते ॥ -इति शब्दतत्त्वे

आविरावीरिति दैर्घ्यमतिशयार्थे । आधिक्येऽधिकमितिसूत्रात्[1] । अणशब्दस्य गतिवाचित्वाचलमाणमुच्यते । तस्य धारणेन तद्वानाणी ।

---

१. अधिक्येऽधिकमित्येव हरिणा सूत्रमीरितम् ॥ इति ऋग्भाष्ये (१/८४)
आधिक्येऽधिकमिति सूत्रात् अर्थाधिक्ये विवक्षितेऽधिकं शब्दरूपं भवतीति 'कृत्वी' देवैर्निकिल्बिषम्' । हत्वी दस्यूनिति पूर्वा वर्णविकाराश्च प्रोक्ताधिक्यविवक्षया प्रयुक्ता ज्ञातव्याः ॥ - इति तट्टीका ।

स्थापक इत्यर्थः । मे श्रुतं मा प्रहासीः । मम विद्यागोचर एव सर्वदा भव । विस्मृतो मा भव । हे विष्णो अनेन त्वद्विषयेणैवाधीते-नाहोरात्रान्सन्दधामि । सर्वाहोरात्रेष्वपि त्वद्विषयाध्ययनमेव करोमीत्यर्थः। ऋतं यथावदवगतं त्वां वदिष्यामि । सत्यं साधुगुणैस्ततं सर्वनियन्तारं च । तद्विष्ण्वाख्यं ब्रह्म मामवत्विति तस्यैव विष्णोः परोक्षत्वेनैव प्रार्थनम् ।

वाङ्म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम् ।
अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान्हरिः ॥ इति च ॥ १ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये
द्वितीयप्रघट्टके सप्तमोऽध्यायः ॥ २ ॥ ७ ॥

टी— वाङ्मे मनसीत्येतत्खंडं व्याचष्टे । वाङ्मे मनसीत्यादिना । वाक् वागिन्द्रियं मे मनसीत्यस्यार्थो । अवबोधरूपे विष्णाविति । मनसि मनसिस्थिते अवबोधरूपत्वात् मनोनाम्नि विष्णौ मनोनाम्नो विष्णोः प्रकृतत्वं दर्शयति । यदेतदिति । आविराविर्भवात्यन्तं प्रकटो भव । आणीस्थशब्दार्थमाह । आणीस्थितेति । आणीस्थ इत्यस्य प्रतिपदम् आणीस्थितेति । वेदस्य आणीस्थेति पदस्यार्थं प्रमाणेनाह । आधार इति । आणीशब्दं मुख्यप्राणे निर्वक्ति । अणशब्दस्येति । अणशब्दो गतिवाची । अणगताविति धातोः । तस्माच्चलमाणमित्युच्यते । चलस्य धारणेन तद्धानाणी किमुक्तं भवति । चलतः स्थापकः आणीशब्दोक्त इति भावः । वेदस्याणी वेदाधारो मुख्यवायुः । मे श्रुतं शास्त्रश्रवणजनितविद्याम् । मा प्रहासीः मा मुंच । तस्याभिप्रायमाह । ममेति । खण्डार्थे प्रमाणमाह । वाङ्म इति ॥

मे वाक् मनसि अवबोधरूपे विष्णौ प्रतिष्ठिता । मनो मनोनामकं ब्रह्म मे वाचि प्रतिष्ठितं मे आविरावीर्म एधि अतिप्रकटो भव । मे वेदस्य आणीस्थ मदधीयमानवेदाधारश्रीमुख्यवायुस्थित मे श्रुतं मा प्रहासीः । मम विद्यां मम शास्त्रश्रवणजनितविद्यां मा मुञ्च । सर्वदा मम विद्याविषयो भव । विस्मृतो मा भवेत्यर्थः । अनेनाधीतेन त्वद्विषयेणैवाधीतेन अहोरात्रान् सन्दधामि । सर्वा-

होरात्रेषु त्वद्विषयमध्ययनमेव करोमि । ऋतं यथावगतं वदिष्यामि सत् साधुगुणैस्ततं यं नियन्तारम् इति सत्यं सत्यनामानं वदिष्यामि वदेयम् । तद् ब्रह्म माऽवतु तद्ब्रह्म प्रवक्तारं स्वस्वरूपप्रतिपादकमवतु । अवतु मामिति पुनर्वचनं तात्पर्यार्थम् ॥

॥ इति श्रीविश्वेश्वरतीर्थविरचितायाम् ऐतरेयभाष्यटीकायां
द्वितीयप्रघट्टके सप्तमोऽध्यायः ॥

॥ द्वितीय प्रघट्टकः सम्पूर्णः ॥

॥ अथ तृतीयारण्यकम् ॥

## प्रथमोऽध्यायः

### ऐतरेयोपनिषत्

॥ हरिः ॐ ॥ अथातः संहिताया उपनिषत्पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुस्संहितेति माण्डूकेयः आकाशः संहितेत्यस्य माक्षव्यो वेदयांचक्रे स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति । समाने वै तत्परिहृतो मेन इत्यागस्त्यः । समानं ह्येतद्भवति वायुश्चाकाशश्चे-त्यधिदैवतमथाध्यात्मम् । वाक्पूर्वरूपं मन उत्तररूपं प्राणस्संहितेति शूरवीरो माण्डूकेयोऽथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तर-रूपं मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति । समानमेनयोरत्र पितुश्च पुत्रस्य च । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेतीति नु माण्डूकेयानाम् ॥ १ ॥

भा— विष्णुनाम्नि षकारस्य णकारस्य च संहिताम् ।
विष्णोस्तु बहुरूपाणां वाचिकामृषयो विदुः ॥
तौ च वर्णौ हरेः सम्यक्स्वरूपप्रतिपादकौ ।
बहुधैव स्थितस्यास्य सदैवैकस्वरूपिणः ॥
विष्णुनामार्थरूपत्वाद्वेदानामपि सर्वशः ।
अन्येषामपि शब्दानां संहिता विष्णुवाचिकाः ॥
तद्वाचकास्तथा वर्णाः सर्वे लौकिकवैदिकाः ।
पृथिवीनामकं रूपं पृथुत्वात्पृथिवीस्थितम् ॥
देवता पूर्ववर्णस्य पूर्वरूपं तदुच्यते ।
देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम् ॥
दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते ।
वेदकत्वाच्चायनत्वाद्रूपं यद्वायुनामकम् ॥
विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम् ।
संहितानामकं तच्च रूपद्वयसहस्थितेः ॥
वर्णद्वयं विकारं च षकारं केचिदब्रुवन् ।
षकारं मध्यमत्रैव णकारं केचिदुत्तरम् ॥
पृथक्करणमेवैषां वर्णयोर्मध्यमुच्यते ।
उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम् ॥
षकारं च णकारं च वर्णौ पूर्वोत्तरावपि ।
व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते ॥
सर्वेऽप्येत उपादेयाः पक्षा निर्दोषका यतः ॥

-इत्याद्यैतरेयसंहितायाम् ।

आकाशस्थ आकाशनामा भगवान्वर्णयोर्मध्यदेवतेति माक्षव्यः । उभयरूपसंहित्वात्संहितानामकः । स माण्डूकेयस्तेन माक्षव्येनापरिहृतः स्वपक्ष इति मेने । मे मदीयेन मदुपासितेनास्याकाशस्य पुत्रेण वायुना न समागादसौ मक्षव्यः। वायुस्थविष्ण्वनुपासनात्। यद्यप्याकाशस्थो

भगवान्संहितानामको भवति । तथापि न वायुस्थस्यासंहितात्वं भवतीत्यपरिहृतत्वम् । परिहृतो माण्डूकेयपक्ष इत्यहं मेन इत्यागस्त्यः । आकाशे विष्णूपासनस्याधिकफलत्वात् । पिता ह्याकाशो वायोः । भगवतस्तु पक्षः समत्वमेव वाय्वाकाशयोरिति । आकाशस्य पितृत्वाद्वायोर्बलाधिकत्वाच्चोभयोरुपासनास्थानत्वे साम्यम् । तस्मादुभावपि ग्राह्यौ । त्वगिन्द्रियदेवतात्वेनाकाशात्पूर्वमेव वायोः सात्विकाहङ्कारजत्वाद्वायोराकाशाद्गुणाधिकत्वम्

मनोवाक्प्राणनामाऽसौ मन आदिषु संस्थितः ।
विष्णुस्तस्य रथो देह इन्द्रियाश्वः प्रकीर्तितः ॥ -इति च ।

प्रष्टिः स पृच्छनीयत्वात्परमात्मा जनार्दनः ।
वक्तृत्वाच्चैव वाङ्नामां मनो मन्तृत्वहेतुतः ॥ -इति च ।

'प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैव तानि कर्मनामान्येवे'ति च श्रुतिः । मुक्तिरेव स्वर्गलोकः । अमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वेति प्रस्तुतत्वात् ।

मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा ।
नित्यायुषा च युक्तः स्यात्संहितारूपविद्वरेः ॥ -इति च ।

प्रकृष्टत्वेन जननात्प्रजेति ज्ञानम् । पान्ति शंसाधनाश्चेति पशवो वेदाः । परब्रह्मणो विष्णोर्वरणादेव सम्यकूचायितं स्वरूपं तेजः ब्रह्मवर्चसम् । लौकिकप्रजादिकमपि तदिच्छतां यथायोग्यं भवति । माण्डूकेयैर्ऋषिभिरुपाश्रिता एता विद्याः ॥ १ ॥

टी— अथातः संहिताया उपनिषदित्येतत्खण्डं व्याचष्टे । विष्णुनाम्नीत्यादिना । किंविषयेयं संहिता इत्यत आह । विष्णुनाम्नीति । अनेन विष्णुनामगतणकारषकारयोः सन्धिदेवतात्रोच्यत इत्युक्तं भवति । उपलक्षणमेतत् । णकारषकारदेवतेऽप्युच्येते इति भावः । ऋषयो मांडूकेयादयः तौ वर्णौ

षकारणकारौ च । न केवलं संहिता तौ वर्णौ च हरेः स्वरूपप्रतिपादकौ । कथंभूतस्य हरेः बहुधेव स्थितस्य सर्वशो वेदानाम् अन्येषां शब्दानामपि विष्णुनामार्थरूपत्वात् संहिताः तद्गतसंहिता अपि विष्णुवाचकाः तथा लौकिकवैदिकाः सर्वे वर्णाः तद्वाचकाः । णकारषकारार्थवाचकाः । पृथिवी पूर्वरूपं द्यौरुत्तररूपमित्यादि व्याचष्टे । पृथिवीनामकमिति । पूर्ववर्णस्थितरूपं पूर्वरूपम् । उत्तरवर्णदेवता द्युनामकं रूपम् उत्तररूपमुच्यते । रूपद्वयसहस्थितेः पूर्वोत्तरवर्णदेवतारूपद्वयेन सहस्थितत्वात् संहितानामकम् । विष्णुनाम्नि वर्णद्वयम् । ऋषिमतभेदेन विविच्य दर्शयति । वर्णद्वयमिति । केचिद्वर्णद्वयं विकारं षकारं चाब्रुवन् । णकारः षकार एवान्तर्भूतमिति तेषां पक्षः । अत्र केचित् पूर्ववर्णं विकारमाहुः । उत्तरवर्णं णकारमाहुः । षकारं मध्यवर्णमाहुः । एषां पक्षे वर्णयोः पूर्वोत्तरवर्णयोः पृथक्करणमेव असंश्लिष्टतयोच्चारणमेव मध्यमित्युच्यते । यदा नाम ष्णुमात्रकं तदा षकारं च णकारं च पूर्वोत्तरौ वर्णावाहुः । ऊष्मणः षकारस्य व्यक्तिर्व्यक्ततया कथनं मध्यमुच्यते । एवं बहुविधेषु पक्षेषु कतमः पक्षः उपादेय इत्यत आह । सर्वेऽपीति । आकाशः संहितेत्यस्यार्थमाह । आकाशस्थ इति । स ह्याविपरिहृतो मेन इत्येतद्व्याचष्टे । स माण्डूकेय इति । आविपरिहृतो अनिराकृतः । अनेन स इति माण्डूकेयः परामृश्यत इत्युक्तं भवति । न मेऽस्य पुत्रेण समगादित्यस्यार्थमाह । मे मदीयेनेति । वायुना वायुस्थविष्णुना न समागात् संगतो नाभूत् कुत इत्यत आह । वायुस्थेति । आकाशस्थ विष्णुः संहितेति माक्षव्य उपास्ते । वायुस्थविष्णुः संहितेति माण्डूकेय उपास्ते । एवं च सति माक्षव्येन माण्डूकेयपक्षः कथम् अपरिहृत इत्यतो अपरिहृतत्वमुपपादयति । यद्यपीति । यद्यप्याकाशस्थो विष्णुः संहितेति माक्षव्यो मन्यते । तथापि वायुस्थविष्णुः संहिता न भवतीति तेनानुक्तत्वात् माण्डूकेयस्तेन माक्षव्येनापरिहृतः स्वपक्ष इति मेने । अनेन समाने वै तदित्यस्य तात्पर्यमुक्तं भवति । परिहृतो मेन इति आगस्त्य इत्येतद्व्याचष्टे । परिहृत इति । परिहृतत्वमुपपादयति भाष्यकारः । आकाश इति । अधिष्ठानगुणाधिक्यात् । गुणाधिक्यमुपपादयति । पितेति । समानं ह्येतद्भवति वायुश्चाकाशश्चेत्येतद्व्याचष्टे । भगवतस्त्विति । आकाशवाय्वोः साम्यमुपपादयति । आकाशस्येति । फलितमाह । तस्मादिति । प्रकारान्तरेण

साम्यमुपपादयति । त्वगिति । समानमेनयोरत्र पितुश्च चेत्यतद्व्याचष्टे । अत्रेति । एनयोः शूरवीरमाण्डूकेयस्य तज्ज्येष्ठपुत्रस्य च अन्यत्र तु पूर्वोत्तरवर्णदेवता विषये । मनसा अग्रे सङ्कल्पयति । अथ वाचा व्याहरतीति युक्तिमत्वात् । स एषो अश्वरथः । प्रष्टिवाहनो मनोवाक्प्राण इत्येतद्व्याचष्टे । मन इति । मन आदिषु संस्थित इत्यनेन मनोवाक्प्राणः संहितेत्येतदुक्तार्थं भवति । वाङ्मनः प्राण इत्यादि शब्दवाच्यत्वे प्रमाणांतरमाह । प्राणन्निति । स्वर्गेण लोकेनेत्यत्र स्वर्गशब्दार्थमाह । मुक्तिरेवेति । तत्र युक्तिमाह । अमुष्मिन्निति । संहिताज्ञानिनो मोक्षं प्रमाणेनाह । मुक्त इति । प्रजयेत्यस्यार्थः । प्रकृष्टज्ञानैरिति पशुभिरित्यस्यार्थो । वेदैरिति । ब्रह्मवर्चसेनेत्यस्यार्थो विष्णुतेजसेत्युक्तो भवति । सर्वमायुरेतीत्यस्यार्थो । नित्यायुषेति । स य एव संहितां वेदेत्यस्यार्थः । संहितारूपवदिति । प्रजादिपदान्युक्तार्थे निर्वक्ति । प्रकृष्टत्वेनेति । चायितम् उपचायितं वर्धितं स्वरूपतेजो ब्रह्मवर्चसमित्युच्यते । परब्रह्मणो विष्णोर्वरणादेव अयं मदीय इति विष्णुना स्वीकृतत्वात् इति माण्डूकेयानामित्यस्यार्थो । माण्डूकेयैरिति ॥

अथात इति विद्यान्तरोपदेशज्ञापनार्थं संहितायाः विष्णुनामगताक्षरसंधिदेवतायाः । उपनिषत् रहस्यविद्या । उच्यते इति शेषः । पृथिवी पृथुत्वात् पृथिवीनामकम् । पृथिवीस्थितं वराहरूपं पूर्वरूपं पूर्ववर्णप्रतिपाद्यम् । द्यौः दिवि स्थितं क्रीडनाद्द्युनामकं वामनरूपम् उत्तररूपम् । उत्तरवर्णप्रतिपाद्यमित्यर्थः । वायुः वायुस्थम् । वेदकत्वात् अयनाच्च । वायुनामकम् । नृसिंहरूपं संहिता संधिदेवता माण्डूकेयः इति मन्यते । माक्षव्यो अस्य विष्णोराकाशः आकाशस्थ आकाशनामा नृसिंहः संहितेति वेदयांचक्रे स्वशिष्यान् । स माण्डूकेयो अविपरिहृतो अनिराकृतः स्वपक्षो माक्षव्येनेति मेने । मे मदीयेन मदुपासितेनास्य पुत्रेण आकाशस्य पुत्रेण वायुना वायुस्थपरमात्मना न समागात् । सङ्गतो नाभूत् । आकाशः संहितेति वदन् माक्षव्यो वायुः संहितेति नोपास्ते । तस्मान्न समगादिति भावः । तत्तथापि समाने वै ते उपासने वै । द्वयोरप्युपासनयोः भगवदुपासनत्वात् अत एवापरिहृतत्वं च । माण्डूकेयपक्षो माक्षव्येन परिहृत इत्यहं मेने । मन्ये । इत्यागस्त्य आह । कुतः आकाशस्य

वायुपितृत्वेनाधिकत्वात् । तत्र भगवदुपासनस्य अधिकफलत्वादिति भावः । श्रीमन्महैतरेयः स्वसिद्धांतमाह । वायुश्चाकाशश्चेति । एतदधिष्ठानद्वयं समानं भवति हि । आकाशस्य पितृत्वात् वायोर्बलाधिकत्वाच्च उभयोरुपासनास्थानयोः साम्यमिति भावः । इत्यधिदैवतम् । संहिताया उपनिषदभिहिता । अथाध्यात्मम् अभिधीयते । वक्तृत्वात् वाङ्नामकं विष्णुरूपं पूर्ववर्णप्रतिपाद्यं मन्तृत्वात् मनोनामकं विष्णुरूपम् उत्तररूपम् उत्तरवर्णप्रतिपाद्यम् । प्राणनात् प्राणनामा विष्णुः । संहिता सन्धिदेवतेति शूरवीरमाण्डूकेयो मन्यते । अथास्य ज्येष्ठपुत्र आह । मनः पूर्वरूपं वागुत्तररूपमिति । तत्र युक्तिः । मनसा अग्रे सङ्कल्पयति । अथ वाचा व्याहरतीति । निगमयति । तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपमिति प्राणस्त्वेव संहितेति । संहिता तु प्राण एव । नात्र विवादः । एतयोः पितुः पुत्रस्य चात्र संहितारूपविषये समानं मतमिति शेषः । स एष विष्णुरश्वरथः । इन्द्रियाख्याश्वयुक्तदेहाख्यरथः । प्रष्टिवाहनः पृच्छनीयत्वात् प्रष्टिः वहतीति वाहनः । मनोवाक्प्राणसंहितः मनोवाक्प्राणेषु स्थितः । यो उपासकः एवमुक्तप्रकारेण संहितां संहितादेवतां वेद सः प्रजया प्रकृष्टत्वेन प्रजननात् प्रजासंज्ञकेन ज्ञानेन सन्धीयते । युक्तो भवति । अपरोक्षज्ञानी भवतीत्यर्थः । पांति शंसाधनाश्चेति पशवो वेदाः । तैः पशुभिः यशसा कीर्त्या ब्रह्मवर्चसेन ब्रह्मणो वरणात् मदीयोऽयमिति स्वीकृतत्वाच्चापि तेन वर्धितेन स्वरूपतेजसा स्वर्गेण लोकेन विष्णुलोकेन च संधीयते । सर्वमायुः नित्यायुरेति इति नु इत्थं हि माण्डूकेयानाम् । विद्येति शेषः ॥ १ ॥

ऐतरेयोपनिषत्

अथ शाकल्यस्य पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः संधाता तदुतापि यत्रैतद्बलवदनूद्रूह्लन्सन्दधदहोरात्रे वर्षति । द्यावापृथिव्यौ समधातामित्युताप्याहुरिति न्वधिदैवतमथाध्यात्मं पुरुषो ह वा अयं सर्व आनन्दं द्वे विदले भवत इत्याहुस्तस्येदमेव पृथिव्या रूपमिदं दिवस्तत्रायमन्तरेणाऽकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणा-काशस्तस्मिन्हास्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरा-

यत्तो यथाऽमूनि त्रीणि ज्योतींषीत्येवमिमानि पुरुषे त्रीणि ज्योतींषि यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेतः एवमु ह स्म सर्वलोकमात्मानमनुविधायाहेदमेव पृथिव्या रूपमिदं दिवः स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ २ ॥

भा— वराहो वामनः सिंह इति रूपत्रयं हरेः ।
पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम् ॥
माण्डूकेयैर्हि शाकल्यो वासुदेवादिरूपिणम् ।
तेषु चोच्चारके चैव स्थितमाह चतुर्विधम् ॥
भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितम् ।
उर्व्यादीनां चतुर्णां च देह एव स्थितिं पुनः ॥
अधरार्धस्य चोर्व्याश्च साम्यमन्यस्य वै दिवा ।
वाचो वृष्ट्यैव साम्यं च पर्जन्येनैव चात्मनः ॥
तेषां तेषु स्थितिं चैव विष्णोश्च चतुरात्मनः ।
आकाशस्यान्तराकाशे नृसिंहस्यात्र संस्थितिम् ॥
वायोः प्राणात्मतां चैव तत्र दाशरथेः स्थितिम् ।
सूर्यविद्युद्धुताशानां दृग्धृद्रेतःसु च स्थितिम् ॥
कपिलस्य च हंसस्य जामदग्न्यस्य तेषु च ।
स्थितिं वदति विद्येयमपि मोक्षप्रदायिनी ॥ -इत्यादि च ।

वर्षणाद्वृष्टिः । परं जनयतीति पर्जन्यनामा विष्णुः । सन्धिनोतीति सन्धिः । धिनु पृष्टाविति धातुः । सम्यग्धारणात्सन्धाता । वर्षणमेव द्यावापृथिव्योः सन्धानम् । पर्जन्यस्थो भगवांस्तु तत्कर्ता ॥ २ ॥

टी— अथ शाकल्यस्य इत्येतत्खण्डं व्याचष्टे । वराह इत्यादिना । वराह इत्यारभ्य माण्डूकेयैरित्यन्तेन वाक्येन पूर्वखण्डोक्तपूर्वोत्तरवर्णे तत्संहितादेवता-

नामानि कथितानि । पृथिवी पूर्वरूपमित्यादि व्याचष्टे । शाकल्य इति । तेषु पूर्वोत्तरवर्णतत्सम्बन्धिषु उच्चारके च पुरुषे वासुदेवादिरूपिणं चतुर्विधं भगवन्तं स्थितमाह । वासुदेवाद्याः क्रमेणोर्व्यादिषु स्थिता इति भावः । अथ अध्यात्ममित्येतत्तात्पर्यमाह । उर्व्यादीनामिति । तस्येदमेव पृथिव्यादिरूपमिदं दिव इत्येतद्व्याचष्टे । अधरार्धस्येति । अधरार्धस्य देहाधरार्धस्य अन्यस्य देहोत्तरार्धस्य वाचो वृष्ट्या साम्यमेव । आत्मनः उच्चारयितुः पुरुषस्य पर्जन्येन साम्यमेव । चतुरात्मनो वासुदेवादिचतुरात्मनः विष्णोः तेषां वासुदेवादिचतुर्णां रूपाणां तेषु देहाधरार्धादिषु स्थितिं चाह । शाकल्य इति पूर्वेणान्वयः । तत्रायमन्तरेण आकाश इत्यादि व्याचष्टे । आकाशस्येति । आकाशस्य बाह्याकाशस्य अन्तराकाशे हृदयाकाशे अत्रान्तराकाशे नृसिंहस्य स्थितिं वायोर्बाह्यस्य प्राणात्मताम् अन्तराकाशे प्राणात्मना स्थितिं तत्र प्राणे दाशरथेः स्थितिं यथाऽमूनि त्रीणि ज्योतींषीत्यादि व्याचष्टे । सूर्येति । दृग्धृद्रेतःसु सूर्यस्य दिवि विद्युतो हृदि । अग्ने रेतसि स्थितिं सूर्यादिषु दृगादिषु च स्थितभगवन्मूर्तीराह । कपिलस्येति । वदति शाकल्यः स य एवमेतामित्यादि तात्पर्यमाह । विधेयमिति । वृष्ट्यादिशब्दान्निर्वक्ति । वर्षणादिति । परमन्यम् उत्तमं वासं सम्यक् द्यावापृथिव्यौ समधातां इत्यस्य तात्पर्यमाह । वर्षणमिति । पर्जन्यस्थो भगवान् तत्कर्ता सन्धानकर्ता ॥

अयं शाकल्यस्य मतमुच्यत इति शेषः । पृथिवी पृथिवीस्थितं पृथिवीनामक् वासुदेवाख्यं पूर्वरूपम् । पूर्ववर्णप्रतिपाद्यम् । द्यौः दिविस्थितम् । द्योतनात् द्युनामकं सङ्कर्षणाख्यम् उत्तररूपम् उत्तरवर्णप्रतिपाद्यं वर्षणात् वृष्टिनामको वृष्टौ स्थितः प्रद्युम्नाख्यः सन्धिः सन्धिदेवता । परं जनयतीति पर्जन्यनामा पर्जन्यस्थितो अनिरुद्धः सन्धाता । उच्छारयितृ पुरुषस्थः । वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च लोकप्रसिद्धमित्याह । तदुतापीति । तच्चापि इत्युत एवमपि आहुरपि । यत्र यदा एतत् एषः पर्जन्यः बलवदनूद्धलन् बलवद्यथा भवति तथा गर्जन् अहोरात्रे सन्दधत् सम्मेलयन् वर्षति । तदा द्यावापृथिव्यौ समधताम् । सन्धितावभूताम् इत्याहुः । तस्मात् वृष्टिः सन्धिः । पर्जन्यः सन्धातेति भावः । अधिदैवतमिति नु इत्थं हि । अथाध्यात्मम् । पृथिव्यादीनां

स्थितिरुच्यते । अयं सर्वः पुरुषः समग्रः पुरुषदेहः आन्दम् एकोऽवयवी तस्य देहस्य द्वे विदले पूर्वोत्तरभागौ भवत इत्याहुः । तस्येदं पूर्वार्धमेव पृथिव्या रूपं पृथिवीस्थानीयम् । इदमुत्तरार्धं दिवो रूपं द्युस्थानीयम् । तत्र देहे अन्तरेण मध्ये पूर्वोत्तरार्धयोः अयमाकाशो वर्तते । द्यावापृथिव्यावंतरेण द्यावापृथिव्योर्मध्ये असावाकाशः । यथा तस्मिन् ह्यस्मिन् तस्मिन्नाकाशे अन्तराकाशे प्राण आयत्तः । अमुष्मिन्नाकाशे बाह्याकाशे यथा वायुरायत्तः तथा बाह्यांतराकाशयोर्नरसिंहस्य स्थितिः । वायुप्राणायोर्दाशरथेः स्थितिरिति च द्रष्टव्यम् । पूर्वोत्तरार्धयोर्वाच्युच्चारके च पृथिव्यादिस्थितवासुदेवादिचतुर्णां स्थितिरपि ज्ञातव्या । अमूनि त्रीणि ज्योतींषि यथा द्रव्यादिषु तिष्ठन्ति एवं पुरुषे पुरुषदेहे इमानि त्रीणि ज्योतींषि । तदेव विविच्य आह । यथेति । यथा दिव्यसावादित्याख्यं ज्योतिः चक्षुः चक्षुराख्यं ज्योतिः । एवं शिरसि अन्तरिक्षेऽसौ विद्युत् विद्युदाख्यं ज्योतिर्यथा । आत्मनि पुरुषदेहे हृदयं हृदयाख्यं ज्योतिरेवं पृथिव्यामयमग्निः अग्न्याख्यं ज्योतिः यथा उपस्थे रेतः रेतोभिधं ज्योतिः एवं सूर्यादिषु त्रिष्वधिदैवमध्यात्मं च चक्षुरादित्रिषु च कपिलहंसजामदग्न्यादीनां स्थितिरपि ज्ञातव्या । एवमुक्तप्रकारेण सर्वलोकं पृथिव्यादिकम् आत्मानमनुविधाय पृथिव्यादिसादृश्येनात्मानं विधायाभिप्रेत्येदमेव पृथिव्यादिरूपमिदं दिव इत्याह शाकल्यः । स य एवमेतां संहितां वेदेत्यादेः पूर्वोक्त एवार्थः ॥ ॥ २ ॥

ऐतरेयोपनिषत्

अथातो निर्भुजप्रवादाः पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेणाथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्ठाऽवराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेदच्योष्ठा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयाद्यस्त्वेवोभयमन्तरेणाह तस्या नास्त्युपवादो यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवत्यन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेणाथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्पृथिवीं देवतामारः पृथिवी

त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयाद्यथा तु कथा च ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यान्न त्वेवान्यत्कुशलाद् ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डूकेयः ॥ ३ ॥

भा— पृथिवीस्थो वराहस्तु संहितादेवतोदिता ।
दिविष्ठो वामनश्चैव सम्प्रोक्तः पददेवता ॥
नृसिंहस्त्वंतरिक्षस्थो भगवान्क्रमदेवता ।
स्वाध्यायमेवं ध्यात्वा यः करोत्युपवदेन्न तम् ॥
तस्यापवदिता याति त्रैलोक्यादध एव हि ।
नाशमाप्नोति निरये तस्मादपवदेन्न तम् ॥
गच्छस्यध इति ब्रूयादन्यं ब्राह्मणस्तथा ।
ब्रह्मप्राप्तेर्हि योग्यो यो ब्राह्मणः स न चेतरः ॥ -इति च ।

भञ्जनवर्जितत्वान्निर्भुजं संहिता । तृण च्छेदन इति धातोः प्रतृण्णं पदम् । उभयमन्तरेण क्रमः । निर्भुजमूलत्वात्पदादीनां तद्विषयप्रवादा अपि निर्भुजप्रवादा इत्येवोच्यन्ते । पृथिवीस्थितपृथिवीनामकविष्ण्वायतनं पृथिव्यायतनमित्यादि । अवराभ्यां पृथिव्यन्तरिक्षाभ्यां च्युतोऽसीति । उत्तराभ्यामन्तरिक्षद्युभ्याम् ।

क्रमस्वाध्यायकृद्यस्तं विशेषेण न निन्दयेत् ।
लोकत्रयादपि भ्रष्टो यस्मात्तन्निन्दको भवेत् ॥ -इति च ।

तस्मादतिदुष्टत्वात्तन्निन्दको नास्त्येवेत्युक्तं तस्य नास्त्युपवाद इति । 'तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमानि'त्यादिवत् । उपवदेदित्युक्तो मनुष्यमात्रः । पर उपवदेत्यसुरः । सर्वशत्रुत्वात् ।

अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते ।
ब्रूयाल्लोकच्युतोऽसीति निन्दितोऽसुरसर्गगैः ॥
नाशयिष्यति विष्णुस्त्वामन्धे तससि पातयेत् ।
इति ब्रूयान्न तु ब्रूयाद्देवसर्गात्मकं कचित् ॥ -इति च ।
षणयोः सन्धिकरणात्संहिताध्ययनं भवेत् ।
विषणस्त्विति यो ब्रूयात्पदाध्यायी भवेत सः ॥
सन्ध्युक्तिश्च विभागश्च द्वयं व्याप्तं क्रमेण तु ।
तस्माद्विधाऽपि वचनात्क्रमाध्यायी भवेत सः ॥
भोगवृद्धिं च यो मोक्ष इच्छेद्विष्णव इत्यसौ ।
मोक्षकामो विषणवे द्वयकामो द्वयं वदेत् ॥
विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः ।
सर्ववेदस्थिता मोक्षतद्भोगद्वयसाधकाः ॥
तज्ज्ञानामेव नान्येषामिति वेदानुशासनम् ।
संहिताद्या ब्रुवन्वाऽपि य एवंविन्न चाब्रुवन् ॥
परिवादं ब्रुवन्तं वा न ब्रुवन्तमथापि वा ।
यद्वदेतत्तथैव स्यात्क्षिप्रमेव न संशयः ॥ -इति च ।
अग्र एव । अग्रमेवोभयमन्तरेण ।
द्युम्नो द्युतिस्वरूपत्वाद्विष्णुरेव प्रकीर्तितः ।
योऽतिक्रमति तस्याज्ञामतिद्युम्नः प्रकीर्तितः ॥
मोक्षयोग्योऽपि यस्त्वेवमतिद्युम्नो भवेत्पुमान् ।
लोकच्युतोऽसीत्येवं तं ब्रूयान्नाज्ञास्थितं कचित् ॥
लोकच्युतो भवेत्येनमपि नैव वदेत्कचित् ।
च्युतोऽसीति तु शिक्षार्थं ब्रूयान्नैवान्यथा कचित् ॥ -इति च ॥ ३ ॥

टी— अथातो निर्भुजप्रवादा इत्येतत् खण्डं व्याचष्टे । पृथिवीस्थ इत्यादिना । पृथिव्यायतनं निर्भुजमित्यादेरर्थमाह । पृथिवीस्थ इति । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदित्यादेरर्थमाह । स्वाध्यायमिति । अच्योष्टा

अवराभ्यां स्थानाभ्यामित्यस्याभिप्रायः । तस्यापवदिता याति त्रैलोक्यादध इति । निरये नाशदुःखानुभवमाप्नोति । नत्वेव अन्यत् कुशलात् ब्राह्मणं ब्रूयादित्यादेः तात्पर्यमाह । गच्छसीति । ब्राह्मणशब्दार्थमाह । ब्रह्मप्राप्तेरिति । निर्भुजं प्रतृण्णम् उभयमन्तरेणेति शब्दानाम् अर्थमाह । भञ्जनेति । पदक्रमप्रवादानामपि सत्वात् कथं निर्भुजप्रवादाः इत्युच्यत इत्यत आह । निर्भुजेति । पृथिव्यायतनमित्यादि पदानामर्थमाह । पृथिवीस्थितेति । आदिपदेन दिव्यायतनम् अन्तरिक्षायतनमित्यनयोरप्येवमेव योजनेत्याह । अच्योष्ठा अवराभ्याम् अच्योष्ठा उत्तराभ्याम् इत्यनयोरर्थमाह । अवराभ्यामिति । क्रमाध्येतृनिन्दकस्य फलं स्मृत्या दर्शयति । क्रमेति । तर्हि तस्य नास्त्युपवाद इति तस्योपवादाभावः कथमित्यत आह । तस्मादिति । तस्मात् निन्दनस्यानर्थफलत्वोक्तेरतिदुष्टत्वान्निन्दाफलस्य तत्रोदाहरणमाह । तं कृष्ण-मिति । कृष्णेन सह युद्धस्यानर्थफलत्वात् तत्कर्ता कोऽपि नास्तीति यथोच्यते तद्वदत्रापीत्यर्थः । निर्भुजं ब्रुवन्तमुपवदेदित्यस्मिन् वाक्य इति शेषः । अथ यद्येनं ब्रुवन्तं पर उपवदेदित्यस्मिन् वाक्ये पर इत्युक्तोऽसुरः । कुतोऽसुरः परशब्दवाच्य इत्यत आह । सर्वशत्रुत्वादिति । परशब्दस्य शत्रुवाचित्वात् असुरस्य च सर्वशत्रुत्वादिति भावः । अच्योष्ठावराभ्यामित्यादिनिन्दनफलवाक्यं पृथिवीदेवतामार इत्यादि निन्दनफलवाक्यं च प्रमाणेन व्याचष्टे । अमुक्तीति । यद्धि सन्धिं विवर्तयतीत्यादिना तद्व्याचष्टे । षणयोरित्यादिना । तस्मात् क्रमस्योभयसम्बन्धित्वात् द्विधाऽपि वचनात् क्रमाध्ययने द्विधा पदात्मन संहितात्वेन च वचनसम्भवेन विशिष्टत्वात् विशेषतः क्रमाध्यायी भवेत् । क्रमविशेषतो अधीयेतेति भावः । अन्नाद्यकाम इत्यादि विवृणोति । भोगवृद्धिमित्यादिना । सर्ववेदस्थिताः संहितापदक्रमाश्च विष्णुनामात्मकत्वात् विष्णुनामार्थवत्वात् मोक्षतद्भोगद्वयसाधकाः । तत्र पदं मोक्षसाधनं संहिता भोगसाधनं क्रमस्तूभयसाधनमिति फलविवेकः । एतत् फलं च तज्ज्ञानामेव तज्ज्ञात्वा अधीयानानां योग्यानामेव । ब्रुवन् वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यादित्येतद्विवृणोति । संहिताद्या इति । य एवं वित् । संहिताद्या ब्रुवन् वा संहितादिकमधीयानः न ब्रुवन् वा संहितादिकम् अनधीयानः परीवादं ब्रुवन्तं प्रति वा न ब्रुवन्तं प्रकारान्तरेण कोपविषयं यद्वदेत् आज्ञारूपं वचः

अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते ।
ब्रूयाल्लोकच्युतोऽसीति निन्दितोऽसुरसर्गगैः ॥
नाशयिष्यति विष्णुस्त्वामन्धे तससि पातयेत् ।
इति ब्रूयान्न तु ब्रूयाद्देवसर्गात्मकं क्वचित् ॥ -इति च ।
षणयोः सन्धिकरणात्संहिताध्ययनं भवेत् ।
विषणस्त्विति यो ब्रूयात्पदाध्यायी भवेत सः ॥
सन्ध्युक्तिश्च विभागश्च द्वयं व्याप्तं क्रमेण तु ।
तस्माद्विधाऽपि वचनात्क्रमाध्यायी भवेत सः ॥
भोगवृद्धिं च यो मोक्ष इच्छेद्विष्णव इत्यसौ ।
मोक्षकामो विषणवे द्वयकामो द्वयं वदेत् ॥
विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः ।
सर्ववेदस्थिता मोक्षतद्भोगद्वयसाधकाः ॥
तज्ज्ञानामेव नान्येषामिति वेदानुशासनम् ।
संहिताद्या ब्रुवन्वाऽपि य एवंविन्न चाब्रुवन् ॥
परिवादं ब्रुवन्तं वा न ब्रुवन्तमथापि वा ।
यद्वदेतत्तथैव स्यात्क्षिप्रमेव न संशयः ॥ -इति च ।
अग्र एव । अग्रमेवोभयमन्तरेण ।
द्युम्नो द्युतिस्वरूपत्वाद्विष्णुरेव प्रकीर्तितः ।
योऽतिक्रमति तस्याज्ञामतिद्युम्नः प्रकीर्तितः ॥
मोक्षयोग्योऽपि यस्त्वेवमतिद्युम्नो भवेत्पुमान् ।
लोकच्युतोऽसीत्येवं तं ब्रूयान्नाज्ञास्थितं क्वचित् ॥
लोकच्युतो भवेत्येनमपि नैव वदेत्क्वचित् ।
च्युतोऽसीति तु शिक्षार्थं ब्रूयान्नैवान्यथा क्वचित् ॥ -इति च ॥ ३ ॥

टी— अथातो निर्भुजप्रवादा इत्येतत् खण्डं व्याचष्टे । पृथिवीस्थ इत्यादिना । पृथिव्यायतनं निर्भुजमित्यादेरर्थमाह । पृथिवीस्थ इति । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदित्यादेरर्थमाह । स्वाध्यायमिति । अच्योष्टा

अवराभ्यां स्थानाभ्यामित्यस्याभिप्रायः । तस्यापवदिता याति त्रैलोक्यादध इति । निरये नाशदुःखानुभवमाप्नोति । नत्वेव अन्यत् कुशलात् ब्राह्मणं ब्रूयादित्यादेः तात्पर्यमाह । गच्छसीति । ब्राह्मणशब्दार्थमाह । ब्रह्मप्राप्तेरिति । निर्भुजं प्रतृण्णम् उभयमन्तरेणेति शब्दानाम् अर्थमाह । भञ्जनेति । पदक्रमप्रवादानामपि सत्वात् कथं निर्भुजप्रवादाः इत्युच्यत इत्यत आह । निर्भुजेति । पृथिव्यायतनमित्यादि पदानामर्थमाह । पृथिवीस्थितेति । आदिपदेन दिव्यायतनम् अन्तरिक्षायतनमित्यनयोरप्येवमेव योजनेत्याह । अच्योष्ठा अवराभ्याम् अच्योष्ठा उत्तराभ्याम् इत्यनयोरर्थमाह । अवराभ्यामिति । क्रमाध्येतृनिन्दकस्य फलं स्मृत्या दर्शयति । क्रमेति । तर्हि तस्य नास्त्युपवाद इति तस्योपवादाभावः कथमित्यत आह । तस्मादिति । तस्मात् निन्दनस्यानर्थफलत्वोक्तेरतिदुष्टत्वान्निन्दाफलस्य तत्रोदाहरणमाह । तं कृष्ण-मिति । कृष्णेन सह युद्धस्यानर्थफलत्वात् तत्कर्ता कोऽपि नास्तीति यथोच्यते तद्वदत्रापीत्यर्थः । निर्भुजं ब्रुवन्तमुपवदेदित्यस्मिन् वाक्य इति शेषः । अथ यद्येनं ब्रुवन्तं पर उपवदेदित्यस्मिन् वाक्ये पर इत्युक्तोऽसुरः । कुतोऽसुरः परशब्दवाच्य इत्यत आह । सर्वशत्रुत्वादिति । परशब्दस्य शत्रुवाचित्वात् असुरस्य च सर्वशत्रुत्वादिति भावः । अच्योष्ठावराभ्यामित्यादिनिन्दनफलवाक्यं पृथिवीदेवतामार इत्यादि निन्दनफलवाक्यं च प्रमाणेन व्याचष्टे । अमुक्तीति । यद्धि सन्धिं विवर्तयतीत्यादिना तद्व्याचष्टे । षणयोरित्यादिना । तस्मात् क्रमस्योभयसम्बन्धित्वात् द्विधाऽपि वचनात् क्रमाध्ययने द्विधा पदात्मना संहितात्वेन च वचनसम्भवेन विशिष्टत्वात् विशेषतः क्रमाध्यायी भवेत् । क्रमविशेषतो अधीयेतेति भावः । अन्नाद्यकाम इत्यादि विवृणोति । भोगवृद्धिमित्यादिना । सर्ववेदस्थिताः संहितापदक्रमाश्च विष्णुनामात्मकत्वात् विष्णुनामार्थवत्वात् मोक्षतद्भोगद्वयसाधकाः । तत्र पदं मोक्षसाधनं संहिता भोगसाधनं क्रमस्तूभयसाधनमिति फलविवेकः । एतत् फलं च तज्ज्ञानामेव तज्ज्ञात्वा अधीयानानां योग्यानामेव । ब्रुवन् वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यादित्येतद्विवृणोति । संहिताद्या इति । य एवं वित् । संहिताद्या ब्रुवन् वा संहितादिकमधीयानः न ब्रुवन् वा संहितादिकम् अनधीयानः परीवादं ब्रुवन्तं प्रति वा न ब्रुवन्तं प्रकारान्तरेण कोपविषयं यद्वदेत् आज्ञारूपं वचः

तत्तथैव स्यात्। प्रतृण्णास्याग्र उ एवेत्यत्राग्रशब्दार्थमाह। अग्र इति। उभयमन्तरेण क्रमाध्ययनमग्र एव अग्र्यमेवेत्यर्थः। अतिद्युम्नः एव ब्राह्मणं ब्रूयादित्यस्यार्थमाह। द्युम्न इति। नातिद्युम्ने च न ब्राह्मणं ब्रूयादित्यस्यार्थमाह। नाज्ञास्थितमिति। आज्ञास्थितं लोकच्युतो भवेति न वदेत्। च्युतोऽसीति शिक्षार्थं वदेत्॥

अथातो निर्भुजप्रवादाः निर्भुजादिविषयाः प्रवादाः उच्यन्ते पृथिव्यायतनं निर्भुजं संहिता। पृथिवीस्थितपृथिवीनामकवराहरूपविष्ण्वायतनं विष्णुप्रतिपादकं प्रतृण्णं पदम्। दिव्यायतनं द्युस्थनामक वामनाख्यविष्णुप्रतिपादकम्। उभयमन्तरेणेति क्रम उच्यते। अन्तरिक्षायतनम् अन्तरिक्षनामकान्तरिक्षगत नृसिंहाख्य विष्णुप्रतिपादकम्। अथ यदि निर्भुजं संहितां ब्रुवन्तम् अधीयानं विष्णुभक्तमुपवदेत् अपवदेत् निन्देत् मनुष्यमात्रः। अवराभ्यां भूम्यन्तरिक्षाभ्यां स्थानाभ्याम् अच्योष्ठ च्युतोऽसीति एनं ब्रूयात्। अधीयान इति शेषः। अथ यदि प्रतृण्णं पदं ब्रुवन्तम् उपवदेत् तर्हि उत्तराभ्यामन्तरिक्षद्युभ्यां स्थानाभ्याम् अच्योष्ठेति ब्रूयात्। यस्तूभयमन्तरेण क्रममाह अधीते तस्योपवादः अपवादो नास्ति। क्रमादध्येतृनिन्दनस्यानर्थफलत्वात् तन्निन्दको नास्तीत्यभिप्रायः। ब्राह्मणस्य हन्ता नास्तीतिवत्। निर्भुजादिस्वरूपमाह। यदीत्यादिना। यत् सन्धि पूर्वोत्तरवर्णयोः सन्धि विवर्तयति विशेषेणावर्तयति तद्धि निर्भुजस्य रूपम्। भुंजु भञ्ज इति धातोः। भञ्जनवर्जितत्वात् संहिता निर्भुजमुच्यत इति भावः। अथ यच्छुद्धे अक्षरे पृथक्कृते अक्षरे अभिव्याहरति तत् प्रतृण्णस्य पदस्य रूपम्। तृण् छेदन इति धातोः छिदासहितत्वात् प्रतृण्णमिति पदमुच्यत इति भावः। उभयमन्तरेण क्रमः। अग्र उ एव अग्र्य एव। उत्तम एव यतः उभयं व्याप्तं भवति संहिता पदमित्युभयम् अनेन व्याप्तं भवति अन्नाद्यकामो मोक्षभोगकामः निर्भुजं ब्रूयात् स्वर्गकामो मोक्षकामः प्रतृण्णं पदं ब्रूयात्। उभयकामो मोक्षं तद्गतभोगं चेच्छन् उभयमन्तरेणेति क्रमं ब्रूयादित्यर्थः। अथ यदि निर्भुजं ब्रुवन्तमेनं परः शत्रुः असुरप्रकृतिरुपवदेत्। निन्दां कुर्यात् तर्हि पृथिवीदेवतामारः प्राप्तोऽसि। निन्दितवानसीत्यर्थः। पृथिवीदेवता वराहस्त्वा त्वां रिष्यति नाशयिष्यति। तमसि पातयिष्यतीति ब्रूयात्। अथ यद्येनं प्रतृण्णं

ब्रुवन्तं पर उपवदेत् तर्हि देवं देवतां वामनम् आरः निन्दया प्राप्तोऽसि । द्यौर्देवता त्वा रिष्यतीत्येनं ब्रूयात् । अथ यद्येनमुभयमन्तरेण क्रमं ब्रुवन्तम् अधीयानं पर उपवदेत् । तर्हि अन्तरिक्षदेवतां नृसिंहम् आरः निन्दया प्राप्तोऽसि । अन्तरिक्षदेवता त्वारिष्यतीत्येनं ब्रूयात् । यथा तु कथा च । कथा निन्दावाक्यप्रबन्धः । यथा तु यथैव लोके तथैवात्रापि निन्दां कुर्वन्तं प्रति यथा लोके प्रवक्तारो भवन्ति तथा प्रतिवचनं ब्रूयादिति भावः । एवंवित् ब्रुवन् संहितादिकमधीयानः वा शब्दादब्रुवन् वा अपवादं ब्रुवन्तं वा शब्दात् अब्रुवन्तम् । प्रकारान्तरेण कोपविषयं वा यच्छापरूपं वाक्यं ब्रूयात् तदुक्तमभ्याशमेव शीघ्रमेव तथा स्यात् । शापरूपं तद्वचनं मोघं न स्यादिति भावः । ब्राह्मणं तु ब्रह्मप्राप्तियोग्यं कुशलादन्यत् अकुशलं नैव ब्रूयात् । ब्राह्मणं मोक्षयोग्यं प्रति द्युम्न एव द्युतिस्वरूपत्वात् द्युम्नो भगवान् तदाज्ञातिवर्ती । अतिद्युम्नः । भगवदाज्ञातिवर्तिन्येव सति ब्रूयात् । लोकच्युतोऽसीत्येव ब्रूयात् । न तु लोकात् च्युतो भवेति । ब्राह्मणं मोक्षयोग्यं नातिद्युम्नो भगवदाज्ञातिवर्तिनि सति मन्युविषयमपि लोकच्युतो भवेति शापरूपं न च नैव ब्रूयात् । लोकच्युतोऽसीति शिक्षारूपं वदेत् । तस्माद्ब्राह्मणानां सर्वथा शापाविषयत्वात् शूरवीरो माण्डूकेयः ब्राह्मणेभ्यो नमोऽस्त्वित्याह स्म ॥ ३ ॥

ऐतरेयोपनिषत्

अथातोऽनुव्याहाराः प्राणो वंश इति विद्यात्स य एनं प्राणं वंशमुपवदेच्छक्नुवन्तं चेन्मन्येत प्राणं वंशं समधां ३ प्राणं मा वंशं सन्दधतं न शक्नोषीत्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयादथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयाद्यथा तु कथा च ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यान्न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयादिति द्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने च न ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽह शूरवीरो माण्डूकेयः ॥ ४ ॥

भा— भगवदुपासकस्य यस्मिन्कस्मिंश्चिद्दोष उक्ते तं प्रत्युक्तिप्रकारः पूर्वं दर्शितः। अनुव्याहारशब्देन भगवदुपासनाविषय एवास्याशक्त्यादिदोषं वदतः प्रत्युक्तिरुच्यते। निर्भुजं वदन्तमित्यादि त्ववस्थामात्रदर्शनम्। आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्यत्वादनुव्याहारः।

सर्वाधारत्वतो वंश इत्युपासीत यो हरिम्।
वायुं च मुक्तिमाप्नोति य एवं तदुपासकम्॥
निन्देत विष्णुविज्ञानविषये तं वदेत् सः।
विष्णुना वंशभूतेन वायुना सहितं तथा॥
न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ।
ज्ञानसामर्थ्यवानित्थं ब्रूयाद्देवादिरुत्तमः॥
अन्यो गन्धर्वपित्रादिरल्पज्ञानबलो हि यः।
स ब्रूयाद्विष्णुवायुभ्यां सन्धिमिच्छन्तमेव माम्॥
सन्धातुं नाशको यस्माद्धास्यतस्त्वामतो हि तौ॥ इति च।

स य एनं प्राणं वंशमुपवदेत्प्राणं प्रत्येनमुपासकमुपवदेत्। प्राणस्य विष्णोः प्रियत्वं तव न प्राप्स्यतीति। नाशकः सन्धातुं मया सह सन्धानं कर्तुं नाशकः। मम प्रीतिं कर्तुं नाशकः।

तद्भक्तभक्तेष्वपि यो न कुर्यात्प्रीतिमञ्जसा।
विष्णुर्जहाति तं पापमिह चामुत्र च प्रभुः॥ इति च भारते॥ ४॥

टी— अथातो अनुव्याहारा इत्येतत्खण्डं व्याचष्टे। भगवदुपासकस्येत्यादिना। एतत् खण्डस्य पूर्वखण्डात् विषयभेदं दर्शयति। भगवदुपासकस्येति। यस्मिन् कस्मिन् चित् दोष उक्ते तं प्रत्युक्तिप्रकारो दर्शितश्चेत् निर्भुजं ब्रुवन्तमित्यादि विशेषोक्तिः कथमित्यत आह। निर्भुजमिति। अस्यामेवावास्थायामपवदन्तं प्रत्येवं ब्रूयादिति नाभिप्रायः। किं तर्हि अवस्थान्तरस्याप्युपलक्षणमेतदिति भावः। अनुव्याहारशब्दार्थमाह। आत्मन इति। प्राणो वंश इति व्याचष्टे। सर्वाधारत्वत इति। स य एनं

प्राणं वंशमुपवदेदित्यादि विवृणोति । य एवमति । प्राणं वंशं समधामित्यस्य तात्पर्यम् । विष्णुना वंशभूतेन सहितं वायुना तथेति । शक्नुवन्तं चेदित्यस्यार्थो ज्ञानसामर्थ्यवानिति । अथ चेदशक्नुवन्तं मन्येतेत्यादि व्याचष्टे । अन्य इति । विष्णुना सन्धिमिच्छन्तम् एवं मा सन्धातुं मया सख्यं कर्तुं नाशकः । स य एनं प्राणं वंशमुपवदेदित्यत्रोपास्यप्राणविषयोऽयमपवाद इति प्रतीतिनिरासाय व्याचष्टे । स य एनमिति । प्राणस्त्वा वंशो हास्यतीत्यस्यार्थः । प्राणस्येति । तत्र प्रमाणमाह । तद्भक्तेति ।

अथातो अनुव्याहाराः आत्मनो ज्ञानसामर्थ्यानुसारेणोक्तिप्रकारा उच्यन्त इति शेषः । प्राणः विष्णुः मुख्यवायुश्च वंशः सर्वाधार इति विद्यात् । य एनं प्राणं प्राणो वंश इत्युपासकमेनम् उपवदेन्निन्देत । स उपासकः शक्नुवन् शक्नुवन्तं शक्तं ज्ञानसामर्थ्ययुक्तम् आत्मानं मन्येत चेत् तर्ह्येवं ब्रूयात् । अहं प्राणं वंशं समधां सन्धितवानस्मि । तदुपासां कृतवानस्मीत्यर्थः । प्राणं वंशं सन्दधतं मां न शक्नोषीत्याह । त्वं तस्माद्वंशः प्राणस्त्वा हास्यतीति तव प्रियत्वं न प्राप्स्यतीत्येनं ब्रूयात् । अथ चेदात्मानमशक्नुवन्तं मन्येत अल्पज्ञानसामर्थ्ययुक्तं तर्हि आत्मानमुपवदन्तमेवं ब्रूयात् । प्राणं वंशं सन्दधतं समधित्सिषन्तं सर्वाधारं प्राणं सन्धातुमिच्छन्तं समाधातुं सन्धितुं मम प्रियं कर्तुम् इति यावत् । नाशकः न समर्थो भूः । अतो वंशः प्राणस्त्वा हास्यतीति ब्रूयात् । यथा तु कथा चेत्यादिकं पूर्ववद्व्याख्येयम् ॥ ४ ॥

ऐतरेयोपनिषत्

अथ खल्वाहुर्निर्भुजवक्त्राः पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति स य ऐवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्तयति येन स्वरास्वरं विजानाति येन

मात्रामात्रां विभजते सा संहितेति । स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन्यथावर्णमाह तद्याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी साम तद्भवति । सामैवाहं संहितां मन्य इति तदप्येतदृषिणोक्तं बृहस्पते न परः साम्नो विदुरिति स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ ५ ॥

भा— पूर्ववर्णस्थितं यत्तद्रूपं पूर्वाक्षराभिधम् ।
वराहाख्यं हरेरन्यवर्णगं वामनाभिधम् ॥
उत्तराक्षरसंज्ञं च वर्णयोरन्तरस्थितम् ।
अवनात्काशनाच्चैतदवकाशाभिधं हरेः ॥
नृसिंहरूपमित्याहुर्निर्भुजास्यास्तथाऽवदन् ।
ह्रस्वो येनाक्षरोच्चारो मात्रासन्धिस्वरात्मकः ॥
व्यासरूपो हरिः साक्षात्संहितानामकस्त्विति ।
तत्पुत्रो मध्यमः प्राह समोच्चारणकारणः ॥
सामनामा वासुदेवः संहितानामवानिति ॥ इति च ।

मापयति त्रायति चेति मात्रा भगवान् । यथोच्चारितवर्णयोर्मध्यस्थितश्च ।

मा नस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित्[1] ॥
अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आ देवानामोहते विव्रियो हृदि बृहस्पते न परः साम्नो विदुः[2] ॥

१. ऋ. २/२३/१६ २. ऋ. २/६/३२.

अभितो द्रोहस्य नित्यनिरतिशयदुःखस्यान्धतमसो योग्याः ।

ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः ॥
कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥
ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ॥
तेषां तमःशरीराणां तम एव परायणम्[1] ॥

- इति मोक्षधर्मे भगवद्वचनादेवंविधा एव स्तेनाः ।

अभिद्रुहस्पदस्थाश्च । निरामिणः रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपताज्ञानेन नीचताविदः । त एव रिपवश्च तस्य ।

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः[2] ॥

- इत्यादिवचनादसुरादयः ।

अन्नेषु जागृधुः भोगमात्रगृध्नवः । येषामेतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः ईशितव्ये विद्यमाने हीश्वरो भवतीति । न चापरं किञ्चित्परमापेक्षया ह्यपरमिति । किं तर्हि किञ्चनैकं किमप्येकमेव वस्त्वस्ति न परमपरं चेति तेषां पक्षः ।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्[3] ॥

---

१. भारते. २. गी. (९/११,१२) ३. गी. १६/८.

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी[१] ॥ -इत्यादि [२]वचनात् ।

ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो । 'अथ हेममासन्यं प्राणमूचुः । एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्माद् ब्रह्मणस्पतिरि'त्यादि श्रुतेरेतादृशेभ्यो मा ब्रूहि । शमेन विष्णुनिष्ठया उप समीपे तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः । तदेव देवानां व्रयः । सर्वदेवानां परतमं विष्ण्वाख्यं ब्रह्म हृदा व्योहते । वासुदेवादिरूपेण वरं नियामकं चेति व्रयः । तेभ्यो ब्रूहि ।

वायुं विद्याः समासाद्य सर्वासां पतिमूचिरे ।
स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च ॥ इति च ।
सामनाम्ना श्रुतिर्यस्माद्विष्णुमाह ततः प्रियम् ।
तन्नाम विष्णोरिह तु संहितार्थं वदेद्यतः ॥ इति च ।

सामनाम्न; संहिताशब्दार्थत्वाद्विष्णोस्तस्य नाम्नः श्रुतिसिद्धत्वाच्च सामनाम्नो वासुदेवरूपसमाख्यासु पञ्चरात्रे पठितत्वाच्च तद्रूपं संहितानामकमिति युक्तमित्यभिप्रायः ॥ ५ ॥

टी— अथ खल्वाहुर्निर्भुजवक्त्रा इत्येतत् खण्डं व्याचष्टे । पूर्ववर्णस्थितमित्यादिना । पूर्वमक्षरं पूर्वरूपमित्यादि विवृणोति । पूर्ववर्णस्थितमिति । योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेणेत्यत्रावकाशशब्दार्थमाह । अवनादिति । अथ वयं ब्रूमो निर्भुजवक्त्रा इत्येतद्विवृणोति । तथाऽवददिति । येन सन्धिं विवर्तयतीत्यादि व्याचष्टे । येनेत्यादिना । मात्रासन्धिस्वरात्मको अक्षरोच्चारो येन यदनुग्रहेण स व्यासरूपः संहितानामकस्त्विति । अथ ह्रास्य पुत्र आह मध्यम इत्येतद्विवृणोति । तत्पुत्र इति । ह्रस्वमाण्डूकेयपुत्रः अनेन

---

१. गी. १६/९ २. १६/१४

सामैवाहं संहितां मन्य इत्येतदुक्तार्थं भवति । तद्यासौ मात्रेत्यत्र मात्राशब्दार्थं साम तद्भवतीत्यत्र सामशब्दार्थं चाह । मापयतीति । यथोच्चारितवर्णयोर्मध्यस्थितत्वात् समः सम एव सामेत्यर्थः । बृहस्पते न परः साम्नो विदुरित्यत्र सामनामकभगवत्सर्वोत्तमत्वज्ञानवतामेव नः ब्रूहि । अन्येभ्यो मा ब्रूहीत्युच्यते । तदेव बहुभिः प्रमाणैः समर्थयति । मान इति । मानः स्तेनेभ्य इत्यादि स्वोदाहृतवाक्यानि व्याचष्टे । अभिद्रुहस्पद इत्यादिना । स्तेनेभ्यो मा ब्रूहीत्यत्र स्तेनं प्रमाणेन दर्शयति । ऐकात्म्यमिति । अभिद्रहस्पदस्थाश्च त एवेति शेषः । निरामिणश्च त एव एवं विधाश्च ते के इत्यतस्तान् प्रमाणेन आह । अवजानन्तीति । एषां नैतदित्यस्यार्थो एषामित्यादि । परं ब्रह्म नास्तीतिपक्षः कुतः अवरभावात् । तदुपपादयति । ईशितव्य इति । न चापरं किञ्चित् । कुतः परमाभावात् । तदुपपादयति । परमापेक्षयेति । तेषां मतमेवमित्येतत् प्रमाणेनाह । असत्यमिति । इत्यादि वचनात् तेषां मतमेवमिति ज्ञायत इति शेषः । वायुरेव ब्रह्मणस्पतिरित्यत्र प्रमाणमाह । अथ हेममिति । तर्हि केभ्यो वक्तव्यमित्यत उक्तमथो तद्व्याचष्टे । शमेनेति । समत्वात् सामनाम्नो यस्मात् । विष्णोः परं न विदुः । तदेव सामैव वासुदेवादिरूपेण हृदा स्वेच्छया विप्रा व्योहते प्राप्नोति । सर्वमिति शेषः । श्रुत्यर्थे प्रमाणमाह । वायुमिति । सामनाम्न एवं संहितात्वे प्रमाणमाह । सामनाम्नेति । श्रुतिः । बृहस्पते न परः साम्नो विदुरिति । इह तु सामनाम संहितार्थं संहिताशब्दार्थं वदेयतः स्मृत्यर्थविवरणपूर्वकं सामनाम्नो वासुदेववाचित्वं दर्शयन् सामैवाहं संहितां मन्य इत्येतदर्थम् उपसंहरति । सामेति ।

अथ खल्वाहुर्निर्भुजवक्त्राः निर्भुजवक्त्राख्याः केचिदृषयः । पूर्वमक्षरं पूर्वाक्षरस्थितम् । पूर्वाक्षरनामकं वराहाख्यं रूपं पूर्वरूपं पूर्ववर्णप्रतिपाद्यम् । उत्तरमुत्तराक्षरस्थितम् उत्तराक्षरनामकं वामनाख्यं रूपम् उत्तररूपम् उत्तरवर्णप्रतिपाद्यम् । पूर्वोत्तररूपयोः अन्तरेण तिष्ठतीति शेषः । सा मूर्तिः संहिता संहितादेवता इत्याहुर्निर्भुजवक्त्रा इति पूर्वेणान्वयः । स य एवमेतामित्यादेरुक्त एवार्थः । अथ ह्रस्वो माण्डकेयो निर्भुजवक्त्रा इति सम्बोध्य वयं

ब्रूम इत्याह । पूर्वमेवाक्षरं पूर्वरूपम् उत्तराक्षरमुत्तररूपमेव । नात्र विवादः । पूर्वरूपोत्तररूपे अन्तरेण पूर्ववर्णयोर्मध्ये योऽवकाश उक्तो भवद्भिः तस्यावकाशस्य स्थाने सा संहिता वेदव्यासमूर्तिरेव संहिता । येन यदनुग्रहेण व्यासेन सन्धिं पूर्वोत्तरवर्णसन्धिं विवर्तयति । विशेषेण वर्तयति पुमान् येन स्वरास्वरं स्वरमस्वरं च विजानाति । येन मात्रामात्रां मात्राममात्रां च । अत्र दीर्घमात्रा न ह्रस्व इत्यादि मात्रामात्रविभागः । अत उदात्त एव । नानुदात्त इत्यादि विभजते । विभागं करोति स स्वरास्वरविभागः । स य एवमेतां संहितां वेदेत्यादेरुक्तोऽर्थः । अथास्य ह्रस्वमाण्डूकेयस्य मध्यमपुत्रः प्रातीबोधीपुत्र आह । इमे अक्षरे पूर्वोत्तराक्षरदेवते । अविकर्षन् तयोर्व्यत्यासमकुर्वन् अनेकीकुर्वन् पूर्वोत्तरवर्णयोरेकदेवतात्वमकुर्वन् यथावर्णं निर्भुजाद्युक्तवर्णदेवतामनतिक्रम्य आह । तद्याऽसौ सा याऽसौ मात्रा मापयति ज्ञापयति त्रायति चेति मात्रानामकः पूर्वरूपोत्तररूपे अन्तरेण पूर्वोत्तरवर्णयोर्मध्ये सन्धिविज्ञपनी तत्साम भवति । सामनामकं भवति । असौ समत्वात्सामनामा वासुदेवः । तमेव संहितां संहितादेवतामहं मन्ये । इति शब्दो वाक्यसमासौ । तदप्येतदृषिणोक्तम् । वासुदेवस्य सामनामकत्वं तस्य संहितात्वं च ऋषिणोक्तम् । बृहस्पते वेदस्य पते वायो साम्नः सामनाम्नः वासुदेवात्परः परं ये न विदुस्तेभ्योऽस्मान् ब्रूहीति । इति वेदविद्याप्रार्थनम् । स य एवमेतां संहितां वेद ॥ ५ ॥

ऐतरेयोपनिषत्

बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति तार्क्ष्यो वाग्वै रथन्तरस्य रूपं प्राणो बृहत उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन चैतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्य एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्यस्तदप्येतदृषिणोक्तं[१] रथन्तरमाजभारा वसिष्ठः ॥ भरद्वाजो बृहदाचक्रे अग्नेरिति स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन

---

१. प्रथश्च यस्य सप्रथश्च नामाऽऽनुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमाजभारा वसिष्ठः ॥
(ऋग्वेद. १०/१८१-१) (३/१/६)

सर्वमायुरेति वाक्प्राणेन संहितेति कौण्ठरव्यः प्राणः पवमानेन पवमानो विश्वैर्देवैर्विश्वेदेवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते यथैषा संहिता स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदभिव्याहार्षन्नेव विद्याद्दिवं संहिताऽगमद्विदुषां देवानामेवं भविष्यतीति शश्वत्तथा स्यात्स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति वाक्संहितेति पञ्चालचण्डो वाचा वै वेदास्सन्धीयन्ते वाचा च्छन्दांसि वाचा मित्राणि सन्दधति वाचा सर्वाणि भूतान्यथो वागेवेदं सर्वमिति तद्यत्रैतदधीयते वा भाषते वा वाचि तदा प्राणो भवति वाक्तदा प्राणं रेळ्ह्यथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेळ्हि तावन्योन्यं रीळ्हो वाग्वै माता प्राणः पुत्रस्तदप्येतदृषिणोक्तम् कः

[1]सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम्
इति ।

स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथातः प्रजापतिसंहिता जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः सन्धिः प्रजननं सन्धानं सैषाऽदितिः संहिताऽदितिर्हीदं सर्वं यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननं च तदप्येतदृषिणोक्तम[2]दितिर्माता स पिता स पुत्र इति स य एवमेतां

१. ऋ. १०/११४/४

२. अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥
(ऋग्वेद. १-८९-१०) (३/१/६)

संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ॥ ६ ॥

॥ इत्यैतरेयोपनिषत्सु तृतीयारण्यके प्रथमोऽध्यायः ॥ ६ ॥ १ ॥

भा — देवता पूर्ववर्णस्य लक्ष्मीरेव प्रकीर्तिता ।
नारायणस्तूत्तरस्य तौ वाक्प्राणाभिधौ मतौ ॥
मध्यस्थः संहितानामा सोऽर्धनारीपुमात्मकः ।
वेदात्मकत्वाद्वाङ्नाम्नी लक्ष्मीरेव प्रकीर्तिता ॥
प्राणनामा प्रणेतृत्वात्साक्षान्नारायणः स्वयम् ।
रमित्यानन्द उद्दिष्टः सम्भोग्यं थमुदाहृतम् ॥
विष्णुभोग्या रतितरा लक्ष्मीरेव रथन्तरम् ।
नारायणो बृहत्त्वात्तु बृहन्नामा प्रकीर्तितः ॥
रथन्तरस्य बृहतो देवते चैव तावुभौ ।
वाक्प्राणसंस्थितौ चैव ताभ्यामेव हि सन्धितम् ॥
लक्ष्मीनारायणं रूपं संहितानामकं शुभम् ।
एतां विद्यामवाप्तुं हि वत्सरं गा अरक्षत ॥
तार्क्ष्य एतन्मात्रं च समुद्दिश्य न चापरम् ।
संहितादेवता बह्वच इति कुण्ठरवात्मजः ॥
द्वयं द्वयं देवतानां मिलितं हरिशर्ववत् ।
संहितानामकं तत्र वर्णमध्यस्य देवता ॥
तयोरेकं देवतयोः परमन्यत्तथाऽवरम् ।
अवरस्य परस्यापि संयोगात्संहिता तु सा ॥
प्रोक्ताऽवरपरेत्येव वाक्प्राणाख्यौ रमाच्युतौ ।
संहितैका तथैवान्या केशवो वायुसंयुतः ॥
वायुः स पवमानाख्यो देवताश्चाखिला अपि ।
तृतीया संहिता प्रोक्ता देवतास्ताः सशङ्कराः ॥

चतुर्थी संहिता प्रोक्ता शङ्करो ब्रह्मणा सह ।
पञ्चमी संहिता चैव संहिता मोक्षदा इमाः ॥
प्रथमायां द्वितीयायां विष्णुरेव परो मतः ।
तृतीयायां वायुरेव चतुर्थ्यां सर्वदेवताः ॥
विरिञ्च एव पञ्चम्यामवरा इतरे ततः ।
प्रथमायां संहितायामवरो वामभागगः ॥
द्वितीयायां तु परमस्तृतीयायां तथाऽवरः ।
चतुर्थ्यां परमश्चैव पञ्चम्यां वामगोऽवरः ॥
अवराद्याः परान्ता यदेताः सर्वाश्च संहिताः ।
ततोऽवरपराः प्रोक्ता नैवोक्तास्ताः परावराः ॥
अभिमानी द्युलोकस्य शिवः सर्वस्य लोकनात् ।
द्योतनाच्च यदि ब्रूयान्मन्त्रमेतमथापि वा ॥
आत्मार्थेऽथ परार्थे वा चिन्तयेदेवमञ्जसा ।
विद्वांसो देवता यस्मात्सम्यक्तेन महत्फलम् ॥
तेषामेव हरिश्चैव संहितारूपकः प्रभुः ।
अगमद्देवलोकं हि कर्तुं देवेष्वनुग्रहम् ॥
इति चिन्तयतस्तेषां प्रसादात्फलमञ्जसा ।
पञ्चालचण्डो वाचं तु ब्रह्माणीं हि सरस्वतीम् ॥
मन्यतेऽस्याः पुत्रवच्च देवं नारायणं प्रभुम् ।
वेदैर्हि व्यज्यते विष्णुः सा च वेदाभिमानिनी ॥
प्राणस्थो भगवान्विष्णुः प्राणनामा प्रणेतृतः ।
ब्रह्मणोऽपि पिता नित्यं भगवान्पुरुषोत्तमः ॥
उपचर्यते पुत्र इति वेदैर्यद्व्यज्यते हरिः ।
सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि ॥
प्रजापत्याख्यशर्वेण प्रोक्ताऽन्या संहिताऽपि हि ।
विष्णुरेवादितिर्नाम सर्वस्यात्ता यतः प्रभुः[1] ॥

---

१. अत्ता चराचरग्रहणात् । (१/२/९) इति ब्रह्मसूत्रम् ।

स एव पितृसंस्थस्तु पातृत्वात्पितृनामकः ।
देवतोत्तरवर्णस्य मातृस्थो मातृनामकः ॥
माननात्पूर्ववर्णस्य देवतेति प्रकीर्तितः ।
पोषकत्वात्सन्धिनामा वर्णयोरन्तरस्थितः ॥
स एव पुत्रसंस्थश्च पुत्रनामा जनार्दनः[1] ।
त्राणात्पूतित एवासौ वर्णसन्धानकर्मणि ॥
सन्धाननामा सन्धानकर्तृत्वात्पुरुषोत्तमः ।
प्रजातिकर्मसंस्थश्च स एव प्रजनाभिधः ॥
जनकत्वात्परो विष्णुरेवं विष्णुर्हि संहिता ।
वासुदेवादिरूपेण चतुर्धैवं व्यवस्थितः ॥
स एव दिवि संस्थश्च द्युनामा क्रीडनात्प्रभुः ।
अन्तरेवेक्षणाच्चैव सोऽन्तरिक्षोऽन्तरिक्षगः ॥
पृथिवी पृथिवीस्थश्च प्रथितत्वाज्जनार्दनः ।
मुख्यार्थत्वात्सर्वनाम्नां सर्वदेवाभिधो हरिः ॥
विश्वे देवा इति प्रोक्तो बहुधा तेषु संस्थितः ।
ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः ॥
गां धारयंश्च गन्धर्वो गन्धर्वेषु व्यवस्थितः ।
माननान्मानुषो नाम मानुषेषु स्थितो हरिः ॥
पालनात्पितृनामाऽसौ पितृष्वेव व्यवस्थितः ।
रतेः प्राणेऽसुराख्यश्च सोऽसुरेषु व्यवस्थितः ॥
एवं पञ्चजनेषुस्थो हरिः पञ्चजनाभिधः ।
जातनामा जातसंस्थः प्रादुर्भूतगुणत्वतः ॥
जनिक्रियास्थितश्चासौ जनित्वमिति गीयते ।
जनिं यस्मात्तवयति तवनं हि प्रकाशनम् ॥ इति च ।

---

१. य एष पुत्सञ्ज्ञितनारकस्थान् जनान् स्वनामस्मरणेन पाति ।
स दृष्टिगः सन् वसुदेवपत्न्याः कथं न पुनः शतपत्रनेत्रः ॥
- इति रुक्मिणीशविजये (१/४७)

प्रथश्च सप्रथश्चैव राजानौ मत्स्यदेशजौ ।
यापयामासतुर्विष्णोर्हविर्नाम्नो हविर्मुखे ॥
अनुष्टुब्देवता यस्तु नृसिंहो जगतोऽस्य च ।
स्वमुखे हवनादेव हविरित्यभिधीयते ॥
तस्मिन्यज्ञे वसिष्ठस्तु चतूरूपाज्जनार्दनात् ।
आजहार श्रियं देवीं रथन्तरवराभिधाम् ॥
चतुर्मूर्तिः स्तुतस्तेन प्रेषयामास तां श्रियम् ।
सा चास्मै प्रददौ विद्यां प्रययौ च पुनर्हरिम् ॥
धातेत्युक्तोऽनिरुद्धस्तु प्रद्युम्नस्तु द्युनामकः ।
वासुदेवः प्रसविता सर्वस्य प्रसवाद्विभुः ॥
सङ्कर्षणो विष्णुनामा प्रणेतृत्वाद्बलादपि ।
चतूरूपं परं विष्णुं राजानौ प्रथसप्रथौ ॥
भरद्वाजो वसिष्ठश्च ध्यात्वाऽविन्दन्परात्परम् ।
यजनीयो यजुर्नामा विष्णुः सङ्कर्षणाभिधः ॥
जीवानां स्कन्दनादेव स्कन्नः प्रद्युम्न उच्यते ।
प्रथमो वासुदेवस्तु देवयानोऽनिरुद्धकः ॥
प्राप्यो देवैर्यतो नित्यमनिरुद्धाभिधो हरिः ।
तस्मादेवं चतुर्मूर्तेः स्तुतिसन्तोषिताद्धरेः ॥
आजहार भरद्वाजो रूपं नारायणाभिधम् ।
तद्बृहन्नामकं विष्णोश्चातुरात्म्यात्समुद्गतम् ॥
भरद्वाजमुपागम्य प्रादान्मोक्षवरं परम् ।
चतुर्मूर्तिः स भगवानग्निरित्यभिधीयते ॥
अग्र्यत्वात्सर्वभूतानामेवं चत्वार एव ते ।
अविन्दन्स्तं चतुर्मूर्तिं साक्षान्नारायणं प्रभुम् ॥
गुहायां संस्थितमपि ह्यतीव हितमस्य च ।
सर्वज्ञत्वाद्यज्ञनाम्नो विष्णोस्तेजः परं हि तत् ॥

तस्मादेव चतुर्मूर्तेः सूरिप्राप्यत्वहेतुतः ।
सूर्यनाम्नोऽहरघ्नर्मनामानं तं नृसिंहकम् ॥
घर्षणात्सर्वलोकस्य नृसिंहो घर्म उच्यते ।
निर्गत्य स चतुर्मूर्तेर्विप्रक्षत्राभिसंस्तुतात् ॥
प्रथादीनां चतुर्णां च पुरुषार्थचतुष्टयम् ।
दत्वा जगाम भगवान् स्वकीयां तनुमेव च ॥
वसिष्ठाच्च भरद्वाजाद्धोत्रध्वर्य्वोर्नृपौ तु तौ ।
यथेष्टसिद्धिं संप्राप्तौ सम्यगिष्टाज्जनार्दनात् ॥

इत्याद्यृग्वेदसंहितायाम् ।

यस्य प्रथ इति नाम स च हविर्नाम्नो विष्णोर्हविर्यत् अयत् । अटो लोपेनान्तर्णीतणिच्त्वेन अयापयदित्यर्थः । एवं सप्रथ इति यस्य नामाऽसौ । हविर्यदिति पृथक्सम्बन्धः । आचक्रे आकारयामास । अविन्दन् ते ते अविन्दन्नित्यध्यात्माधिदैवतयोरुभयत्रापि भगवन्तमविन्दन्नित्यर्थः । देवयानं गुहा यदिति वचनात् ।

चतुःशिखण्डां तु रमां द्विरूपो भगवान्हरिः ।
परमानन्दरूपत्वात्सुपर्ण इति नामकः ॥
रमयामास तस्यां च निषण्णः सर्वदैव सः ।
एक एव च विष्णुः स प्रविष्टः क्षीरसागरम् ॥
सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।
परिपक्केन मनसाऽपश्यमित्याह तं त्वजः ॥
मातेव व्यञ्जकत्वात्तं प्राणस्थं वाक् सरस्वती ।
लिहते लिह्यत इव प्राणस्थेन तु सा सदा ॥
स्वयं तु भगवान्विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि ।
नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि च ॥

इत्यादि च ॥ ६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये
तृतीयप्रघट्टके प्रथमोऽध्यायः ॥ ३ ॥ १ ॥

टी— बृहद्रथन्तरयो रूपेणेत्येतत्खण्डं व्याचष्टे । देवतेत्यादिना । लक्ष्मीरित्यनेन रथन्तरशब्दस्य नारायणस्तूत्तरस्येत्यनेन बृहदित्यस्यार्थ उक्तः । वाग्वै रथन्तरस्य रूपम् । प्राणो बृहत इत्यनयोरर्थः । वाक्प्राणाभिधाविति । उभाभ्यामु खलु संहितेत्यस्यार्थो । मध्यस्थः संहितानामेति । स नारायणो लक्ष्म्या सहेति शेषः । मध्यस्थः पूर्वोत्तरवर्णयोर्मध्यस्थः । संहितानामा । वाक्प्राणशब्दौ लक्ष्मीनारायणयोर्निर्वक्ति । वेदात्मकत्वादिति । रथन्तरबृहच्छब्दौ निर्वक्ति रमित्यानन्द इति । रतितरा विशिष्टसुखरूपा । तावुभौ लक्ष्मीनारायणौ रथन्तरस्य रथन्तराख्यसाम्नः । बृहतो बृहदाख्यसाम्नः । देवते । ताभ्यां वाक्प्राणाभ्यां सन्धकाभ्यां सन्धितम् एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्य इत्येतद्व्याचष्टे । एतां विद्यामिति । एतस्यां ह स्म मात्रायामित्यस्य व्याख्यानम् । एतन्मात्रं चेति । वाक्प्राणेन संहितेति कौठरव्य इत्यादि व्याचष्टे । संहितादेवता इति । इत्याहेति शेषः । तत्र देवतामध्ये हरिशर्ववन्मिलितं देवतानां द्वयं द्वयं संहितानामकं वर्णमध्यस्य देवता । सैषाऽवरपरा संहितेत्येतद्विवृणोति । तयोरिति । सा संहिता अवरस्य परस्यापि संयोगात् अवरपरेति प्रोक्ता । वाक्प्राणाख्यौ रमाच्युतौ एका संहिता । तथा वायुसंयुतः केशवोऽन्या संहिता द्वितीया । पवमानाख्यः स वायुः अखिला देवता अपि तृतीया संहिता । वाक्प्राणाख्यौ रमाच्युतवित्यनेन वाक्प्राणेन संहितेत्यस्यार्थ उक्तः । ''तथैवान्या केशवो वायुसंयुत'' इत्यनेन प्राणः पवमानेनेति पवमानाख्यः अखिला देवता इत्यनेन पवमानो विश्वैर्देवैरिति देवतास्ताः सशङ्करा इत्यनेन विश्वेदेवाः स्वर्गेण लोकेनेति । शङ्करो ब्रह्मणा सहेत्यनेन स्वर्गो लोको ब्रह्मणेत्यस्यार्थ उक्तः । स यो एवमेतामवरपरां सहितां वेदेत्यादेरर्थः । संहिता मोक्षदा इमा इति । पञ्चविधसंहितास्ववरपरौ विविच्याह । प्रथमायामित्यादिना । ब्रह्मवाय्वोरपि सर्वदेवतान्तर्भावात् । शिवात्परत्वं सर्वदेवतानाम् । अवरो लक्ष्मीर्वामभागगः द्वितीयायां परमो हरिर्वामभागगः । तृतीयायामवरः सर्वदेवा वामभागगाः । चतुर्थ्यां परमः सर्वदेवा वामभागगाः । पञ्चम्यामवरः शिवो वामभागगः । स्वर्गलोकशब्दार्थमाह । अभिमानीति । स्वर्गाभिमानित्वात् स्वर्गः । लोकनात्प्रकाशनाद्दर्शनाच्च लोकः। तस्मात्स्वर्गलोकनामा शिवः । स यदि परेण वोपसृतः स्वेन

स्वार्थेनाभिव्याहरेदित्येतद्विवृणोति । यदीति । विदुषां देवतानामेवं भविष्यतीत्यस्यार्थो । विद्वांसो देवता यस्मादिति । दिवं संहितामगमदित्यस्यार्थो । हरिश्चैवेति । इति चिन्तयतस्तेषां देवानां प्रसादादञ्जसा फलं भवतीति शेषः । वाक्संहितेति पञ्चालचण्डो वाचा वै वेदाः सन्धीयन्त इत्यस्यार्थमाह । पञ्चालचण्ड इति । वाचं सरस्वतीं संहितेति मन्यत इत्यन्वयः । वाग्वै माता प्राणः पुत्र इत्येतद्व्याचष्टे । मन्यतेऽस्या इति । वाक् प्राणयोर्मातृपुत्रभावं विविच्याह । वेदैरिति । अस्याः सरस्वत्यभिमन्यमानायाः वाचः । अथातः प्रजापतिसंहितेत्येतद्विवृणोति । प्रजापत्याख्यशर्वेणेति । सैषाऽदितिः संहितेत्यत्र अदितिशब्दार्थमाह । विष्णुरेवादितिरिति । पिता च माता च पुत्रश्च प्रजननं चेति पदार्थमाह । स एवेति । स भगवान्माननात् सम्भावनात् मातृनामकः । सर्वसम्भावयितृत्वान्मातृनामक इत्यर्थः । पुत्रः सन्धिरित्यस्य व्याख्यानम् । पोषकत्वादिति । असौ जनार्दनः पूतितो नरकात् त्राणात्पुत्रनामा पुत्रसंस्थश्च पुरुषोत्तमः सन्धानकर्तृत्वात्सन्धाननामा । वर्णसन्धानकर्मणिस्थित इति शेषः । परो विष्णुर्जनकत्वात्प्रजननाभिधः । प्रजातिकर्मसंस्थश्चोत्पत्तिक्रियासंस्थश्च विष्णुरेव संहिता हि । वासुदेवादिरूपेण एवं जायापतिपुत्रप्रजननेष्वधिदैवं पूर्ववर्णोत्तरवर्णसन्धिसन्धानेषु चतुर्षु चतुर्धाऽवस्थितो यो विष्णुः स एव दिविसंस्थश्च क्रीडनात् द्युनामा । स एव दिविसंस्थश्चेत्यारभ्यादितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वमित्यस्य व्याख्यानम् । अन्तरेवेक्षणादीक्ष्यत्वादन्तरिक्षोऽतरिक्षनामा । प्रसङ्गात्पृथिवीशब्दं निर्वक्ति । पृथिवीति । ज्ञानद्युतेर्ज्ञानाख्यप्रकाशरूपत्वात्प्राणे वायौ रतेः रमणादसौ रमत इत्यसुराख्यश्च । जनिं तवयति प्रकाशयतीति जनित्वम् । रथन्तरमाजभारावसिष्ठः । भरद्वाजो बृहदाचक्रे अग्नेरित्युदाहृतमन्त्रमादित आरभ्य व्याचष्टे । प्रथश्चेदित्यादिना ।

प्रथश्च यस्य सप्रथश्च सामाऽऽनुष्टुभस्य हविषो हविर्यत्[1] ।
धातुर्द्युतानात्सवितुश्च विष्णोः रथन्तरमाजभारा वसिष्ठः ॥

---

१. ऋ. १०/१८१/१

ते विन्दन्मनसा दीध्याना यजुष्कन्नं प्रथमं देवयानम् ।
धातुर्द्युतानात् सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः[१] ॥

अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् ।
धातुर्द्युतानात्सवितुश्च विष्णोरासूर्यादभरन् घर्ममेते[२] ॥

हविषो हविर्नाम्नो हरेर्मखे हविर्यत् अयत् यापयामास योऽनुष्टुब्देवता नृसिंहोऽसावस्य जगतः स्वमुखे हवनाद्धविरित्यभिधीयते । धातुर्द्युतानात्सवितुश्च विष्णोरित्यस्य व्याख्या । चतूरूपाज्जनार्दनादिति । आजभारेत्यस्यार्थः । आजहारेति । सा चास्मै वसिष्ठाय विद्यां ज्ञानं प्रददौ । धात्रादि पदचतुष्टयार्थमाह । धातेति । ते विदंन्नित्यस्यार्थः । चतूरूपमित्यादि । मनसा दीध्याना इत्यस्यार्थो । ध्यात्वेति । यजुष्कन्नं प्रथमं देवयानमिति पादार्थमाह । यजनीय इति । स्कन्दनात्सर्जनाद्वासुदेवः प्रथमः प्रथमनामा । भरद्वाजो बृहदाचक्रे अग्नेरित्यस्य व्याख्यानम् । आजहारेत्यादि । विष्णोश्चातुरात्म्याच्चतुरात्मसमुदायात् समुद्गतम् । निर्गतं बृहन्नामकं तद्रूपं भरद्वाजमुपगम्य तस्मै मोक्षवरं प्रादात् । स भगवान्सर्वभूतानामग्र्यत्वादग्निरित्यभिधीयते । अविन्दन्ते अतिहितं यदासीत्यस्यार्थः । एवं चत्वार एव ते अविन्दस्तं चतुर्मूर्तिमिति । गुहायां संस्थितमित्यनेनाध्यात्ममप्यविन्दन्नित्युक्तं भवति । अभिहितमित्यस्यार्थो । अतीवहितमस्येति । यज्ञस्य धाम परममित्येतद्विवरणम् । सर्वज्ञत्वादिति । यद्गुहायामप्यविन्दन् तद्विष्णोः परमं तेजो हीत्यन्वयः । आसूर्यादभरन् घर्ममेते इत्यस्य । तस्मादेव चतुर्मूर्तेरित्यादि घर्षणात्संहारात् । सूक्ततात्पर्यमाह । निर्गत्येति । विप्रक्षत्राभिसंस्तुताद्वसिष्ठभरद्वाजप्रथसप्रथैः संस्तुताच्चतुर्मूर्तेर्निर्गत्य प्रथादीनां चतुर्णां पुरुषार्थचतुष्टयं दत्वा स्वकीयां तनुं जगाम । प्रथश्च यस्य स प्रथश्चेत्यादि वाक्यं योजयति । यस्येत्यादिना । एकः सुपर्णः स समुद्रमित्यत्र स इति परामर्शविषयं दर्शयितुं-

चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीकावयुनानि वस्ते[३] ।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् ॥ इति ।

---

१. ऋ. १०/१८१/३ २. १०/१८१/२. ३. ऋ. १०/११४/३

मन्त्रं व्याचष्टे । चतुःशिखण्डामिति । चतुष्कपर्देत्यस्यार्थः । चतुःशिखण्डामिति । चतुर्वेणीकृतकेशपाशामित्यर्थः । सुपेशा शोभनावयवा । पिश अवयव इति धातोः । घृतप्रतीका प्रकाशमानदेहा । घृ क्षरणदीप्त्योः । प्रतीको देहः । वयुनानि ज्ञानानि वस्ते आच्छादयति ज्ञानैराच्छादयति पूर्णज्ञानेनेत्यर्थः सुपर्णा सुपर्णौ सुष्ठु परमानन्दरूपौ वृषणा वृषणौ । वृष सेचन इति धातोः । सर्वाभीष्टसेचकौ द्विरूपौ । विष्णुः तस्यां रमायां निषीदतुः। निषण्णावभूताम् । यत्र यस्मिन् द्विरूपे हरौ देवाः भागधेयं स्वस्वविहितं कर्म दधिरे । अर्पितवन्तः। एवं प्रकृतं भगवन्तं स इति परामर्शविषयं दर्शयित्वा तन्मन्त्रं व्याचष्टे । एक एवेति । स इदं विश्व भुवनं विचष्टे इत्यस्यार्थः । सर्वं पश्यतीति । तं पाकेन मनसा पश्यमन्तित इत्यस्यार्थमाह । परिपक्केनेति । तं माता रेळ्हि मातरमित्येतद्विवृणोति । मातेवेति । लिहते लिह्यत इत्यनेन तावन्योन्यं रीळ्ह इत्यस्यार्थ उक्तो भवति । अन्योन्यसम्बद्धौ तिष्ठत इत्यभिप्रायः ॥

बृहद्रथन्तरयोर्बृहन्नाम्नो नारायणस्य रथन्तरनाम्ना लक्ष्म्याश्च रूपेणार्द्धनारीनरात्मना मिलितेन रूपेण संहितापूर्वोत्तरवर्णयोर्मध्ये सन्धीयते इति तार्क्ष्यो मन्यते । रथन्तरस्य रूपं वाग्वै । वाचि स्थितं वाङ्नामकं च प्राणः प्राणस्थप्राणनामकं बृहतो रूपं वाचा च प्राणेन चेत्युभाभ्यां रथन्तरबृहद्भ्याम् । उ एव । संहिता सन्धीयते खलु एतस्यामुपनिषदि स्म एतामुपनिषदमुद्दिश्यैव तार्क्ष्यः संवत्सरं गुरोर्गाः रक्षयते अरक्षत । ह प्रसिद्धौ । एतस्यां हस्म मात्रायाम् एतावन्मात्रमेवोद्दिश्य संवत्सरं गा रक्षयते तार्क्ष्यः । तदप्येतदृषिणोक्तम् । लक्ष्मीनारायणयोः रथन्तरबृहच्छब्दवाच्यत्वं वसिष्ठो रथन्तरं रथन्तरनाम्नीं रमामाजभार आजहार । भरद्वाजोऽग्नेरग्निनाम्नश्चतुमूर्तेर्बृहदाचक्रे बृहन्नामकं नारायणमाह्वयामासेति । स य एवमेतामित्यादेरुक्तोऽर्थः । वाक् प्राणेन संहितेति कौण्ठरव्यः । कुण्ठरवात्मजः । वाक् रमा प्राणेन हरिणा सह मिलिता संहितेत्याह । प्राणो हरिः । पवमानेन वायुना मिलितः संहितादेवता । पवमानो विश्वैर्देवैर्मिलितः । संहिता विश्वेदेवाः स्वर्गलोकेन शिवेन मिलिताः संहिता स्वर्गो लोकः स्वर्गाभिमानित्वाल्लोकनाच्च

स्वर्गलोकनामा शिवः ब्रह्मणा चतुर्मुखेन मिलितः संहिता । कौण्ठरव्यः एवं पञ्चसंहिता आह । सैषा संहिता अवरपरा अवराद्या परान्ता । नारायणापेक्षया लक्ष्म्या अवरत्वात् । तस्याश्चादित्वात् रुद्रापेक्षया ब्रह्मणः परत्वात् तस्य चा तत्वात् । स य उपासकः एतामवरपरां संहिताम् एवं हैव वेद सः प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन तथा सन्धीयते । एषा संहिता यथाऽनपायिनी स एवं जानन् परेणोपसृतो वाऽनुसृतः प्रार्थितो वेति यावत् । स्वेनार्थेन वा स्वार्थं वा यदि इमां संहितामवरपरां संहितामभिव्याहरेत् तर्हि अभिव्याहर्षन्नेवाभिव्याहर्तुमिच्छन्नेवेति विद्यात् । कथम् । संहिता संहितादेवता श्रीविष्णुर्दिवमगमत् देवेष्वनुग्रहं कर्तुं स्वर्गलोकमगमत् । विदुषां देवानाम् एवमुक्तफलं भविष्यतीति विद्यात् । चिन्तयेदिति पूर्वोणान्वयः । तथा चिन्तयतः फलं शश्वत्तथा स्यात् । देवानामनुग्रहेण यथोक्तं तथा स्यात् स य एवमेतां संहितामित्युक्तोऽर्थः । तत्तात्पर्यं पुनः फलकथनम् । पञ्चालचण्डः पञ्चालचण्डनामा मुनिः वाक् सरस्वती संहिता इति मन्यते । वाचः संहितात्वमुपपादयति । वाचा वागनुग्रहेण वेदाः सन्धीयन्ते संहिततयोच्चार्यन्ते । वाचा च्छन्दांसि सन्धीयन्ते । वाचा मित्राणि सन्दधति । वाचा सर्वाणि भूतानि सन्धीयन्ते । अथो तस्मादिदं सर्वं वागेव वागधीनमेव । तत्तस्माद्वागधीन-त्वात्सर्वस्य । यत्रैतद्वेदादिकमधीयते वा भाषते वा तदा प्राणः प्राणस्थो विष्णुर्वाचि भवति वागाश्रितो भवति । वाचि व्यज्यत इत्यर्थः । तदा वाक् प्राणं रेळिह लेढीव प्रतिपादयतीत्यर्थः । "अथ यत्र तूर्ष्णीं वा भवति तूर्ष्णीं तिष्ठति वा स्वपिति वा पुरुषः तदा वाक् प्राणे भवति । प्राणाश्रिता भवति । तदा प्राणो वाचं रेळिह लेढीव तावन्योन्यं रेळिह वाक्प्राणावन्योन्यमास्वादयतः । वाङ्माता वै व्यञ्जकत्वात् प्राणः पुत्रः व्यज्यत्वात्" । तदप्येतदृषिणोक्तम् । तावन्योन्यं रेळिह इति वाग्प्राणयोर्मातृपुत्रभावश्चेत्येतदृषिणाऽप्युक्तम् । स एकः सुपर्णः लक्ष्मीरमणः सुष्ठु परमानन्दरूपः । परमात्मा समुद्रमाविवेश क्षीरसमुद्रं प्रविवेश । स इदं विश्वं भुवनं विचष्टे पश्यति । पाकेन परिपक्वेन मनसा अन्तितः समीपे अपश्यं पश्यामि । तं माता वाक् रेळिह । स मातरं रेळिह उ रेळिह वेति । स य एवमेवमेतां संहितामित्यादेरुक्तोऽर्थः । अथातः प्रजापतिसंहिता । शिवेनोक्ता संहितोच्यते । जाया पूर्वरूपं जायागतो भगवान्

पूर्ववर्णप्रतिपाद्यः पतिरुत्तररूपं पतिगतः उत्तरवर्णप्रतिपाद्यः । पुत्रः सन्धिः । पुत्रगतः पुत्रनामा सन्धिगतः पोषकत्वात्सन्धिनामा । धिनुपुष्टाविति धातुः । प्रजननं प्रजननकर्मसंस्थः जनकत्वात्प्रजननाभिधः सन्धानम् । पूर्वोत्तरवर्ण-सन्धानकर्मणि स्थितः सन्धाननामा सन्धानकर्तृत्वात् सैषा संहितादेवता भगवान् अदितिः अदितिनामा । यदिदं सर्वमदितिर्हि । अदितिः अदितिनामा । यदिदं किञ्चेदं सर्वमदितिर्हि । अदितिनाम्नो विष्णोरधीनं हि । इदं सर्व-शब्दजातम् अदितिवाचकं हि । पिता चादितिनामा स भगवान् पातृ-त्वात्पितृनामा । माननान्मातृनामा । पुतो नरकात् त्राणात् पुत्रनामा च । प्रजननकर्मगतत्वात्प्रजनननामा । तदप्येतद्विष्णोरदितिशब्दवाच्यत्वं पित्रादिशब्द-वाच्यत्वं च ऋषिणोक्तम् अदितिर्माता स पिता स पुत्र इति । स य एवमेतां संहितां वेदेत्यस्योक्तोऽर्थः ॥ १ ॥

इति श्रीविश्वेश्वरतीर्थविरचितायाम् ऐतरेयभाष्यटीकायां
तृतीयप्रघट्टके प्रथमोऽध्यायः ॥

# द्वितीयोऽध्यायः

ऐतरेयोपनिषत्

॥ हरिः ॐ ॥ प्राणो वंश इति स्थविरः शाकल्यस्तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितस्तस्यैतस्यात्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमि-त्येतदन्यच्चतुर्थमन्तस्था रूपमिति ह स्माऽह ह्रस्वो माण्डूकेयस्त्रयं त्वेव न एतत्प्रोक्तं तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टि शतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमय-श्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतमहः संमानं चक्षुर्मयं

श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्वां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान्भवति सर्वमायुरेति ॥ १ ॥

भा— ॐ ॥ गृहस्याच्छादनादीनां मध्यवंशो यथाऽऽश्रयः ।
तथेन्द्रियाभिमान्यादिदेवानां वायुराश्रयः ॥
तेषु सर्वेषु भगवान्बहुरूपो हरिः स्थितः ।
विष्णुनामाऽक्षरेष्वेवमन्येष्वपि तदर्थतः ॥
प्राणनामाऽपि भगवान्प्राणस्थश्चोष्मसु स्थितः ।
ऊष्मनामा समर्थत्वात्स एव भगवान्हरिः ॥
पूर्णत्वादात्मनामाऽसौ प्रतिमात्वादमुष्य तु ।
सङ्घात आत्मशब्दोक्तो ह्यस्थिरश्चास्थिनामकः ॥
अस्थिस्थितो हरिः स्पर्शसंस्थितः स्पर्शनामकः ।
स्पर्शहेतुत्वतः स्पर्शनामा स भगवान्हरिः ॥
मज्जासुस्थः स मज्जाख्यो मदं जनयतीति ह ।
स एव स्वरसंस्थश्च स्वराख्यः स्वरतेः प्रभुः ॥
प्रमाणं सारयेद्यस्मान्मांसाख्यो मांससंस्थितः ।
लोहिताख्यो रक्तवर्णो लोहितस्थो जनार्दनः ॥
अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः ।
तत एव विभक्तानि सङ्ख्या तेषां पृथङ् न तत् ॥
तस्मात्सप्तशतान्येव देहे विंशच्च तस्य हि ।
रूपाणि विष्णोर्भागे तु षष्ठ्युत्तरशतत्रयम् ॥
तान्येव विष्णो रूपाणि वत्सराहस्सु सर्वशः ।
अहर्नामा च भगवानहार्यत्वात्प्रकीर्तितः ॥
अहोभिः समसङ्ख्यानि यस्मादध्यात्मगानि तु ।
रूपाणि विष्णोस्तेनायमहस्संमान उच्यते ॥

पूर्णदर्शनशक्तित्वाच्चक्षुर्मय उदीरितः[१] ।
तादृक्श्रवणशक्तित्वात्तथा श्रोत्रमयः स्मृतः ॥
छन्दोमयः सत्यकामो मन्तृवक्तृबलात्मकः ।
एवं विद्वांस्तस्य रूपाण्याप्नोति ज्ञानपुत्रवान् ॥
पीयमानं शमाप्नोति प्राप्याहर्नामकं हरिम् ॥ १ ॥

टी— प्राणो वंश इति स्थविरः शाकल्य इत्येतत्खण्डं व्याचष्टे । गृहस्याच्छादनादीनामित्यादिना । विष्णुनामाक्षरेष्वेवं देहेन्द्रियतदभिमानिषु यथा एवं व्यवस्थितः अन्येष्वपि अन्यनामाक्षरेष्वपि तदर्थतः सर्वनाम्नां विष्णुनामार्थत्वात् । तस्यैतस्यात्मनः प्राण ऊष्मरूपमित्यदि व्याचष्टे । प्राणनामेत्यादिना । सर्व आत्मा समाहित इत्यत्रात्मशब्दार्थमाह । पूर्णत्वादिति । सङ्घातो देहः अमुष्यप्रतिमात्वादात्मशब्दोक्तः । स्वराख्यः स्वर इत्याख्यावान् स्वरतेः स्वरतत्वात् प्रमाणं सारयेद्गमयेत् प्रवर्तयेदिति यावत् । अस्थिस्थान्येव हरे रूपाणि पर्वस्वपि संनिहितानि । तत एवास्थितगतरूपेभ्य एव विभक्तानि पृथक् कृतानि यतः तस्मात्तेषामस्थिगतानां पर्वगतानां रूपाणां च पृथक्सङ्ख्या न । अस्थिगतरूपेष्वेव पर्वगतरूपाणामन्तर्भावः । तथा च त्रीणीतः षष्ठिशतानीत्यस्यार्थः । इतः दक्षभागेऽस्थिमज्जागतानि रूपाणि त्रीणि षष्ठिशतानि । षष्ठ्युत्तरत्रिशतानीत्यर्थः । इतो वामभागे च अस्थिमज्जागतानि हरे रूपाणि षष्ट्युत्तरत्रिशतानीति व्याख्यातं भवति । "रूपाणि विष्णार्भागे तु षष्ठ्युत्तरशतत्रय"मित्यनेन तानि सप्तविंशतिशतानि भवन्तीत्यस्यार्थः । तस्मात्सप्तशतानीति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इत्यस्यार्थमाह । तान्येवेति । तान्येव अध्यात्मगतविंशोत्तरसप्तशतान्येव विष्णो रूपाणि । वत्सराहस्सु रात्रिषु च स्थितानि । स एषोऽहःसंमान इत्येतद्व्याचष्टे । अहोभिरिति । चक्षुर्मयः श्रोत्रमयः इत्यादि व्याचष्टे । पूर्णदर्शनशक्तित्वादित्यादिना । तथाशब्दः समुच्चये । सत्यकामश्छन्दोमय इत्युच्यते । मन्तृ-

---

१. सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ गी. १३/१४
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोभाहुः...... इति श्रुतिः ।

वक्तृबलात्मक इत्यनेन मनोमयो वाङ्मय आत्मेत्युक्तार्थं भवति । स य एवमेतमहः संमानमित्यादितात्पर्यमाह । एवं विद्वानिति । पुत्री पशुमानित्यस्यार्थः । ज्ञानपुत्रवान्, नीयमानं शमाप्नोति प्राप्याहर्नामकं हरिमित्यनेन ।

प्राणो मुख्यवायुर्वंशः सर्वाश्रय इति स्थविरः शाकल्य आह । तद्यथा शालावंशे शालामध्यगते वंशे । अन्ये सर्वे वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुःश्रोत्रं मनोवागिन्द्रियाणि शरीरतदभिमानिनश्च समाहिताः आश्रिताः । किं बहुना सर्व आत्मा पूर्णत्वादात्मनाम्नो हरेः प्रतिमारूपः सर्वः सङ्घातः समाहितः प्राणे तेषु सर्वेषु बहुरूपी भगवान्समाहितः । तस्यैतस्यात्मनः सङ्घातगतस्यात्मनः परमात्मनः । प्राणः अध्यात्मप्राणगतं रूपम् अधिदैवम् । ऊष्माक्षरप्रतिपाद्यं समर्थत्वादूष्मनामकम् ऊष्मसु स्थितम् । अस्थीनि अस्थिरत्वादस्थिनामकानि अस्थिस्थितानि हरिरूपाणि अधिदैवम् । स्पर्शरूपं स्पर्शहेतुत्वात्स्पर्शनामकानि रूपाणि स्पर्शगतानि स्पर्शाक्षरप्रतिपाद्यानि । मज्जानः मदजनकत्वान्मज्जानामकानि मज्जासु स्थितानि हरिरूपाणि । अधि-दैवम् । स्वररूपं स्वरगतानि स्वरप्रतिपाद्यानि स्वस्मिन् रतत्वात्स्वरनामकानि । मांसं मां प्रमाणं सारयति प्रवर्तयतीति मांसनामकं मांसगतं लोहितं लोहितगतं रक्तवर्णत्वाल्लोहितनामकम् । इति ह स्माह स्थविरः शाकल्यः । ह्रस्वो माण्डूकेयः इति वक्ष्यमाणप्रकारेणाह नोऽस्मत्पक्षेऽस्थ्नां मज्ज्ञां पर्वणामिति एतत् एतेषां मध्ये त्रयमेव प्रोक्तम् । तस्यैतस्य सङ्घातगतस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रयस्य त्रयगतस्य हरे रूपाणि । इतो दक्षभागे त्रीणि षष्टिशतानि षष्ठ्युत्तरत्रिशतानि । इतो वामभागे त्रीणि षष्टिशतानि षष्ठ्युत्तरत्रिशतानि सन्ति। एवं तानि मिलितानि रूपाणि सप्तविंशतिशतानि भवन्ति । तानि रूपाणि संवत्सराहोरात्रगतानि संवत्सरस्यैकसंवत्सरस्याहोरात्राः सप्तशतानि विंशतिश्च वै । स एषोऽध्यात्मगतो भगवान्यावन्ति संवत्सराहोरात्राणि सन्ति तावद्रूपत्वादहः संमानोऽहार्यत्वादहर्नामकश्च । पूर्णदर्शनशक्तित्वाच्चक्षुर्मयः । संपूर्णश्रवणशक्तित्वात् श्रोत्रमयः । सत्यकामत्वाच्छन्दोमयः । सर्वमन्तृत्वान्म-नोमयः । सर्ववक्तृत्वाद्वाङ्मयः । सम्पूर्णबलरूपत्वादात्मा । स य

एवंचक्षुर्मयत्वादि गुणोपेतमात्मानं वेद । सोऽह्याम् अहर्नामकभगवद्रूपाणां सायुज्यं सरूपतां सलोकताम् अश्नुते प्राप्नोति । पुत्री ज्ञानाख्यपुत्रवान् पशुमान्भवति । भगवन्तं प्राप्य पीयमानसुखवान् भवति । सर्वमायुरेति नित्यायुष्मान्भवति ॥ १ ॥

ऐतरेयोपनिषत्

अथ कौण्ठरव्यस्त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टि शतान्यूष्मणां त्रीणि षष्टि शतानि सन्धीनां यान्यक्षराण्यवोचामाह्नानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान्सन्धीनवोचामाहोरात्राणां ते सन्धय इत्यधिदैवतमथाध्यात्मं यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मं यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्ममेष ह वै संप्रति प्राणो यन्मज्जैतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न सम्भवेद्यान्सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मं तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवत्यशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसम्पादयन्ति स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान्भवति सर्वमायुरेति ॥ २ ॥

भा— एवमुक्तप्रकारेण तस्य ह्यक्षरनामकम् ।
अशीत्युत्तरसाहस्ररूपं वर्णेषु संस्थितम् ॥
विष्णुनाम्नोऽथवाऽन्येषु पञ्चाशत्सङ्ख्यकेष्वपि ।
तावत्सङ्ख्यानि देहेषु पृथङ्मज्जास्थिपर्वसु ॥
रूपाणि विष्णोस्तावन्ति चेष्टकानि पृथक्पृथक् ।
अर्कस्थितबृहत्याख्यरूपाण्यह्नां च सर्वशः ॥

सम्पादकानि तान्येव तान्यक्षरमितानि च ।
अस्थ्यादिस्थितरूपाणि तान्युपास्य विमुच्यते ॥ -इति च ।

तस्यैतस्यात्मनस्तस्य शरीराख्यस्यात्मनो य आत्मा आदानादिकर्ता तस्य परमात्मन एतस्य । अस्थ्नां मज्ज्ञां पर्वणां च मिलितानामपि विंशोत्तरसप्तशतत्वोक्तेस्तत्रस्थविष्णुरूपाण्येवोच्यन्त इति सिद्धम् । अस्थ्यादीन्येव चेदशीत्युत्तरसहस्राणि सन्ति हि । षणष्णुरित्येतानि विष्णुनामगतान्यूष्माक्षरसन्धिनामकानि तद्गतभगवद्रूपाणि मुख्यतस्तन्नामकानि ।

अहार्यत्वादहर्नामा रात्रिनामा रतिप्रदः ।
सन्धानात्सन्धिनामाऽसौ स्वयं नारायणः प्रभुः ॥
सन्ध्यूष्माक्षरगाण्यस्य विष्णो रूपाणि सर्वशः ।
सन्ध्यारात्रिदिवास्थानि साशीतिकसहस्रकम् ॥
तान्येवास्थिषु मज्ज्ञासु पर्वस्वपि च सर्वशः ।
परज्ञानात्तु पर्वाणि विष्णो रूपाणि तानि हि ॥
अस्थानान्मदनाच्चैव ह्यस्थिमज्ज्ञाभिधानि च ।
व्यक्तिर्मज्ज्ञासु तस्यैव प्राणो मज्ज्ञासु संस्थितः ॥
मज्ज्ञैव रेतो भवति रेतसिस्थो विशेषतः ।
प्राणस्तेन हि तद्रेतोयुक्तं प्राणेन सर्वदा ॥
यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत्क्वचित् ।
विशेषप्राणसम्बन्धवर्जितान्यत एव हि ॥
न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि ।
विशेषेण स्थितः प्राणः प्राणे चैव विशेषतः ॥
स्थितो नारायणो देवस्तस्मान्मज्ज्ञासु च स्थितः ॥ -इति च ।

मज्ज्ञास्वधिकसन्निधानज्ञापनार्थमिदं वचनम् । अशीत्युत्तरसहस्रवर्णानामभावाच्च तत्स्थविष्णुरूपाण्येव तत्सङ्ख्यानीति सिद्धम् । अर्के

निलीनत्वेनादृश्यत्वेन स्थिता भगवत्प्रादुर्भावा अर्कलिनः । त एव शरीरे स्थित्वा सहस्रं बृहतीः सम्पादयन्ति । वाक्प्रेरकत्वाद्विष्णुनामार्थवत्त्वादेव च बृहतीसहस्रस्य तद्देवताश्चैतान्येवाशीत्युत्तरसहस्ररूपाणि एतान्येवाहः-प्रवर्तकानि च । अहःशब्देन यज्ञो दिवसश्चोभावप्यभिप्रेतौ ।

यज्ञानां दिवसानां च साशीतिकसहस्रकैः ।
विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा ॥
बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः ॥ -इति च ॥ २ ॥

टी— अथ कौण्ठरव्य इत्येतत्खण्डं व्याचष्टे । एवमुक्तप्रकारेणेत्यादिना । एवमुक्तप्रकारेणाध्यात्माधिदैवभेदेन भगवद्रूपाणि बहूनि द्विधा सन्निहितानी-त्युक्तप्रकारेण तस्य विष्णोरक्षरनामकम् अशीत्युत्तरसहस्ररूपं विष्णुनाम्नो वर्णेषु संस्थितम् । अन्येष्वन्यनामगतवर्णेषु पञ्चाशत्संख्याकेष्वप्यकारादिष्वपि तावत्स-ङ्ख्याकानि रूपाणि सन्ति । यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्म-मित्यादेस्तात्पर्यम् । देहेषु पृथग्मज्जास्थिपर्वसु रूपाणि विष्णोस्तावन्तीति । अधिदैवाध्यात्माख्यस्थानभेदात्पृथगिति तावन्ति अशीत्युत्तरसहस्रसङ्ख्याकानि । अशीतिसहस्रं वाऽर्कलिनो बृहतीरहरभिसम्पादयन्तीत्यस्य तात्पर्यमाह । अर्केति। अनेनार्कलिन इत्यस्यार्के लीनतया स्थितत्वादर्कलिनामानीति । बृहतीरित्यस्य बृहत्याख्यानीत्यर्थ उक्तो भवति । तान्येवाध्यात्मगतान्येव । अर्कस्थितबृहत्याख्यरूपाण्यर्कलिबृहतीनामकानि रूपाणि सर्वशः अह्नां सम्पादकानि । अयं भावः । अशीत्युत्तरसहस्रार्कलिन अहः सम्पादयन्ति । तान्येव पुरुषे स्थित्वा वाक्प्रेरकतया बृहतीः सम्पादयन्तीति । तान्यस्थ्या-दिस्थितरूपाण्यक्षरमितानि विष्णुनामाक्षरेषु मितानि प्रमितानि । विष्णु-नामाक्षरगतरूपसमसंख्यानि । अनेन स एषोऽक्षरसंमानः इत्येतदुक्तार्थम् । तानि अध्यात्माधिदैवतानि भगवद्रूपाण्युपास्य विमुच्यते । अनेन स य एवमेत-मक्षरसंमानमित्यादितात्पर्यमुक्तं भवति । तस्यैतस्यात्मनः प्राण ऊष्मरूप-मित्येतद्व्याचष्टे । तस्येति । अस्थ्यादीनामशीत्युत्तरसहस्रसंख्याकत्वात्तानि सप्तत्रिंशतिशतानि भवन्तीत्युक्तिः कथमित्यत आह । अस्थ्नां मज्ज्ञामिति ।

विंशोत्तरसप्तशतत्वं नास्थ्यादीनां किन्तु तत्रस्थभगवद्रूपाणामेवेति भावः । अस्थ्यादिसंख्याविवक्षायां बाधकमाह । अस्थ्यादीन्येवेति । त्रीणि षष्टिशतान्यक्षराणामित्यादावक्षरोष्मसन्धिशब्दानां मुख्यतो भगवन्नामत्वमाह । षणष्णुरति । विष्णुनामगतान्यूष्माक्षरसन्धिनामकानि षणष्णुरित्येतानि तद्गतभगवद्रूपाणि मुख्यतस्तन्नामकानि । यान्यक्षराण्यवोचामाहानि तानीत्यादिगताहरादिशब्दान् भगवति निर्वक्ति । अहार्यत्वादिति । सन्ध्यूष्माक्षराण्यस्य विष्णोः सर्वशो रूपाणि सन्ध्यारात्रिदिवास्थानि । एवमेतत्सर्वं मिलितं साशीतिकसहस्रं भवति । पर्वादिशब्दान्निर्वक्ति । परज्ञानादिति । एष ह वै सम्प्रति प्राणो यन्मज्जैतद्रेत इत्येतद्विवृणोति । व्यक्तिरिति । तस्य विष्णोर्मज्जास्वेव व्यक्तिरधिकेति शेषः । प्राणो मज्जासु विशेषतः संस्थितो यतः । यन्मज्जैतद्रेत इति प्राणस्य मज्जासु विशेषसंनिधानोपपादकं वाक्यं विवृणोति । मज्जैवेति । मज्जैव रेतो भवति यतः । अतः प्राणो विशेषतो रेतसिस्थः तेन प्राणसंनिधानेन तद्रेतः । यदि प्राणेन युक्तं तर्हि सर्वदा गर्भत्वं व्रजेत् । यदि रेतसि प्राणो न तर्हि तद्रेतो गर्भत्वं न व्रजेत् । अनेन न ह वा ऋते प्राणाद्रेतः सिच्यते । यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न सम्भवेदित्येतदुक्तार्थं भवति । उपसंहरति । अतः स हि रेतसीति । तस्मात्प्राणस्य मज्जासु विशेषतः स्थितत्वात् एष ह वै सम्प्रति प्राणो यन्मज्जैतद्रेत इत्यादेस्तात्पर्यमाह । मज्जास्विति । इदं वचनं एष ह वै सम्प्रति प्राण इत्यादिविशेषवचनम् । त्रीणि षष्टिशतान्यक्षराणामित्यादौ भगवद्रूपाण्येवोच्यन्त इत्यत्र युक्तिमाह । अशीतीति । अशीत्युत्तरसहस्रवर्णानामभावात् चशब्देन साशीतिसहस्रकमिति स्मृत्या वा भगवद्रूपविषयतया व्याख्यातत्वाच्च । तत्स्थविष्णुरूपाणि अक्षरादिस्थतविष्णुरूपाण्येव तत्संख्यानीति सिद्धम् । अशीतिसहस्रं वाऽर्कलिन इत्यादि व्याचष्टे । अर्क इति । शरीरे पुरुषशरीरे पुरुषे स्थित्वा बृहतीसंपादने हेतुर्वाक्प्रेरकत्वादिति बृहतीसहस्रस्य विष्णुनामार्थवत्वादेव चैतानि विष्णुनामगतान्यशीत्युत्तरसहस्ररूपाणि तद्देवताश्च बृहत्याश्च प्रतिपाद्यदेवता भवन्ति । एतान्येवार्कस्थितान्येवाहःप्रवर्तकानि च । अहःशब्दस्य यज्ञविवक्षायां पुरुषस्थितान्यप्यहः प्रवर्तकानीत्युक्तं भवति । उक्तार्थे प्रमाणमाह ।

यज्ञानामिति । बृहत्युक्थस्य प्रवर्तकः । पुरुषे स्थित्वा वाक्प्रेरकतयेति शेषः । एतानि रूपाणि साशीतिकसहस्ररूपाणि बृहत्युक्थेन वाच्यानि प्रतिपाद्यानि ॥

अथ कौंठरव्य इत्याह । अक्षराणां विष्णुनामाक्षरगतानामक्षरनामकानां रूपाणां त्रीणि षष्ठिशतानि षष्ठ्युत्तरत्रिशतानि ऊष्मणां विष्णुनामगतोष्मणाम् ऊष्मगतानां समर्थत्वादूष्मनामकानां रूपाणां त्रीणि षष्ठिशतानि संधीनां विष्णुनामसन्धिगतानां सन्धानात्सन्धिनामकानां रूपाणां त्रीणि षष्ठिशतानि । यान्यक्षराण्यवोचाम विष्णुनामाक्षरगतान्यक्षरनामकानि यानि रूपाण्यवोचाम तान्यहार्यत्वादहर्नामकानि संवत्सराहर्नियामकानि । यान्यूष्मण ऊष्मनामकानि रूपाण्यवोचामः ताः । तानि रूपाणि रात्रयः रतिदातृत्वाद्रात्रिनामकानि वत्सररात्रिगतानि । यान्सन्धीन् सन्धिगतान्यवोचाम । तेऽहोरात्राणां सन्धय अहोरात्रसन्धिगतानि सन्धिनामकानीत्यधिदैवतं भगवद्रूपाणि । अथाध्यात्मं भगवद्रूपाण्युच्यन्ते । यान्यक्षराण्यधिदैवतमवोचाम अधिदैवतं यान्यक्षरनामकानि रूपाण्यवोचाम तानि रूपाण्यध्यात्मम् अस्थीन्यस्थिगतानि अस्थिरत्वादस्थि-नामकानि अधिदैवतं यानूष्मण ऊष्मनामकरूपाण्यवोचाम ते प्रादुर्भावाः अध्यात्मम् । मज्जानो मज्जागताः मदजननान्मज्जानामकाः प्राणो मुख्यवायुः सम्प्रति सम्यक् एष ह वै एतासु मज्जासु विशेषतः स्थितो वै । मज्जासु स्थिते प्राणे भगवान्विशेषतः संनिहितः यन्मज्जा यन्मज्जागतं प्राणरूपं एतद्रेतः एतदेव रेतःस्थितं प्राणादृते रेतो न सिच्येत ह वै । प्राणसंनिधानं विना रेतो न गर्भत्वं प्राप्नोतीति भावः । यद्वा यदि प्राणादृते रेतः सिच्येत तत्प्राणसंन्निधानं विना रेतः सिच्येत तर्हि पूयेत् नश्येत् । न संभवेन्न गर्भी भवति । यान्सन्धीन् संधिनामकप्रादुर्भावान् अवोचाम तान्यध्यात्मं पर्वाणि परज्ञानात्पर्वनामकानि । अस्थ्नां मज्ज्ञां पर्वणामिति तस्यैतस्य त्रयस्य एतत्त्रयगतस्य हरे रूपाणि इतो दक्षभागे पञ्चशतानि चत्वारिंशच्च भवन्ति । इतो वामभागे पञ्चशतानि चत्वारिंशच्च भवन्ति । तद्भागद्वयस्थं रूपं मिलितम् अशीतिसह-स्रमशीत्युत्तरसहस्रं भवति । अशीतिसहस्रमर्कलिनः अशीत्युत्रसहस्रसङ्ख्याकाः अर्कलीनत्वाददृश्यतया स्थितत्वादर्कलिनामकाः भगवत्प्रादुर्भावाः पुरुषे स्थित्वा पुरुषवाङ्नियामकतया बृहतीसहस्रं बृहतीः सम्पादयन्ति ते प्रादुर्भावाः

बृहतीसम्पादकत्वाद्बृहतीनामकाः बृहतीदेवताश्च त एवाहः सम्पादयन्ति । पुरुषे स्थित्वाऽहर्नामकं यज्ञं सम्पादयन्ति । अर्के स्थित्वाह्यानि दिनानि सम्पादयन्ति । स एष भगवानस्थ्यादिगतोऽक्षरसंमानः विष्णुनामाक्षरगतरूपसमानसङ्ख्याकः । चक्षुर्मय इत्यादेरुक्त एवार्थः । अक्षराणामक्षरगतरूपाणाम् ॥ २ ॥

ऐतरेयोपनिषत्

चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसश्छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसो वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसस्तस्माद्ब्रह्माणं ब्रह्मिष्टं कुर्वीत यो यज्ञस्योल्बणां पश्येन्महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्याभावयन्नन्यानि तस्यैतस्यासावादित्यो रसः स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तं–

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च[१] ॥

इत्येतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्व एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय

---

१. ऋ. १/११४/१. (२/२/४)

आत्मा स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ॥ ३ ॥

भा — संसारबाधितैः प्राप्यो बाध्वो वायुरुदाहृतः ।
स हि मोक्षप्रदो विष्णोराज्ञया[1] स उवाच ह ॥
सर्वदेहाभिमानी तु शरीरपुरुषः शिवः ।
सर्ववर्णाभिमानी च शेषोऽसौ च्छान्दसः पुमान् ॥
सर्ववेदाभिमान्येव गरुडो वेदपुरुषः ।
संवत्सराभिमानी तु ब्रह्मैव हि महापुमान् ॥
सारः शिवस्यानिरुद्धनामा देहस्थितो हरिः ।
अ इत्याक्रियते यस्माद्वासुदेवो ह्यकारकः ॥
शेषस्य सारः स विभुर्ब्रह्माख्यो ज्ञानबृंहणात् ।
सङ्कर्षणाख्यस्तु हरिः सारः स गरुडस्य च ॥
ब्रह्मर्त्विक्संस्थितश्चासौ तस्माद्ब्रह्मिष्ठमेव हि ।
कुर्याद्ब्रह्मर्त्विजं तस्मिन्विशेषेण स्थितो हरिः ॥
ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान्हरिः ।
स एवादित्यसंस्थश्च स ह्यादिर्जगतो विभुः ॥
ततश्च सर्वभूतेषु जीवानां विनियामकः ।
स एवादित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ॥
स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।
सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ॥
प्रतिपूरुषमेतस्मात्स्थितो विष्णुर्नियामकः ।
आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रति प्रति ॥
स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ।
मुख्यत्वात्सर्वदेवानामनादीशितृत्वतः ॥

---

१. विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया - इति म.भा.ता.नि.

कर्तृत्वादप्यनीकं स उदैत्सूर्यस्थितो हरिः ।
ज्ञानदत्वाच्च देवानां चक्षुरेनेन दर्शनात् ॥
आपूरयत्सर्वलोकान्प्रकाशेन जनार्दनः ।
आदानात्सर्वजीवानामत्तृत्वात्प्रलयेऽपि च ॥
आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च ।
एवं चतुर्विधो विष्णुः संहितादेवता यदा ॥
ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम् ।
प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः ॥
तदा तु संहितां सम्यङ्मन्येऽहं संधितामिति ।
आह वायुरिमं विष्णुं बृहत्युक्थस्य देवताम् ॥
महाव्रताख्यस्तोत्रस्य चेष्टकानां च देवताम् ।
एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम् ॥
संवसद्रतिदातृत्वाद्ब्रह्मा संवत्सराभिधः ।
नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः ॥
अनन्तमूर्तिर्ब्रह्माऽसावनन्तजगदास्थितः ।
नियामकस्तस्य विष्णुस्तावद्रूपेषु संस्थितः ॥
तत्संवत्सरसंमानः स व्विष्णुः परमेश्वरः ॥ ३ ॥

टी— चत्वारः पुरुषा इत्येतत्खण्डं व्याचष्टे । संसारबाधितैः प्राप्य इत्यादिना । बाधिभिः संसारबाधवद्भिः । वागतिगंधनयोः वायते प्राप्यत इति बाध्वो वायुः । तदुपपादयति । स हीति । शरीरपुरुष इति । यमवोचामेत्यादि व्याचष्टे । सर्वदेहाभिमानीत्यादिना । शरीरपुरुष इत्यनेन दैहिक आत्मेत्युक्तार्थं भवति । यः सर्ववर्णाभिमानी शेषः । असौ च्छांदसः पुमान् इत्यनेन च्छंदःपुरुष इति यमवोचामाक्षरसमाम्नाय एवेत्युक्तार्थम् । सर्ववेदाभिमानी गरुड एव वेदपुरुषः । सर्ववेदाभिमानीत्यनेन येन वेदान्वेद इत्याद्युक्तार्थम् । संवत्सराभिमानीत्यनेन संवत्सर एवेत्युक्तार्थम् । महापुमान् महापुरुषः तस्य योऽयमशरीरः प्रज्ञात्मा स रसः । तस्यैतस्याकारो रसः । तस्यैतस्य ब्रह्मा रसः।

तस्यैतस्यासावादित्यो रसः इत्येतानि व्याचष्टे । सारः शिवस्येत्यादिना । आक्रियत आहूयते । रस इत्यस्य सार इत्यर्थः । सार उत्तमः । असौ सङ्कर्षणो ब्रह्मर्त्विक्संस्थितः यज्ञे ब्रह्माख्ये ऋत्विजि संस्थितः । तस्माद्ब्रह्मिष्ठमतिशयेन ब्रह्मज्ञानिनं ब्रह्मर्त्विजं ब्रह्माख्यमृत्विजं कुर्यात् । हरिस्तस्मिन् विशेषेण स्थितः। सः प्रद्युम्न एव । जगतः आदित्यसंस्थश्च कारणभूतः सर्वभूतेषु ततो व्याप्तश्च । जीवानां विनियामकः । अनेनादित्वात् ततत्वान्नियामकत्वाच्चादित्य इत्युक्तं भवति । स यश्चायमशरीरः प्रज्ञात्मा । यश्चासावादित्य एकमेतदिति विद्यादित्येतद्व्याचष्टे । स एवेति । यः प्रद्युम्नाभिधो हरिः स एवादित्यगः स एव प्रद्युम्न एव । सर्वदेहेष्वनिरुद्धतनुःस्थितः । स भगवानेक एव प्रद्युम्नानिरुद्धाभ्यां सह संकर्षणो वासुदेव इति चतुर्विधः । तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवतीत्येतद्व्याचष्टे । प्रतीति । एतस्मात्पुरुषादित्यगतयोरेकत्वात् । प्रति प्रतिमां प्रतिमां प्रतीतिद्योतकः । चित्रं देवानामित्यृचं व्याचष्टे । स चेतनतमत्वादिति । चेतनतमत्वाद्विशिष्ट चेतनत्वात् । चितरतत्वाच्चित्रम् । अननात् अत् । ईशितृत्वात् ई । कतृत्वात् कम् । देवानां ज्ञानदत्वात् चक्षुः । एतेन एतदनुग्रहेण देवानां दर्शनाच्चक्षुः । सर्वलोकान् प्रकाशेनापूरयन् । आपूरयन्नित्यनेन आ प्रा इत्यस्यार्थः । सर्वलोकानित्यनेन द्यावापृथिवी अन्तरिक्षमित्यस्यार्थः । आत्मा जगतस्तस्थुषश्चेत्येतद्व्याचष्टे । आदानादिति । जगतो जङ्गमस्य तस्थुषः स्थावरस्य चादानात् सर्वजीवानां प्रलयेऽप्यतृत्वाच्च स भगवानात्मेत्युक्तः । एतामनुविधं संहितां सन्धीयमानां मन्य इति । ह स्माह बाध्व इत्येतदभिप्रायमाह । एवमिति । एवं पुरुषादीनां सारतयोक्तश्चतुर्विधो विष्णुः । यदा संहितादेवता तदा पूर्ववर्णस्य नारायणाभिधं रूपं देवता ज्ञायते । अनुविधमित्यस्यार्थः । सम्यगिति । एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त इत्येतद्व्याचष्टे । इमं विष्णुमिति । बृहत्युक्थस्य देवतां बह्वृचाः मीमांसन्ते जानन्तीति शेषः । महाव्रतस्य स्तोत्रस्य चेष्टकानां देवतां मीमांसन्त इति पूर्वेणान्वयः । एतमस्यामेतमित्यादिव्याख्यानम् । एतमेवाखिलजगद्व्याप्तमिति । पूर्णगुणात्मकमिति ब्रह्मशब्दव्याख्यानम् । स एष संवत्सरसंमानः ॥

बाध्वः संसारबाधवद्भिः प्राप्यो वायुः । चत्वारः पुरुषा इत्याह । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति चत्वारः । यः शरीरपुरुष

इत्यवोचाम सोऽयमेव यो दैहिकः सर्वदेहाभिमानी । आत्मा शिवः योऽयमशरीरः प्रज्ञात्मा प्राकृतशरीरवर्जितः प्रज्ञास्वरूपो अनिरुद्धः स तस्य शिवस्य रसः सारो नियामक इति यावत् । यं च्छन्दःपुरुष इत्यवोचाम सोऽक्षरसमाम्नाय एव । सर्ववर्णाभिमानी शेष एव । तस्यैतस्य च्छन्दःपुरुषस्य अ इत्याक्रियमाणत्वादकारो वासुदेवो रसः सारः । यं वेदपुरुष इत्यवोचामासौ सर्ववेदाभिमानी गरुड एव । येन यत्प्रेरणया वेदान् वेद पुमान् । ऋग्वेदं यजुर्वेदं सामवेदं वेद । अनेन तस्य सर्ववेदाभिमानित्वमुक्तं भवति । तस्यैतस्य गरुडस्य ब्रह्मा रसः ज्ञानेन परिपूर्णत्वात् ब्रह्मा संकर्षणो रसो असौ ब्रह्मर्त्विक्संस्थितश्च तस्माद्ब्रह्मिष्टं ब्रह्मज्ञानिनं यज्ञेषु ब्रह्माख्यमृत्विजं कुर्वीत । यो यज्ञस्योल्बणं सारं पश्येत्तं ब्रह्माणं कुर्वीतेन्वयः । यं महापुरुष इत्यवोचाम स संवत्सर एव । संवसतां स्वविहितवृत्त्या वसतां रतिदातृत्वात्संवत्सरनामा ब्रह्मा । अन्यानि भूतानि भगवद्विरोधीनि भूतानि । जीवान्प्रध्वंसयन् तमसि पातयन् । अन्यानि भूतानि मुक्तियोग्यजीवानैक्याभावयन् मोक्षे स्वेन स्थानेनैक्यमाभावयन् सम्यक् प्रापयन् । तस्यैतस्य संवत्सरस्य सर्वस्यादित्वात्सर्वस्मिंस्ततत्वात्सर्वजीवनियामकत्वादादित्यनामा प्रद्युम्नो रसः सारः । स यश्चायमशरीरः प्रज्ञात्माऽनिरुद्धः यश्चासावादित्ये आदित्यगतः प्रद्युम्नः। एतत्स्थानद्वयगतं भगवद्रूपमेकमिति विद्यात् । तस्मात्पुरुषगतानिरुद्धस्यादित्यगतप्रद्युम्नस्य चैक्यात् आदित्यः पुरुषं पुरुषं प्रति भवति । प्रतिपुरुषमभिमुखो भवतीत्यर्थः । तदप्येतद्भगवतः शिवादिसारत्वं व्याप्तत्वं चर्षिणोक्तम् । चित्रं सर्वचेतनेभ्यो विशिष्टम् देवानामनीकं चेष्टकत्वादीशत्वात्कर्तृत्वादनीकम् । मित्रस्य वरुणस्याग्नेश्चक्षुर्दर्शकम् । ज्ञानदं सूर्यगतं ब्रह्मोदगात् उदैत् । जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा । आदानात् जीवानां प्रलयेऽप्यत्तृत्वादात्मा । सूरिप्राप्यत्वात्सूर्यनामा सूर्यगतः । द्यावापृथिवी अन्तरिक्षं चासमन्तात् आ अप्राः अप्रात् पूरयामास स्वतेजसा । बाध्वो वायुः सन्धीयमानामेतां संहितां शरीरपुरुषादिसारभूतानिरुद्धादिभिः सन्धीयमानामेताम् अनुविधम् अनुसारि सम्यक् समीचीनां मन्य इत्याह स्म । बह्वृचाः ऋग्वेदिनः एतं ह्येव एतमेव हि महत्युक्थे महत्युक्थनामके बृहतीसहस्रे मीमांसन्ते जानन्ति । अध्वर्यवो यजुर्वेदिनः । एतमग्नौ मीमांसन्ते । छन्दोगाः सामवेदिनः

महाव्रते महाव्रताख्यकर्माङ्गभूतस्तोत्रे मीमांसन्ते । एतमस्यां पृथिव्यामित्यादि सर्वेषु भूतेष्वेतमेव परिपूर्णगुणव्याप्तमाचक्षते । स एष भगवान् संवत्सरसंमानः संवत्सरसंज्ञकब्रह्मसंमितः चतुर्मुखस्यानन्तरूपत्वात् तावद्रूपैस्त-न्नियामकतया तिष्ठतीति भावः । य एवं चक्षुर्मयत्वादिरूपमात्मानं परस्मै अयोग्याय शंसति तस्य वेदाः दुग्धदोहा भवन्तीत्युत्तरखण्डेनान्वयः ॥ ३ ॥

ऐतरेयोपनिषत्

दुग्धदोहा[१] अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति तदप्येतदृषिणोक्तं[२] यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थामिति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवति तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत्कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत्कृतं भवति स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठाः व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति सम्परे-तोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात्स यत्करणीयं मन्येत तत्कुर्वीत यदन्ति यच्च दूरक इति[३] सप्त जपेदादित्प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षळुद्वयं[४] [५]तमसस्परीत्येकाऽथापि यत्र च्छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत च्छिद्रां वा च्छायां पश्येत्त-

१. गां दुग्धदोहाम्. भ. (११/११/१९) इतिवत् ।

२. यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं श्रुणोत्यलकं श्रुणोति न हि प्रवेद सुकृतस्य पन्थाम् ॥
(ऋग्वेद. १०-७१-६) (३/२/३)

३. यदन्ति यच्च दूरके भयं विन्दति मामिह ।
पवमान वितज्जहि ॥ (ऋग्वेद. ९-३७-२१) (२/२/४)

पवमानः सो अद्य नः पवित्रेण विचिर्षणिः ।
यः पोता स पुनातु नः ॥ (ऋग्वेद. ९-६७-२२) (२/२/४)
यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनीहि नः ॥ (ऋग्वेद. ९-६७-२३) (२/२/४)
यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः ।
ब्रह्मसवैः पुनीहि नः ॥ (ऋग्वेद. ९-६७-२४) (२/२/४)
उभाभ्यां देवसहितः पवित्रेण सवेन च ।
मां पुनीहि विश्वतः ॥ (ऋग्वेद. ९-६७-२५) (२/२/४)
त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः ।
अग्ने दक्षै पुनीहि नः ॥ (ऋग्वेद. ९-६७-२६) (२/२/४)
पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।
विश्वेदेवाः पुनीत मा जातवेदः पुनीहि मा ॥ (ऋग्वेद. ९-६७-२७) (२/२/४)

४. यत्र ब्रह्मा पवमानछन्दस्यां ३वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन् इन्द्रायेन्दो परिस्रव ॥
(ऋग्वेद. ९-११३-६) (२/२/४)

यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम् ।
तस्मिन् मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रव ॥
(ऋग्वेद. ९-११३-७) (२/२/४)

यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
(ऋग्वेद. ९-११३-८) (२/२/४)

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
(ऋग्वेद. ९-११३-९) (२/२/४)

यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
(ऋग्वेद. ९-११३-१०) (२/२/४)

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥
(ऋग्वेद. ९-११३-११) (२/२/४)

५. उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (ऋग्वेद. १-५०-१०) (२/२/४)

दप्येवमेव विद्यादथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यादथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा वटरकाणि संपतन्तीव दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यादथाप्यपिधाय कर्णा उपशृणुयात्स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात्तदप्येवमेव विद्यादथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा मेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरिचीरिव पश्येत तदप्येवमेव विद्यादथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यादिति प्रत्यक्षदर्शनान्यथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृष्णं धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति स यद्येतेषां किञ्चित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्युचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात्स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात् ।। ४ ।।

भा— य एनं वक्त्ययोग्येभ्यो योऽथ चैनं महाव्रते ।
कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथवा ।।
महाव्रतेन स्तोत्रेण स्तुवीतैनमथापि वा ।
महाव्रते चितिं वाऽपि कुर्यान्नास्य फलं श्रुतेः ।।
सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति ।
प्रत्यक्षज्ञानिनोऽप्येतदानन्दह्रासकृद्भवेत् ।।

प्रत्यक्षज्ञानिनो मोक्षो न कथञ्चिद्धि हीयते[१] ।
आचार्यमेव तं विद्याद्गुणैर्यः स्वात्मनोऽधिकः[२] ॥
गुणाधिकस्य तेनैव शंसनादि न दुष्यति ।
अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपि वा ॥
प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम् ।
अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत् ॥
योग्या अस्याश्च विद्याया देवा ऋषय एव च ।
एकदेशज्ञानयोग्या मानुषा उत्तमा यदि ॥
कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात्सखायमिति चोदितम् ॥
न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात्परमात्मनः ॥
मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम् ।
तत्समं वाऽधिकं वाऽपि ब्रूयादैक्यमथापि वा ॥
ऐश्वर्यादिगुणानां वा ह्रासं नास्तित्वमेव वा ।
तत्प्रसादं विना मोक्षं ब्रूयाद्वा कस्यचित्क्वचित् ॥
ऐक्यं वा ब्रह्मशर्वादेर्मुक्तावैक्यमथापि वा ।
व्यत्यासं चावताराणां जीवाभेदममुष्य वा ॥
भेदज्ञानं तद्गुणानां तेन वाऽथ मिथोऽपि वा ।
तथैव तत्क्रियाणां च तद्रूपाणामथापि वा ॥
असाम्यदर्शनं वाऽपि तद्गुणानां परस्परम् ।
देहदेहिविभेदं च तस्मिन्नवयवेषु वा ॥

१. ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च वर्धते ॥
इति ब्रह्माण्डे (ब्र.सू.भा. ३/४/३३)

२. स्तोत्तमा गुरवः प्रोक्ता ब्रह्मान्ता उत्तरोत्तरम् । - इति म.भा.ता.नि.
अन्येऽपि स्वात्मनो मुख्या क्रमाद्गुरव ईरिताः ॥ इति च तत्रैव (१/१२४)

परस्परं भेददृष्टिं तेन वा कुत्रचित्कचित् ।
दोषसंसर्गमस्यापि स्वतः परत एव वा ॥
अज्ञानतो ज्ञानतो वा निर्देहत्वममुष्य च ।
तद्देहस्य प्राकृतत्वमचिदानन्ददेहताम् ॥
प्रादुर्भावेष्वपि विभोर्देहत्यागोद्भवादिकम् ।
अज्ञानदुःखासामर्थ्यपारवश्यादिकं तथा[1] ॥
अतद्वशत्वं कस्यापि कदाचित्कचिदप्युत ।
परिमाणं बलादेर्वा तस्य विष्णोर्महात्मनः ॥
भेदाभेददर्शिर्वाऽस्य जीवैर्वा स्वगुणादिभिः ।
तर्कैस्तस्यापलापो वा तत्र रक्तेन चेतसा ॥
त्यागानामेवमुक्तानां तर्काद्यैः साधनं तथा ।
अचिन्त्यविभवेऽप्यस्मिन्नसम्भवनिरूपणम् ॥
स एव मुख्यतस्त्यागो वासुदेवस्य कीर्तितः ।
रमाब्रह्मादिकानां च तारतम्यानभिज्ञता ॥
संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम् ।
अस्मृतिर्वासुदेवस्य तद्भक्तानां च निन्दनम् ॥
द्वितीय एष त्यागस्तु विष्णोरेव प्रकीर्तितः ।
निषिद्धकर्मकरणं व्रिहितस्य च वर्जनम् ॥
त्यागस्तृतीयो हि हरेश्चतुर्थोऽयोग्यपुरुषे ।
उपदेशः केशवस्य यथाशास्त्रोदितक्रमात् ॥
आचार्यपित्रोरन्यत्र तथैव च महाव्रते ।
हौत्रोद्गात्राध्वर्यवाणि त्याग एवं चतुर्विधः ॥
त्यागद्वयात्तु प्रथमात्प्राप्यतेऽन्धं तमः क्रमात् ।
तृतीयान्निरयप्राप्तिश्चतुर्थान्न दिवं व्रजेत् ॥

---

१. मुक्तावपि च संसारे नात्मनो विष्णुतां कचित् ।
ब्रह्मरुद्रादिभावं वा साम्यं वाऽऽधिक्यमेव वा ॥
अतद्वशत्वमथवा यः स्मरेत् स तु सिद्धिभाक् ।
नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि ॥ -इति तन्त्रसारसङ्ग्रहे (४/१०४/५)

उपदिष्टेऽपि यस्तत्त्वे संशयं कुरुते[1] पुमान् ।
सोऽन्धंतमो व्रजेदन्यो निरयायैव गच्छति ॥
स एव भगवान्विष्णुरेतैर्दोषैर्विना यदि ।
ज्ञायते मुक्तिदः साक्षान्नात्र कार्या विचारणा ॥
यदि ज्ञानं नातिपक्कं सरागं च मनो भवेत् ।
तदा स्वर्गादिलोकाप्तिः संशयश्चेत्कचित्कचित् ॥
आवृत्तिरेव संसारे यावन्निःसंशयो भवेत् ।
पुनरावृत्तिहीनं तु तमोऽन्धं मुक्तिरेव च ॥
पूर्वं तु निःसुखं तत्र निर्दुःखं चापरं मतम् ।
निश्शेषगुणहीनं च पूर्वं निर्दोषकं परम् ॥
विमिश्रगतयस्त्वन्याः पुनरावृत्तिसंयुताः ।
असुरा देवता मर्त्या योग्या एतेषु च क्रमात् ॥
न च तेषां सङ्करोऽस्ति यथायोग्या हि तद्गतिः ।
मानुषेषूत्तमा मुक्तिमधमा निरयं तथा[2] ॥
आप्नुवन्ति मनुष्येषु मध्यमाः सृतिभागिनः ।
नियमोऽयं नान्यथा स्यादच्छिद्रत्वं यथा भवेत् ॥
दोषेऽथवा गुणे वाऽपि तदा दैत्याः सुरा अपि ।
स्वां स्वां गतिं समायान्ति तावत्संसारभागिनः ॥
अच्छिद्रत्वं नैव सर्वैः कदाचित्प्राप्यते यतः ।
सृष्टिस्थितिलयादीनां नोच्छेदस्तेन कुत्रचित्[3] ॥

---

१. अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ गी. (४/४०)

२. तत्र देवा मुक्तियोग्या मानुषेषूत्तमास्तथा ।
मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि ॥ म.भा.ता.नि. (१/८८)

३. एवं नरोत्तमपरास्तु विमुक्तियोग्या अन्ये च संसृतिपरा असुरास्तमोगाः ।
एवं सदैव नियमः क्वचिदन्यथा न यावन्न पूर्तिरुत संसृतिगाः समस्ताः ॥
पूर्तिश्च नैव नियमाद्भविता हि यस्मात्तस्मात्समाप्तिमपि यान्ति न जीवसङ्घाः ।
आनन्त्यमेव गणशोऽस्ति यतो हि तेषामित्थं ततः सकलकालगता प्रवृत्तिः ॥
- म.भा.ता.नि. (१/१८,१९)

तस्माद्दोषान्प्रहायैव विष्णुं सर्वोत्तमोत्तमम् ।
जानीयात्तेन मुक्तिः स्यादपरोक्षदृशेरनु ॥
सूर्यमण्डलगो विष्णुर्देहे चक्षुषि संस्थितः ।
अनिरुद्धश्च हृदये न च भेदोऽनयोः क्वचित् ॥
अन्येषामपि रूपाणामिति विद्याद्विचक्षणः ।
द्विरूपः स यदा विष्णुरपगच्छति देहतः ॥
तदैव दुर्निमित्तानि जायन्ते नान्यदा क्वचित् ।
तस्मात्तेषां दर्शने तु कर्तव्यं पारलौकिकम् ॥
सर्वमेव जपेच्चैव यदन्तीत्यादिका ऋचः ।
ऋग्भिः षड्भिर्वायुरेव पवमानादिना मतः ॥
स्तूयते सोऽङ्गनेतृत्वादग्निरित्यभिधीयते ।
परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः ॥
वायु; पुनाति यल्लोकान्सविता तेन कथ्यते ।
पवित्रं[१] नाम साक्षात्तत्परं ब्रह्म जनार्दनः ॥
प्रसादयित्वा तं विष्णुं तेन लोकान्पुनात्यसुः ।
ज्ञानाख्यप्रसवेनापि स्वयं वायुः पुनात्ययम् ॥
प्राणाग्नेरर्चिषो देहे विततास्तेषु केशवः ।
अर्चिष्मान्विततो नित्यं वायुस्तेन पुनात्ययम् ॥
यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः ।
मोचयित्वैव संसाराद्विष्णोर्लोके कृधीति च ॥
आदित्प्रत्नस्येति विष्णुः स्तुत्यो वैकुण्ठलोकगः ।
आदित्यमण्डलस्थश्च साक्षान्नारायणः प्रभुः ॥
उद्वयं त्वितिमन्त्रेण स्तुत्यो वायोरपीश्वरः ।
अपमृत्युभयं तस्य यदन्तीत्यृग्जपाद्व्रजेत् ॥

---

१. पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ॥ -इति विष्णुसहस्रनामस्तोत्रे ।

कालमृत्युर्यदि भवेत्तथा जन्मादिकं भयम् ।
अन्याभिः कर्मतः पूतो यत्र ब्रह्मेति वैष्णवम् ॥
लोकं व्रजेत्तथाऽन्याभ्यां विष्णुर्मोक्षसुखप्रदः ।
इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च ॥
सोमः सौम्यस्वरूपत्वात्पवमानश्च पावनात् ।
विष्णुः पुरातनत्वात्तु प्रत्नोरेतो महारतिः ॥
देवत्रा देव एवाऽसौ सर्वदेवेश्वरो यतः ।
सूर्यश्च सूरिभिः प्राप्यो नित्यानन्दो रमापतिः ॥
देशतः कालतश्चैव गुणतश्चापि पूर्तितः ।
अत इत्युच्यते विष्णुः सन्ततो ह्यत उच्यते ॥
तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा ।
अत इत्युच्यते विष्णुः सम्यक्श्रुत्याद्यशक्यतः ॥
पूर्णत्वाद्भगवान्विष्णुरश्रुतत्वादिनोदितः ।
अन्तस्थः सर्वजीवानां पूर्णत्वात्पुरुषाभिधः ॥
समः स सर्वरूपेषु सर्वजीवनियामकः ।
इति विद्यात्परं विष्णुं मुच्यते तेन संसृतेः ॥ -इत्यादि च ।

शरीरपुरुषादीनां प्राप्यत्वात्तदुपास्यत्वात्तेषां नियामकत्वेन तेभ्योऽप्युत्तमत्वेन तेषु स्थितत्वाच्च तेषां सार इत्युच्यते भगवान् । यदीं एव अलकम् अरकं यत्किञ्चिच्छृणोति तत्सर्वमरतिरूपान्धतमःप्राप्तिकारणमेव तस्य भवति । तत्र हि सर्वरत्यभावो रतिविरुद्धदुःखं[१] च पूर्णम् । परस्मै शंसनमात्रादरतिरेवेत्यतः प्रस्तुते चतुर्थत्यागेन न तस्य वाच्यपि भागो अस्ति । न हि प्रवेद सुकृतस्य पन्थामिति दोषद्वयमेवेत्यवधारयति । न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवतीति ।

१. तिर्यक्षु नरके चैव सुखलेशो विधीयते ।
नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन ॥
- इति भविष्यत्पर्वणि (म.भा.ता. ३/१/२०)

अलकं शृणोतीति त्यागद्वयस्य मुख्यतस्तृतीयस्यापि नरकं शृणोतीति किञ्चिद्भवति । तौ यदाऽस्माच्छरिराद्विहीयेते तदैवैतानि निमित्तानि पश्यन्तीति नियमः । न च तदा पश्यत्येवेति । वासेन रमयतीति वासरं विष्णुर्ज्योतिः ।

यत्र ब्रह्मा वेदवाक्यं व्याचक्षाणो मखैर्यजन् ।
सोमेन च सुतेनेशमास्ते लोके हरेर्हि सः ॥ -इति स्कांदे

ग्राव्णा सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्यानन्दं जनयन् । स्वरानन्दरूपो विष्णुः । दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः द्यौर्नाम वायुपत्नी । अजनयो मरुतो वक्षणाभ्यो दिव आवक्षणाभ्य इत्यादेः । यह्वतीः स्यन्दमानाः ।

सर्वेष्टद जगत्प्राण मामादाय परिस्रव ।
यत्रासौ भगवान्विष्णुस्त्वं हि मोक्षप्रदः सदा ॥ -इति च

इन्दुरिष्टप्रदत्वाद्यो वायुरादाय गच्छति ।
इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा ॥ -इति च

अनन्यहेतुकं साक्षाद्भगवद्भक्तिरूपकम् ।
सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः ।
प्रमोदस्तद्विशेषोत्थो मुन्नामात्यल्पभोगतः ॥ -इत्यृग्वेदसंहितायाम्

तमसः सकाशात् उद्गता वयमुत्तरं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तस्तमेव देवत्रा देवं देवविषयेऽपि देवमगन्म । तदेवज्योतिष्ट्वेनोत्तरत्वेन च पश्यन्त इति दर्शने इत्थं भावविधानार्थं पूर्वम् । तथैवासौ भगवानुत्तमज्योतिः । न राजादिष्विवाविद्यमानभक्तिमात्रमिदमिति ज्ञापयितुमगन्म ज्योतिरुत्तममिति पुनर्वचनम् ।

अर्चिषोंऽशा वर्तुलास्तु नाम्ना वटरकाः स्मृता । -इति शब्दनिर्णये

बृहत्तमं मधु यदि सहापूपं प्रभक्षयेत् ।
स्वप्ने तस्याचिरान्मृत्यू रक्ताब्जे वा शिरोधृते ॥ -इति ब्रह्माण्डे
रात्र्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता ।
पायसेन हरेन्मृत्युं [१] रात्रिसूक्तादकालिकम् ॥
यदि कालिकमृत्युः स्यात्पदं सा परमं नयेत् ।
सहैव विष्णुना भक्तं विष्णोस्तद्वेदिनं तथा ॥
रतिदत्वात्परो विष्णुर्मुख्यतो रात्रिरुच्यते ।
तदाश्रयत्वाद्दुर्गाऽपि रात्रिरित्याभिधीयते ॥
स्त्रीरूपः स परो विष्णुः पायसेष्टो हि मोक्षदः ।
तस्मादुभौ सहैवेज्यौ भक्त्या दुःस्वप्नदर्शने ॥
बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्श ह ।
आयन्सर्वेषु लोकेषु धृतास्तेनैव हि श्रियः ॥

---

१. रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः ।
विश्वा अधिश्रियोधित ॥ (ऋग्वेद. १०-१२७-१) (२/२/४)
ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः ।
ज्योतिषा बाधते तमः ॥ (ऋग्वेद. १०-१२७-२) (२/२/४)
निरुस्वसारमस्कृतोषसं देव्यायती ।
अपेदुहासते तमः ॥ (ऋग्वेद. १०-१२७-३) (२/२/४)
सानो अद्य यस्या वयं नितेयामन्नविक्ष्महि ।
वृक्षेन वसतिं वयः ॥ (ऋग्वेद. १०-१२७-४) (२/२/४)
निग्रामासोन्यविक्षत निपद्वन्तो निपक्षिणः ।
निश्येनासश्चिदर्थिनः ॥ (ऋग्वेद. १०-१२७-५) (२/२/४)
यावया वृक्यं १वृकं यवयस्तेनमूर्म्ये ।
अथानः सुतरा भव ॥ (ऋग्वेद. १०-१२७-६) (२/२/४)
उपमा पेपि शत्तमः कृष्णं व्यक्तमस्थित ।
उषऋणेव यातय ॥ (ऋग्वेद. १०-१२७-७) (२/२/४)
उपते गा इवाकरं वृणीष्व दुहितर्दिवः ।
रात्रि स्तोमं न जिग्युषे ॥ (ऋग्वेद. १०-१२७-८) (२/२/४)

इति रात्रीसूक्तम् (ऋ.१०-१२७)

नीचानुच्चांश्च जीवान्स ब्रह्मादीनुर्वपूरयत् ।
ज्ञानेन बाधतेऽज्ञानं स्वसारं स्वं तथाऽकरोत् ॥
उषआख्यं शुक्लवर्णं प्रमदारूपमेव च ।
तमश्चापाकरोत्येव तदा सूर्यादिषु स्थितः ॥
स नः स्वामी यदुदरे यमनाद्यमनामके ।
अविक्ष्महि वयं सर्वे वृक्षे यद्वत्पतत्रिणः ॥
शेनाख्यास्तु सुखीनत्वादासमन्तात्सुरोत्तमाः ।
पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिनः ॥
ग्रामाख्या बहुलत्वात्तु दैत्या एव प्रकीर्तिताः ।
अर्थिनस्तु कृतार्थत्वान्मुक्ता एव श्रुताः श्रुतौ ॥
ऊरीकृतप्रमाणत्वादूर्म्यः स भगवान्हरिः ।
वृकास्तेनैव निर्याप्या वृकाः क्रूरत्वतोऽसुराः ॥
तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः ।
ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः ॥
विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः ।
कृष्णं व्यक्तं तमोऽज्ञानमज्ञानां पेशलं हि तत् ॥
तद्यातयत्यृणमिव भगवान्पुरुषोत्तमः ।
स एव चोषाः कथितः प्रकाशत्वाज्जनार्दनः ॥
जयिनः स्तोममिव च ब्राह्मणाय यथा च गाः ।
उपाकरं तथा स्तोमं तवाहं तद्वृणीष्व च ॥
द्यौरिति ज्ञानमुद्दिष्टं तद्व्यङ्ग्यत्वाज्जनार्दनः ।
दुहिता दिव इत्युक्त एवमर्थेन पूज्यते ॥
रात्रीसूक्तेन भगवान्साक्षान्नारायणः प्रभुः ।
तत्सन्निधानाद्दुर्गाया एषोऽर्थ उपचारतः ॥
एवं स्तुतस्तथैवेष्टो भगवान्मोक्षदो भवेत् ।
यदन्तीत्याद्यृचः सर्वा अपि दुःस्वप्नदर्शने[१] ॥

जप्या एव विशेषोऽयं होमो दुःस्वप्नदर्शने ।
परोक्षज्ञानिनो विष्णुरापरोक्ष्यं व्रजेत्त्वरन् ॥
अपरोक्षदृशः प्रीतः सुखाधिक्यं करोत्यजः ।
मुक्तस्य द्विविधैस्तस्माज्जपो योगश्च सर्वथा ॥
कर्तव्यो न्यासिभी रात्रीसूक्तं जप्यं त्रिशोऽञ्जसा ।
इत्यैतरेयसंहितायाम् ॥ ४ ॥

टी— दुग्धदोह्रा अस्य वेदा भवंतीत्येतत्खण्डं व्याचष्टे । य एनं वक्त्ययोग्येभ्य इत्यादिना । य एनमात्मानमयोग्येभ्यो वक्ति । य एनमाचार्य-तोऽन्यस्य महाव्रते कर्मणि शंसेत शस्त्रशंसनं कुर्यात् । श्रुतेः फलं वेदोक्तं फलम् । दुग्धदोह्रा अस्य वेदा भवंति न तस्यानूक्ते भागोऽस्तीत्येतत्तात्पर्यमिदम् । न वेद सुकृतस्य पंथानमित्यस्यार्थः । सुकृतस्येति । अवाप्स्यतीत्यनेन वेदेत्यस्य विदॢ लाभ इति धातुः सूचितो भवति । एतत् अयोग्योपदेशादि । आचार्य-तोऽन्यस्य न शंसेदित्युक्तं कोऽसावाचार्य इत्यत आह । आचार्यमिति । यो गुणैः स्वात्मनः स्वस्मादधिकस्तमेवाचार्यं विद्यात् । तेनैव गुणाधिकत्वेनैव । हौत्रादिके होत्रादिव्यापारे । एतन्महाव्रताख्यस्तोत्रम् । अस्या विद्यायाः बाह्वो-क्तसंहिताविद्यायाः । तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयादित्यादे-स्तात्पर्यमेतत् । यस्तित्याज सचिविदमिति मन्त्रं व्याचष्टे । कर्मसञ्चय-वेत्तारमिति । न तस्य वाच्यपि भागो अस्तीत्यस्य व्याख्यानम् । न विद्यायाः फलं तस्येति । यदीं श्रुणोतीत्यस्यार्थः । श्रुतं च नरकावहमति । न हि प्रवेद सुकृतस्य पन्थामित्यस्यार्थः । नैवेति । विवक्षितत्यागस्य चतुर्विधत्वात् चतुर्विधमपि विविच्य दर्शयति । मुख्येत्यादिना । द्वितीयान्तानां ब्रूयात्पश्येदिति वाऽन्वयः । मुख्यत्यागान्तरं दर्शयति । रमाब्रह्मादिकानां चेत्यादिना ।

१. उपसर्गेषु जातेषु दैवभूतात्महेतुषु ।
आयुषे वाऽथ शान्त्यै वा श्रिये वा पुण्यवृद्धये ॥
योग्यतायै मन्त्रसिद्ध्यै विष्णोः प्रीत्यर्थमेव ।
जुहुयात्सहस्रमयुतं लक्षं कोटिमथापि वा ।
पूर्ववत्संस्कृते वह्नौ ध्यात्वा देवं जनार्दनम् ॥ इति तन्त्रसारसङ्ग्रहे (२/१३/१४)

द्वितीय एषो विष्णोस्त्याग एव । अमुख्यत्यागं दर्शयति । निषिद्धेति । अयोग्यपुरुषे यथाशास्त्रोदितक्रमात् केशवस्य उपदेशश्चतुर्थस्त्यागः । महाव्रते कर्मण्याचार्यपित्रोरन्यत्र हौत्रौद्गात्राध्वर्यवाणि च त्यागः । हौत्रादिकरणमिति भावः । त्याग एवं चतुर्विधः । त्यागचतुष्टयस्य फलमाह । त्यागद्वयादिति । क्रमात्प्रथमत्यागादधरं तमः । द्वितीयादुत्तरं तमः । अन्यः उपदेशाभावात् संशयं कुर्वन् । एतैर्दोषैरुक्तदोषैः । दोषं विना जानतोऽपि यदि ज्ञानं नातिपक्वं मनश्च विषयेषु सरागं भवेत् । तदा तर्हि स्वर्गादिलोकाप्तिः । क्वचित्क्वचित्तत्वविषये संशयश्चेत् संसारे आवृत्तिरेव । यावन्निःसंशयो भवेत् तावत् पूर्वं तमः । अन्या गतयो मोक्षतमोव्यतिरिक्ताः । विमिश्राः सुखदुःखाभ्याम् । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्ये एकमेतदित्यवोचामेत्यस्य तात्पर्यमाह । सूर्यमण्डलगत इति । तौ यत्र विहीयेते इत्यादि विवृणोति । द्विरूप इत्यादिना । अपगच्छति । अपजिगमिषति । सर्वं पारलौकिकं परलोकसाधनं कतर्व्यं स यत्करणीयं मन्येत तत्कुर्वीतेत्यस्य तात्पर्यमेतत् । ऋग्भिः षड्भिः यदन्तीत्यादिभिः यत्र ब्रह्मेत्यादिभिः यत्ते पवित्रमर्चिष्यग्ने विततमित्यादावाग्निब्रह्मसवसवितृपवित्र शब्दानामर्थानाह । सोंऽगनेतृत्वादित्यादिना । अङ्गनेतृत्वादङ्गानां प्रेरकत्वात् । परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिरिति ब्रह्मसवैरित्यस्यार्थः । तेन ज्ञाना-ख्यप्रसवकर्तृत्वेन । जनार्दनः पावयित्वा त्रातीति पवित्रम् । पवित्राणां पवित्रमिति प्रसिद्धेः । असुर्मख्यप्राणः । यत्ते पवित्रमर्चिष्यग्ने विततमन्तरे-त्येतद्विवृणोति । प्राणेति । प्राणाख्याग्नेरर्चिषः पुरुषस्य देहे वितताः । एतेषां फलभेदमाह अपमृत्युभयमित्यादिना । जन्मादिकं भयं जनिमरणादिभयं संसारभयं व्रजेदपगच्छति । यत्र ब्रह्मेत्यादिभिरन्याभिः कर्मतः पूतः क्रमतो वैष्णवं लोकं व्रजेत् प्राप्नोति । अन्याभ्याम् । उद्वयं तमसस्परि आदित्प्रत्नस्य रेतस इत्येताभ्याम् । इन्दुसोमपवमानादिशब्दार्थानाह । इष्टप्रदानशी-लत्वादित्यादिना । आदित्प्रत्नस्य(रेतसः) इत्येतद्व्याचष्टे । विष्णुरित्यादिना । देवं देवत्रा सूर्यमित्यस्यार्थमाह । देवत्रादेव इति । स योऽतोऽश्रुत इत्यादि व्याचष्टे । देशत इति । देशतः कालतो गुणतश्च व्याप्तत्वादतः । अत सातत्यगमन इति धातोः । अतः शब्दस्यार्थान्तरम् । तृतीय इति । अतिरेव वा अधिक एव वा अत इत्युच्यते । इकारापेक्षयाकारस्य तृतीयवर्णस्य

चातिशयार्थत्वात् । सम्यक् श्रुत्याद्यशक्यत्वात्सम्यक्श्रवणाद्यविषयत्वादश्रुतादिपदोदितः । अश्रुतत्वादौ हेतुः । पूर्णत्वादिति ।

अन्तर पुरुषः स म आत्मेति विद्यादित्येतद्विवृणोति । अन्तःस्थ इति । स यश्चायमशरीरः प्रज्ञात्मा स रस इत्यादौ रसशब्दार्थमाह । शरीरेति । रससारशब्दयोः पर्यायत्वात् । यदीं शृणोत्यलकं शृणोतीत्येतद्व्याचष्टे । यदीमेवेति । यदीमित्यत्र ईम् इत्यस्यार्थः । एवेति । दुःखं च पूर्णम् । तत्रेति शेषः । यस्तित्याजेत्युदाहृतमन्त्रेण वाक्यद्वयमेवानूद्य कस्माद्व्याक्रियत इत्यत आह । परस्मा इति । परस्मै शंसतीति । परस्मै शंसनमात्रं प्रस्तुतम् । तस्य चारतिरेव फलम् । न तमः प्राप्तिरिति । यतोऽतः प्रसक्ते चतुर्थे त्यागे परस्मै शंसनलक्षणेन तस्य वाच्यपि भागो अस्ति । न हि प्रवेद सुकृतस्य पंथामिति वाक्यद्वयेन दोषद्वयस्योक्त्वादेवावधारयत्युपनिषत् । न तस्यानूक्ते भाग इत्यादिनेति शेषः । आद्यत्यागद्वयस्य मुख्यतः फलमलकं शृणोतीत्येतत् । तृतीयत्यागस्यापि अलकं नरकसाधनं शृणोतीति किंचित्फलं भवतीति । तौ यत्र विहीयते इत्यस्य तात्पर्यमाह । ताविति । यत्रेत्यस्यार्थो । यदेति । आदित्प्रत्नस्येत्यत्र वासरशब्दार्थमाह । वासेनेति । सुतेन सोमेन च ईशं यजन् यत्रास्ते स हरेर्लोके हीत्यन्वयः । ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्नित्येतद्योजयति । ग्राव्णेति । सोमे सोमविषये । सौम्यस्वरूपत्वात्सोमनामकभगवद्विषये ग्राव्णा सुतेन सोमेनेष्ट्वा महीयते । तेनैव यजनेन जातया विष्णुप्रीत्या यस्मिन् लोके स्वर्हितमित्यत्र स्वरूपशब्दार्थमाह । स्वरानन्दरूप इति । यत्रावरोधनं दिव इत्येतदर्थमाह । दिव इति । इत्यादेः प्रमाणात् । आदिपदेन द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्येत्येतद्गृह्यते । तस्मिन्मां धेहि पवमानेत्यादि व्याचष्टे । सर्वेष्टदेति । परिस्रव गच्छ । यत्रानन्दाश्च मोदोश्चेत्यादौ आनन्दादिशब्दार्थानाह । अनन्येति । अत्यल्पभोगतो जात आनन्दो मुन्नाम मुदित्युच्यते । उद्वयं तमसस्परीत्येतद्विवृणोति । तमस इति । पूर्वं पूर्वार्धगतम् उत्तरमिति पदम् । तर्ह्युत्तममिति पदं व्यर्थं स्यात् इत्यतस्तत्कृत्यमाह । तथैवेति । तथैव यथा दृष्टं तथैव । तद्यथा । बटरकाणीत्यत्र बटरकशब्दार्थमाह । अर्चिषोंऽशा इति । मध्वश्नातीत्येतदभिप्रायं

सप्रमाणकमाह । बृहत्तममिति । एकपुण्डरीकं धारयतीत्यस्यार्थः । रक्ताब्ज इति । शिरो धृते शिरसा धृते । रात्रीव्यख्यदित्यादिसूक्तं व्याख्यातुं तद्देवतां तत्फलं चाह । रात्र्या इति । सा दुःस्वप्ने जाते सतीति शेषः । रात्रीसूक्तात्पायसेन प्रपूजिताऽकालिकं मृत्युं हरेदित्यन्वयः । यदि कालिकमृत्युर्यदि कालप्राप्तमृत्युः स्यात् । तर्हि सा दुर्गा विष्णोर्भक्तं तथा तद्वेदिनं तदपरोक्षज्ञानिनं विष्णुना सहिता परमं पदं नयेदित्यन्वयः । सूक्तं व्याचष्टे । रतिदत्वादिति । तदाश्रयत्वात्तस्याधिष्ठानत्वात् स रात्रिशब्दवाच्यो विष्णुः स्त्रीरूपः पायसेष्टः पायसेन पूजितः । तस्मादुभयोरपि रात्रिदेवतात्वात् विष्णुः स्त्रीरूपत्वाद्देवीशब्दवाच्यः । बहुभिर्नयनैरिति अक्षभिरित्यस्यार्थः । पुरुत्रेत्यस्यार्थः । बहुधेति । व्यख्यदित्यस्य । ददर्शेति । आयतीत्यस्यार्थः । आयन्निति । विश्वा अधीत्यस्य । सर्वेषु लोकेष्विति । श्रियोद्धितेत्यस्यार्थः । धृतास्तेनैव हि श्रिय इति । निवत इत्यस्य । नीचानिति । उद्वत इत्यस्य । उच्चानिति । अमर्त्यानित्यस्य । ब्रह्मादीनिति । अर्वप्रा इत्यस्य । उर्वपूरय-दिति । ज्योतिषा बाधते तम इत्यस्य । ज्ञानेन करणेनाज्ञानं बाधते देवी जनानामिति । निरुस्वसार मस्कृतोषसमित्यस्य उष आख्यं शुक्लवर्ण प्रमदारूपम् । स्वं स्वीयरूपं स्वस्य सारमकरोत् । अप इत् उहासते तम इत्यस्य । तमश्चापकरोत्येवेति । सा न इत्यस्य । सः नः स्वामीति । यामन्नित्यस्य यदुदरे यमनान्नियमनाद्यामनामक इति । अविक्ष्म हि प्रविष्टाः स्मः । वृक्षेनेत्यस्य । वृक्षे यद्वदिति । वय इत्यस्य । पतत्रिण इति । श्येनास इत्यस्य सुरोत्तमाः श्येनाख्या सुखीनत्वात् सुखी इनो येषां ते सुखीनास्तेषां भावस्तस्मादिति । पद्वन्त इत्यस्य । पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिन इति। ग्रामास इत्यस्य । ग्रामाख्या इत्यादि । ऊर्म्ये इत्यस्य । उरीकृतप्रमाणत्वादित्यादि । यावया वृक्त्या वृकमित्यस्य । वृका इत्यादि । अथातः सुतरा भवेत्यस्य । विष्णुरित्यादि । कृष्णं व्यक्तमस्थितेत्यस्य । कृष्णमित्यादि । पेपिशदित्यस्य । अज्ञानां पेशलं भद्रमिति । ऋणेवेत्यस्य । ऋणमिवेति । उष इत्यस्य । स एव चोषाः कथितः प्रकाशत्वाज्जनार्दन इति । स्तोमं न जिग्युष इत्यस्य । जयिनस्तोमममिव चेत्यादि । स्तोमं स्तुतिं वृणीष्व दुहितर्दिव इत्यस्य । उपाकरं तथा स्तोमममित्यादि । भगवानेवमर्थेन

रात्रीसूक्तेन पूज्यते । तत्संनिधानान्नारायणसंनिधानात् । एष उक्तोऽर्थः उपचारतो वर्त्तते । दुःस्वप्नप्रदर्शने अयं होमः रात्रीसूक्तेन विशेषः । द्विविधैः परोक्षज्ञानिभिरपरोक्षज्ञानिभिश्च ॥

एतमात्मानं यः परस्मै अयोग्याय शंसति । अस्य वेदाः दुग्धदोहाः फलविधुराः भवन्ति । तस्यायोग्योपदेष्टुः अनूक्ते वेदानुवचने वेदाध्ययन इति भावः । भागः फलं नास्ति सुकृतस्य पन्थानं सुकृतकर्मणो मार्गं न वेदेति । तदप्येतदयोग्योपदेष्टुः अध्ययनफलं नास्ति सुकृतफलं च नास्तीत्येतदृषिणोक्तम् । यः सचिविदम् । कर्मसञ्चयवेत्तारम् । प्रीत्यैकदेशसंस्थत्वात्सखायं तित्याज तत्याज तस्य वाच्यपि वेदाध्ययनेऽपि भागो नास्ति फलं नास्ति । यदीं यदेव श्रुणोति तदलकम् अरकम् अरतिरूपान्धतमसः प्राप्तिसाधनं श्रुणोति । यत् श्रुतं तदन्धतमसः प्राप्तिसाधनं भवतीत्यर्थः । सुकृतस्य पन्थां पन्थानं न प्रवेद हि । न लभे हि इति पूर्वेणान्वयः । विदलृ लाभ इति धातोः । यदर्थं मन्त्रोदाहरणं तत्प्रतिपादकमन्त्रांशाभिप्रायं द्योतयति । न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति । इत्येतदित्यनेन तदयोग्योपदेशफलमुक्तं भवति । तस्मादेवं विद्वान् अयोग्योपदेशस्यानर्थफलत्वादेवमयोग्योपदेशस्यानर्थफलत्वं विद्वान् जानन् परस्मै आचार्यपित्रोरन्यस्मै तस्मात् अग्निं न चिनुयात् । परस्मै आचार्यपित्रोरन्यस्मै अयोग्यपुरुषार्थं महाव्रतेन महाव्रताख्यस्तोत्रेण न स्तुवीत । एतदहः अहेयं परमात्माख्यवस्तु परस्मैऽयोग्याय न स्तुवीत । पित्रे आचार्याय वा कामं यथेच्छं शंसेत् । अस्य तत्कृतं तयोरर्थं कृतम् । आत्मन एव कृतं भवति । स यश्चायमनिरुद्धतनुः पुरुषे हृदये स्थितः यश्चासावादित्ये चक्षुषि च प्रद्युम्ननामा स्थितः । एतत् अनिरुद्धप्रद्युम्नयो रूपद्वयम् एकमित्यवोचाम तावनिरुद्धप्रद्युम्नौ हृदये चक्षुषि च स्थितौ यत्र यदा यस्माद्देहाद्विहीयेते जिगमिषतः तदा आदित्यश्चन्द्रमा इव दृश्यते । रश्मयो न प्रादुर्भवन्ति । द्यौर्लोहिनी रक्तवर्णा भवति । मंजिष्ठा यथा तथा लोहिनी । पायुर्व्यस्तः विवृतो भवति । अस्य शिरः काककुलायगन्धिकं काकस्य कुलायवत् गन्धयुक्तं कृत्वा वायति वायुः । अस्यात्मा सम्परेतः अस्य जीवस्यात्मा परमात्मा सम्परेतः संनिकृष्टनिर्गमः । स पुरुषो न चिरमिव जीविष्यतीति विद्यात् । सः

परलोकसाधनतया यत्करणीयं मन्येत तत्कुर्वीत । यदन्ति यच्च दूरक इति सप्त ऋचो जपेत् ।

यदन्ति यच्च दूरके भयं विन्दति मामिह ।
पवमान वि तज्जहि ॥ १ ॥ (ऋ. ९/६७/२१)

पवमान वायो इह यदन्तिके । यच्च दूरके दूरे भयं मां विन्दति । प्राप्नोति तद्भयं विजहि विनाशय ॥ १ ॥

पवमानः सो अद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु नः ॥ २ ॥ (ऋ. ९/६७/२२)

यः विचर्षिणिः सः पवमानः । अद्य नः अस्माकं स्वामी । यः पोता पावयिता । सः पवित्रेण पवित्रनाम्ना भगवता । नः पुनातु ॥ २ ॥

यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनीहि नः ॥ ३ ॥ (ऋ. ९/६७/२३)

अग्ने । अङ्गनेतृत्वादग्निनामकवायो ते अर्चिषि अन्तरा पुरुषदेहव्याप्तत्वात् तेजो मध्ये विततं व्याप्तं पवित्रं पवित्रनामकं यद्ब्रह्म तेन नः पुनीहि ॥ ३ ॥

यत् ते पवित्रमर्चिवदग्ने तेन पुनीहि नः ।
ब्रह्मसवैः पुनीहि नः ॥ ४ ॥ (ऋ. ९/६७/२४)

अर्चिवदर्चिष्मत् । यत् ते तव स्वामी पवित्रं ब्रह्म तेन नः पुनीहि । ब्रह्मसवैः परब्रह्मज्ञानलक्षणप्रसूतिभिः परब्रह्मज्ञानमुत्पाद्य नः पुनीहि ॥ ४ ॥

उभाभ्यां देव सवितः पवित्रेण सवेन च ।
मां पुनीहि विश्वतः ॥ ५ ॥ (ऋ. ९/६७/२५)

हे सवितः ज्ञानप्रसवात्सवितृनामक । देव क्रीडादिगुणयुक्त । पवित्रेण सवेन चेत्युभाभ्यां मां विश्वतः सर्वस्मात्पुनीहि ॥ ५ ॥

त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः ।
अग्ने दक्षैः पुनीहि नः ॥ ६ ॥ (ऋ. ९/६७/२६)

अग्ने सवितः देव सौम्यरूपत्वात् सोम त्वं वर्षिष्ठैः भक्ताभिमतवर्षणशीलैः दक्षैः त्रिभिर्धामभिः क्षीराब्ध्यादिस्थभगवद्रूपैः नः पुनीहि ॥ ६ ॥

पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।
विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥
धिया बुद्ध्या बुद्धिपूर्वकम् । आदित्प्रत्नस्य रेतस इत्येका जप्येति शेषः ।
आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते दिवा ॥ ७ ॥ (ऋ. ९/६७/३०).

प्रत्नस्य पुरातनस्य रेतसः महारतेः विष्णोः वासेन रमयतीति वासरम् । स्वसन्निधानात्सुखप्रदम् । ज्योतिस्तेजः आत् इत् । अकारवाच्यभगवदनुग्रहादेव पश्यंति उपासकाः । यत् दिवा दिवः परः परस्तादपि इध्यते प्रकाशते । इंधी दीप्तौ ।

यत्र ब्रह्मा पवमानेति षड् जपेत् ॥ ७ ॥
यत्र ब्रह्मा पवमान छन्दस्यां ३ वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परि स्रव* ॥

पवमान वायो । ब्रह्मा मुक्तचतुर्मुखः । यत्र यस्मिन्विष्णुलोके च्छन्दस्यां च्छन्दःसम्बन्धिनी वाचं वेदवाचं वदन् व्याकुर्वन्सोमे सौम्यस्वरूपत्वात्सोमनामकभगवद्विषये । ग्राव्णा सुतेन सोमेन भगवन्तमिष्ट्वा तत्प्रसादेन स्वस्यानन्दं जनयन् महीतये मुक्तनिकरैः । इन्दो भक्तानामिष्टप्रदानशील वायो । इन्द्राय विष्णवे । तत्स्वरूपं परिस्रव परिस्रावय गमय ॥ १ ॥

यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम् ।
तस्मिन्मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परि स्रव* ॥

अजस्रं ज्योतिर्निरन्तरप्रकाशः यस्मिन् लोके स्वः आनन्दरूपो विष्णुः हितं निहितः अमृते मृतिरहिते अक्षिते नाशरहिते तस्मिन् लोके मां धेहि निधेहि । इन्द्रायेन्दो परिस्रव । उक्तोऽर्थः ॥ २ ॥

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव★ ॥

त्रिनाके त्रिदिवे त्रिनाकत्रिदिवसंज्ञके । यत्र लोके दिवः सरस्वत्याः अनुकामं स्वेच्छाधीनं चरणं यत्र लोकाः ब्रह्मादिनिवासस्थानानि ज्योतिष्मन्तो ज्योतिष्मन्ति तत्र माममृतं कृधि मुक्तं कुरु ॥ ३ ॥

यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव★ ॥

कामा विषयाः निकामाः यथेष्टं सन्ति । ब्रध्नस्य सूर्यस्य विष्टपं स्थानं स्वधा सुखं तृप्तिरलं बुद्धिश्च तत्र माममृतं कृधि ॥ ४ ॥

यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव★ ॥

वैवस्वतो राजा मुक्तयमः दिवः सरस्वत्याः अवरोधनं परिवारभूताः सर्वे देवाः यत्र यह्वतीः स्यन्दमानाः अमूरापः गङ्गाद्याः ॥ ५ ॥

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव★ ॥

आनन्दाः भगवद्भक्तिरूपस्वरूपानन्दाः । भोगनिमित्ता आनन्दाश्च मोदाः । अत्यल्पभोगनिमित्तानन्दाश्च मुदः । भोगविशेषोत्थानन्दाः प्रमुदः । आसते तिष्ठन्ति । कामस्य कामाः इच्छाविषयाः आप्तास्तत्र माममृतं कृधि ॥ ६ ॥

---

★. ऋ. ९/११३/६-११.

उद्वयं तमसस्परीत्येका जप्या ।
उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (ऋ. १/५०/१०)

वयं तमसः उद्गताः उत्तरं ज्योतिः परिपश्यन्तः अज्ञानान्निर्गताः सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तः अपरोक्षीकुर्वन्तः तमेव देवत्रादेवं देवविषयेऽपि देवं सूर्यं सूरिप्राप्यं उत्तममगन्म । प्राप्ताः स्म । अथापि निमित्तान्तरमुच्यत इत्यर्थः ॥

आदित्यः च्छिद्र इव दृश्यते । तद्विवृणोति । रथनाभिरिति । रथचक्रमिव अभिख्यायेत दृश्येत । आत्मनश्छायां छिद्रां वा पश्येत् । तदप्येवमेव । सन्निहितमरणद्योतकमेव विद्यात् । अथापि आदर्शे दर्पणे वोदके वा आत्मानं जिह्मशिरसं वक्रशिरसम् अशिरसं शिरोहीनं कन्याके कनीनिके विपर्यस्ते व्यत्यस्ते जिह्मेन जिह्मत्वेन । तदप्येवमेव विद्यात् । अथाप्युच्यते । अपिधाय अक्षिणी । अङ्गुल्या अक्षिमूलमवष्टभ्य उपेक्षेत समीपे पश्यते । तत्तदा यथा वटरकाणि वर्तुलास्तेजोंशाश्च दृश्यन्ते । तथा अक्ष्णोरपि संपतंतीव दृश्यन्ते स्वस्थानाम् । तानि यदा न पश्येत् तदप्येवमेव विद्यात् । कर्णौ अपिधाय हस्ताभ्याम् उपश्रुणुयात् तदा स एष पुरुषः प्रज्वलतोऽग्नेरुपब्दिरिव ध्वनिः रथस्योपब्दिरिव ध्वनिमिव श्रुणुयात् स्वस्थः यदा तं ध्वनिं न श्रुणुयात् तदप्येवमेव विद्यात् । यथाग्निर्नील इव दृश्यते यथा मयूरग्रीवा मेघे वा विद्युतं पश्येत् अन्यैरदृश्यमानाम् । सर्वैर्दृश्यमानां विद्युतं न पश्येद्वा । महामेघे मरीचीः सूर्यरश्मीरिव पश्येत्तदपि । यत्र भूमिं ज्वलन्तीमिव पश्येत् तदप्येवमेव । इति प्रत्यक्षदर्शनानि । जाग्रदवस्थायां द्रष्टुं योग्यानि दुर्निमित्तानि ।

अथ स्वप्ना[1] उच्यन्ते । पुरुषं कृष्णं वर्णतः । कृष्णदन्तं पश्यति । स कृष्णपुरुषः एनं पुरुषं हन्तीति पश्यति । यदि वराह एनं हन्तीति पश्यतीति । मर्कट एनमास्कन्दयति उपर्यापततीव पश्यति । यदि वायुरेनम् आशु प्रवहति ।

---

१. ..........................दुःस्वप्नाश्चाशोभनाः ।
कथ्यन्ते मुण्डितैः सार्धं सम्भाषा सह वर्तनम् ॥

उद्गायतीव पश्यति । यदि सुवर्णं खादित्वाऽपगिरति उद्गिरतीव पश्यति । मध्वश्नाति महामधु यदि सापूपं भक्षयतीति पश्यति । यदि बिसानि भक्षयतीति पश्यति । यदि खरैर्वराहैर्युक्तैः रथादिभिर्याति यदि कृष्णवत्सां कृष्णां कृष्णवर्णां धेनुम् । नलदमाली नलदाख्यपुष्पमालायुक्तः दक्षिणामुखो व्राजयति गमयतीति पश्यति । यदि स एषां मध्ये यदि किञ्चित्पश्येत् तर्ह्युपोष्योपवासं कृत्वा पायसं स्थालीपाकं स्थालीपाको यथा भवति तथा श्रपयित्वा पक्त्वा रात्रीसूक्तेन प्रत्यृचं हुत्वा एकैकर्चा प्रत्येकं हुत्वा अनेनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयत् भुञ्जीत । सः यः प्रकृतः परमात्मा अतः व्याप्तः अतः अति अधिक इति वाऽश्रुतः सर्वात्मना श्रोतुमशक्यः पूर्णत्वात् अगतः सर्वात्मनाऽज्ञातः अमतः सर्वात्मना मननविषयो न भवतीति । अनतः स्वतन्त्रः अदृष्टः प्रत्यक्षेण सर्वात्मना विज्ञातः विशेषेण सर्वात्मना अनादिष्टः अनुपदिष्टः । सर्वात्मना

---

स्वयं मुण्डश्च बिभ्राणो जीर्णं नीलं तथाऽम्बरम् ।
कन्थां रक्तां तथा नीलां पुष्पमालां च मूर्धनि ॥
गर्दभारोहणं भग्नयानाधिष्ठानमब्जज ।
छिन्नछत्रधरो वाऽपि महिषारोहणं तथा ॥
दक्षिणाभिमुखो गच्छन् उष्ट्रवाह्यादिरोहणम् ।
दष्टश्च कपिभिर्देहे सृगालैर्वा वृकैस्तथा ॥
कर्णपादशिरश्छेदो दन्तानां पातनं तथा ।
नववस्त्रधरः पीडा भटैः पाशेन बन्धनम् ॥
विधवालिङ्गनं नीचैः पाषण्डैः प्रतिलोमजैः ।
वर्तनं गोपुरादीनां पतनं शाखिनामपि ॥
तुरगारोहणं भुक्तिः बौद्धायालयसेवनम् ।
मदिरापायिभिः पापरोगिभिः कितवैः सह ॥
वर्तनं दीपनिर्वापं देवानामुत्सवं तथा ।
ग्रामादिदाहो भक्ष्याणां फलादीनां च भक्षणम् ॥
मधूच्छिष्टं प्रतिच्छाया यात्रा युद्धोद्यमं भटैः ।
अभ्यङ्गं तैललाभं च मरीचं लवणं तथा ॥
लोकयन् एवमादीनि स्वप्ने शान्तिं समाचरेत् ।
जपहोमादिभिर्विद्वान् ..................... ॥ इति पञ्चरात्रे ॥

स्वयं सर्वस्य श्रोता मन्ता द्रष्टा उपदेष्टा घोष्टा शब्दं कुर्वन् विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः अन्तर्यामी पूर्णश्च । समः सर्वेषु भूतेष्वेकप्रकारः । आत्मा सर्वजीवनियामक इति विद्यात् परमात्मानम् ।

रात्रीसूक्तं[1] व्याक्रियते ।

रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः ।
विश्वा अधि श्रियोऽधित ॥

आयती आगच्छन्ती । रात्री रतिदत्वाद्रात्रिनामको विष्णुः । तत्प्रतिमाभूता दुर्गा च । अक्षभिर्बहुभिर्नयनैः[2] । पुरुत्रा बहुधा व्यख्यत् । ददर्श सर्वं विश्वा अधि । सर्वलोकेषु श्रियः सर्वेषाम् अधित दधार ॥ १ ॥

ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः ।
ज्योतिषा बाधते तमः ॥

देवी निवतः नीचान् । उद्वतः उच्चान् । अमर्त्या अमर्त्यात् । ब्रह्मादीन् । ओर्वप्राः आ उरु अप्राः । उरु उरुधा । आ समन्तात् । अप्राः अप्रात् अपूरयत् । ज्योतिषां ज्ञानेन करणेन तमः जीवानामज्ञानं बाधते । नाशयतीति ॥ २ ॥

निरु स्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥

आयती देवी । उषसं शुक्लवर्णम् । उषोनामकं प्रमदात्मकं स्वस्य रूपम् । स्वसारं निरस्कृत नितरामकरोत् । तमः अप इत् उ । हासते अपहासते । निराकरोति इत् उ । अवधारणे ॥ ३ ॥

सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।
वृक्षे न वसतिं वयः ॥

---

१. ऋ. १०/१२७/१-८.

२. त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते ।
- इति तन्त्रसारसङ्ग्रहे (४/६०) वचनात् ।

अद्य सा नः स्वामिनी । वयं यस्याः दासाः । ते तव । यामन् यमनाद्यामनामके । उदरे अविक्ष्महि प्रविष्टाः । स्म । वयः पक्षिणः वृक्षे वसती न इव ॥ ४ ॥

नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।

नि श्येनासश्चिदर्थिनः ॥

ग्रामासो बहुत्वाद्ग्रामनामको दैत्याः । त्वयि अविक्षत । न्यविशन् पद्वंतः पदमात्रप्रयायिनः मनुष्याः त्वयि न्यविशन् । पक्षिणो न्यविक्षत । न्यविशन् श्येनासश्चिदर्थिनः । श्येनासः पूर्णानन्दरूपी विष्णुः इनः स्वामीति जानन्तो देवाः । न्यविशन् अर्थिनश्चिदपि कृतकृत्या मुक्ताश्च न्यविशन् ॥ ५ ॥

यावया १वृक्यं वृकं यवय स्तेनमूर्म्ये ।

अथा नः सुतरा भव ॥

वृक्यं क्रूरस्वभावम् । असुरप्रकृतिं यावया निर्यापय मत्सकाशात् । वृकं क्रूरत्वात् वृकनामकं असुरं यावय । ऊर्म्ये ऊरीकृतप्रमाणे । देवि स्तेनं ब्रह्मस्तेनं महासुरम् । यावय उच्चाटय । अथा नः सुतरा भव । अथ असुराद्युच्चाटनानन्तरं नः सुतरा सुखतरा भव । सुखप्रदा भवेत्यभिप्रायः ॥ ६ ॥

उप मा पेपिशत् तमः कृष्णं व्यक्तमस्थितम् ।

उंष ऋणेव यातय ॥

पेपिशत् अज्ञानां पेशलम् । यत्कृष्णं तमः अज्ञानम् । मा उप मत्समीपे । अस्थितं स्थितम् । तत् उषः प्रकाशरूपे देवि । यातय । अपयातय । ऋणेव ऋणमिव ॥ ७ ॥

उप ते गा इवाकरं वृणीष्व दुहितर्दिवः ।

रात्री स्तोमं न जिग्युषे ॥

दिवो दुहितः ज्ञानस्य सुते ज्ञानव्यंग्ये इत्यर्थः । हे रात्रि ते स्तोमं स्तुतिम् उपाकरम् अकार्षं गा इव ब्राह्मणाय जिग्युषे जयिने । स्तोमं न इव । मत्कृतं स्तोमं वृणीष्व । अङ्गकुर्विति सूक्तार्थः ॥ ८, ४ ॥

ऐतरेयोपनिषत्

अथ खल्वियं सर्वस्यै वाच उपनिषत्सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवाऽऽचक्षते पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराश्चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वरा अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति यथाऽस्याः शिर एवममुष्याः शिरो यथाऽस्याः उदरमेवममुष्या अम्भणं यथाऽस्यै जिह्वैवममुष्यै वादनं यथाऽस्यास्तंत्रय एवममुष्या अङ्गुलयो यथाऽस्याः स्वरा एवममुष्याः स्वरा यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शा यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्राऽस्यकीर्तिर्भवति यत्र क चाऽर्या वाचो भाषन्ते विदुरेनं तत्राथातो वाग्रसो यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेदोष्ठापिधाना न कुलीदन्तैः परिवृता पविः सर्वस्यै वाच ईशाना चारु मामिह वादयेदिति वाग्रसः ॥ ५ ॥

भा— अथ सर्ववाग्विषया विद्योच्यते । विष्णुशब्दार्थत्वात्सर्ववाचाम् । पूर्वोक्ता अपि सर्ववागुपनिषद एव । तथापि मुख्यत एव सर्ववाग्विषयत्वाद्वक्ष्यमाणामेव सर्वस्यै वाच उपनिषदिति सर्वेऽप्याचक्षते ।

पृथिव्यादिस्थितो विष्णुः पृथिव्याद्यभिधानवान् ।
स्पर्शादीनां देवताऽसौ क्रमेणैव प्रकीर्तितः ॥
तस्य विष्णोरयं देहो वीणा साक्षात्प्रकीर्तिता ।
दैवी वीणा ततः सेयं लोकसिद्धा तु मानुषी ॥

ब्रह्मादिदेहान्यो वेद विष्णोर्वीणेति भक्तितः ।
विद्यापूर्णसुखः स स्याद्भूमिपूरितकीर्तिमान् ॥
विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत् ।
ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम् ॥
ओष्ठापिधानेत्येषा ह्यृक्सारो वाचः प्रकीर्तितः ।
विष्णोर्हि वाचि संस्थस्यैवोष्ठावेतौ पिधानवत् ॥
कुलीति चोक्तो भगवान्प्रलीनाशेषकुत्सितः ।
पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः ॥
सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत् । इति च ।

नेत्युपमानार्थम् । ओष्ठावपिधानवदस्येति । न च विष्णोरन्या सर्वस्या वाच ईशाना । स हि मुख्यतः सर्वेश्वरः । तस्यैव प्रस्तुतत्वाद्वक्ष्यमाणत्वाच्च ।

श्रियःपतिर्यज्ञपतिर्जगत्पतिर्गिरांपतिर्लोकपतिर्धरापतिः[1] इति भागवते ।
यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद इत्यादि श्रुतिश्च ।
स्त्रीलिङ्गत्त्वं देवतेत्यादिवदपि युज्यते । स्त्रीरूपत्वाच्च ॥ ९ ॥

टी— अथ खल्वियं सर्वस्यै वाच उपनिषदित्येतत्खण्डं व्याचष्टे । अथेत्यादिना । लौकिकवैदिकसर्ववाग्विषया । तत्र हेतुमाह । विष्णुरिति । विष्णुशब्दस्य योऽर्थस्तदर्थत्वात्सर्ववाचाम् । सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदित्येतद्व्याचष्टे । पूर्वोक्ता इति । पूर्वोक्ताः सर्वाः संहिता विद्या अपि सर्ववागुपनिषद एव । सर्ववाग्विषयविद्या एव । इमां त्वेवाऽऽचक्षत इत्येतद्व्याचष्टे । तथापीति । पृथिव्या रूपं स्पर्शा इत्यादितात्पर्यमाह । पृथिव्यादीति । अथ खल्वियं दैवी वीणेत्यादि व्याचष्टे । तस्येति । ततो देवस्य वीणात्वात् । दैवीवीणा प्रोक्ता तदनुकृतिरसौ मानुषीवीणा भवतीत्येतद्व्याचष्टे । लोकेति । स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति

१. भा. २/४/२०.

भूमिप्राऽस्य कीर्तिर्भवतीत्येतद्व्याचष्टे । ब्रह्मादिदेहानिति । श्रुतवदन इत्यस्य विद्यापूर्णमुखः स स्यादित्यर्थः । यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तथैतामृचं जपेदित्यस्याभिप्रायमाह । विद्याधिक्यार्थमिति । वाक्सारं वाक्साराख्यां तामृचं दर्शयति । ओष्ठापिधानेति व्याचष्टे । विष्णोर्हीति । अपिधाना नेत्यस्यार्थः । पिधानवदिति । सर्वस्यै वाच ईशाना इत्यस्यार्थः । सर्ववागीश्वरो विष्णुरिति । नेत्यस्योपमार्थत्वमुक्त्वा तद्योजयति । नेत्युपमार्थे । ओष्ठावपिधानवदस्येति । ओष्ठा पिधाना न इत्युच्यत इति । तस्यैव विष्णोरेव विष्णोः सर्ववागीश्वरत्वे प्रमाणमाह । श्रियः पतिरिति ॥

अथ खलु विद्यान्तरम् । इयं वक्ष्यमाणा । सर्वस्यै सर्वस्याः वाचः तद्विषया उपनिषत् रहस्यविद्या इमाः प्रागुक्ताः सर्वाः विद्याश्च सर्वस्यै वाच उपनिषदः । सर्ववाग्विषयरहस्यविद्या एव । तथापि इमां त्वेव वक्ष्यमाणामेव सर्ववाग्विषयोपनिषदमाचक्षते । पृथिव्या रूपं पृथिवीनामकं पृथिवीगतं रूपम् । स्पर्शाः स्पर्शाक्षरप्रतिपाद्यम् । अन्तरिक्षस्य रूपम् अन्तरिक्षगतमन्तरिक्षनामकं रूपम् । ऊष्माणः अधिदैवमूष्माक्षरप्रतिपाद्यम् । दिवो रूपं द्युगतं द्युनामकं रूपं स्वराः स्वरप्रातिपाद्यमग्ने रूपम् अग्निगतमग्निनामकं रूपं स्पर्शाः स्पर्शप्रतिपाद्यं वायो रूपं वायुगतं वायुनामकं रूपम् ऊष्मणः । आदित्यस्य आदित्यगतस्य आदित्यनामकं रूपं स्वराः । ऋग्वेदस्य ऋग्वेदनामकं रूपं स्पर्शाः यजुर्वेदस्य यजुर्वेदनामकं रूपम् ऊष्माणः । सामवेदस्य सामवेदगतं सामवेदनामकं रूपम् । स्वराः चक्षुषो रूपं चक्षुर्गतं चक्षुर्नामकं रूपं स्पर्शाः श्रोत्रस्योष्माणः । मनसः स्वराः । प्राणस्य रूपं स्पर्शाः । अपानस्योष्माणः । व्यानस्य व्यानगतस्य व्याननामकस्य रूपं स्वराः स्वरप्रतिपाद्यम् । अथ खलु विद्यान्तरम् । इयं ब्रह्मादिसर्वदेवानां तनुः दैवी देवस्य विष्णोः संबंधिनी वीणा भवति । असौ मानुषीवीणा लोकसिद्धा वीणा तदनुकृतिः दैवीवीणानुकरणवती भवति । सादृश्यवतीत्यर्थः । सादृश्यमुपपादयति । अस्या देववीणायाः शिरो यथा । एवममुष्या मनुष्यवीणायाः शिरः । यथाऽस्य उदरम् एवममुष्या मानुष्यवीणाया अंभणमुदरस्थानीयो मध्यदेशः । अस्यै अस्या जिह्वा यथा एवममुष्यै अमुष्या मानुषीवीणाया वादनं शलाका । यथा मानुषवीणायास्तंतय एवममुष्या

देववीणाया अङ्गुलयो यथाऽस्या देववीणायाः स्वराः ध्वनिविशेषाः एवममुष्याः स्वरा ध्वनिविशेषाः । यथा ह्येवेयम् इयं दैवीवीणा यथा हि शब्दवती तर्द्मवती नादवती । इयं दैवी वीणा लोमवता चर्मणा पिहितवती । एवमसौ लोमशेन चर्मणा पिहिता लोमशेन चर्मणा पुर वीणा अपिदधति स्म ह वै । य एतां दैवीवीणां वेद सः श्रुतवदनः विद्यापूर्णमुखो भवति ह । अस्य कीर्तिर्भूमिप्रा भूमिपूर्णा भवति । आर्या यत्र क्व च संसदि भाषन्ते एनं तत्र विदुः कथयन्तीति भावः । अथातो वाग्रसो वाचः सार उच्यते । तस्य विनियोगमाह । थस्यामिति । यस्यां संसद्यधीयानो वा भाषमाणो वा विरुरुचुषेत विशेषेण रोचितुमिच्छेत् । तत्रैतां वाक्साराख्यामृचं जपेत् । तामाह ओष्ठापिधाना नेति । ओष्ठौ पिधानौ न इव युग्मकपाटवत् कुली प्रलीनाशेषकुत्सिता दन्तैः परिवृता दन्तान्तरालवर्तिनी वा पविः पालकत्वात्सर्वस्माद्विशिष्टत्वाच्च पविः सर्वस्यै सर्वस्या वाचः ईशाना इह सदसि मां चारु वादयेदिति वाग्रसः ॥ ९ ॥

ऐतरेयोपनिषत्

अथ ह्यस्मा एतत्कृष्णहारीतो वाग्ब्राह्मणमिवोपोदाहरति प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः स च्छन्दोभिरात्मानं समदधाद्यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा स ·यो हैतौ णकारषकारावनुसंहितमृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात्स यदि विचिकित्सेत्सणकारं ब्रवाणीँ ३ अणकाराँ ३ इति ॥ सणकारमेव ब्रूयात्सषकारं ब्रवाणीँ ३ अषकाराँ ३ इति ॥ सषकारमेव ब्रूयात्ते यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयोऽथ यद्वयमनुसंहित मृतचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारावुपाप्ताविति ह स्माह स्थविरः शाकल्य एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे

वाचि हि प्राणं जुहुमः प्राणे वा वाचं यो ह्येव प्रभवः स एवाप्ययस्ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः ॥ ६ ॥

॥ इत्यैतरेयोनिषत्सु तृतीयारण्यके द्वितीयोऽध्यायः ॥ ३ ॥ २ ॥

॥ इति ऐतरेयोपनिषत् ॥

भा— संवत्सर इति विशेषणाद्विरिञ्चि एवात्र प्रजापतिः ।

ब्रह्मा विश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सरः ।

इत्यादि श्रुतेः ।

श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम् ।
तेनैव सम्यक्सन्धाय दार्ढ्यं देहस्य सोऽकरोत् ॥
सन्धानात्संहितेत्युक्तो विष्णुरेव सनातनः ।
विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते ॥
ण इत्याक्रियमाणत्वाण्णकारोऽस्य बलं मतम् ।
विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः ॥
प्रणेतृताऽखिलस्यैव विष्णोरुक्ता तथात्मता ।
आततत्वं सर्वगुणैर्देशतः कालतस्तथा ॥
आत्मशब्दोदितं तच्च षशब्देनाभिधीयते ।
ष इत्याक्रियमाणत्वं प्रणेतृत्वं च पूर्णता ॥
विष्णोः षकार इत्युक्ता वीत्युक्तस्य विशिष्टता ।
अन्त्यस्थित उकारस्तु ताच्छील्यादि हरेर्वदेत् ॥
एवं विशिष्टप्राणत्वमाततत्वं च सर्वतः ।
विशिष्टं च बलं विष्णोः सर्वस्माच्छीलमित्यपि ॥
उदितं विष्णुशब्देन तस्मादृक्संहितामनु ।
वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु ॥
विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः ।

स एव विष्णोर्बलवित्तथा प्राणत्वविद्भवेत् ॥
स एव मुक्तः संसारान्नित्यायुष्मान्भविष्यति ।
संहितासहितत्वेन यद्वचोऽधीमहे वयम् ।
वेदानन्यान्पुराणं वा तेन विष्णुपदोदितः ॥
अवाप्तो भगवान्स्यान्नस्तन्नामार्था यतोऽखिलाः ।
इत्याहुर्ऋषयः सर्वे किमन्याध्ययनाद्भवेत् ॥
यज्ञैर्वेत्यृषयोऽप्यन्ये कावषेया वदन्ति हि ।
मौनेन विष्णुशब्दार्थं ध्यायन्तो वाचमेव वा ॥
जुहुमो विष्णुनामाख्यां जपन्तो मन्त्रमेव वा ।
नमस्कारसमायुक्तं जुहुमः प्राणमत्र हि ॥
किमन्यैर्बहुभिः कार्यैरेतस्यैवाधिकत्वतः ।
एतदर्थानुसन्धानपूर्वं वेदानथापि वा ॥
अधीमहे यजामो वा नान्यथा तु कथञ्चन ।
एष एव हि सर्वेषां वेदानामर्थ ईरितः ॥
विष्णुनामोदितो योऽर्थस्तद्व्याख्याऽन्यद्वचोऽखिलम् ।
एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः ।
पूर्णस्वभावः सर्वेषां वचसामर्थ ईरितः ॥
संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः ।
अन्यविद्यास्वशिष्यस्य न ब्रूयात्प्रथमं क्वचित् ॥
व्याख्यानशक्तिहीनाय नैव ब्रूयात्कथञ्चन ।
वैष्णवाय सुवृत्ताय मेधाश्रद्धायुताय च ॥
गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम् ॥ -इति च ।

य एतेन ण इतिशब्देनाक्रियमाणं विष्णोः पूर्णबलं षशब्देनाक्रियमाणं देशतः कालतो गुणतश्चाततत्वं च सर्वां संहितामनु तदर्थत्वेन वेद । अक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति स सम्पूर्णबलं सर्वप्रणेतृत्वशक्त्यादियुक्तं विष्णुं वेद । अथेत्यादिका अपि संहितारूपा एव । पदवर्णयोः पृथगनभिव्याहारात् । तस्मात्सर्वशब्दा विष्णु-

नामव्याख्यानरूपा एव । यद्वयं संहितायुक्तत्वेनचोऽधीमहे तेनास्माकं णशब्दषशब्दार्थरूपो विष्णुरुपात्तः । तद्व्याख्यानत्वात्सर्ववाचाम् । वीत्युपसर्गत्वादुकारस्य च ताच्छील्यार्थत्वादुक्तार्थविशेषणरूपत्वेन प्रसिद्धत्वान्न पृथक्तयोर्व्याख्यानमत्र कृतम् । ऋच इति सर्ववाचामुपलक्षणम् । अतः सर्ववेदादिशब्दोदितः सर्वगुणपरिपूर्णो भगवान्नारायण इति सिद्धम् ।।६।।

सर्वैश्च वैदिकपदैरपि लोकशब्दैर्मेघाग्निवारिधितलादिरवैश्च सर्वैः ।
एकोऽभिधेय परिपूर्णगुणः प्रियोऽलं नारायणो मम सदैव सुतुष्टिमेतु
[1]यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ।।
हनुशब्दो ज्ञानवाची हनूमान्मतिशब्दितः ।
रामस्य स्वृत[2]रूपस्य वाचस्तेनानयन्त हि ।।
भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात्तृतीया मारुतीतनुः ।।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।
यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादतः ।। -इति[3] च ।
साधको रामवाक्यानां तत्समीपगतः सदा ।
हनूमान्प्रथमो ज्ञेयो भीमस्तु बहुभुक्पितोः ।।
पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथानन्दतीर्थनामा प्रकीर्तितः ।।

---

१. यथा भगवत्स्वरूपविज्ञानं समस्तपुरुषार्थसाधनं तथा स्वस्वरूपविज्ञानमपीत्यतः तदाविष्कुर्वन्नाह ।। यस्येति । - इति न्यायसुधायाम् ।
२. स वायुरेवाभवदत्र भीमनामा, भृता हि माः सकला हि यस्मिन् । ता.नि.१२/५४
३. इति सद्भावे - इति छान्दोग्यभाष्ये; इति भावबृत्ते - इति तत्त्वप्रदीपे (१/१/१)

दशेति सर्वमुद्दिष्टं[१] सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः[२] ॥
आसमन्तात्पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ॥
वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।
येन विष्णोर्हि वर्पाख्यान्गुणानज्ञासिषुः परान् ॥
ईशानासः सूरयश्च निगूढान्निर्गुणोक्तिभिः ।
त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः ॥
एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
[३]स्वयम्भुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ॥ -इति[४] च ॥
[५]पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये
तृतीयप्रघट्टके द्वितीयोऽध्यायः ॥ ३ ॥ २ ॥

॥ इति ऐतरेयोपनिषद्भाष्यम् ॥

---

१. दशेति वै सर्वम् इत्यादि - इति अस्यामेवोपनिषदि (२/२/४)

२. रामावतारे हनूमान् रामकार्यार्थसाधकः ।
स एव भीमसेनस्तु जातो भूम्यां महाबलः ॥
कृष्णावतारे विज्ञेयो मरुदंशः प्रकीर्तितः ।
मणिमान्नाम दैत्येषु सङ्कराख्यो भविष्यति ॥
सर्वेषां सङ्करं यस्तु करिष्यति न संशयः ।
धर्मान् भागवान् सर्वान् नाशयिष्यति सर्वथा ॥
तदा भूमौ वायुदेवो भविष्यति न संशयः ।
प्रज्ञया सदृशो यस्य नास्ति लोके चतुर्दशे ॥
अतः स प्रज्ञया पूर्णो भविष्यति न संशयः । - इति गरुडपुराणे
(Venkateshwara steam Press Edition, Bombay.)

३. प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः । -इति बृहदारण्यकोपनिषदि

४. इति यजुःसंहितायाम् - इति तत्त्वप्रदीपे (१/१/१. पु. १८)

५. भगवत्स्वरूपप्रतिपादनेनैव ग्रन्थोपसंहारः समुचित इत्याशयवान् नित्यापरोक्षं भगवन्तं सम्बोध्य स्तौति ॥ निःशेषेति । इति न्यायसुधायाम् ४/४)

टीका - अथ हास्मा एतत्कृष्णहारीत इत्येतत्खण्डं व्याचष्टे । संवत्सर इत्यादिना । संवत्सरशब्दार्थस्य विरिञ्चार्थत्वे प्रमाणमाह । ब्रह्मेति । खण्डं प्रमाणेन व्याचष्टे । श्रान्तो ब्रह्मेत्यादिना । व्यस्रंसत इत्यस्यार्थः । श्रान्त इति। स च्छन्दोभिरात्मानं समदधादित्येतद्व्याचष्टे । तेनैवेति । अनेन च्छन्दोभिरित्यस्य च्छन्दोनामकभगवद्रूपैरित्यर्थ उक्तो भवति । यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता इत्यस्यार्थः । संधानादिति । णकारो बलं षकारः प्राण आत्मेत्येतद्विवरणम् । विष्णुनाम्नीति । विष्णुनामगतषकारेण विष्णोः रमाब्रह्मेशपूर्विण अखिलस्य जगतः प्रणेतृतोक्ता षकारेणात्मता चोक्ता। तथा शब्दः समुच्चये । तच्च आततत्वं च विष्णोः ष इत्याक्रियमाणत्वं व्यवह्रियमाणत्वं प्रणेतृत्वं पूर्णता च षकार इत्युक्ता । वीति । वीत्यनेनोक्तस्य बलादेर्विशिष्टतोच्यते । अन्त्यस्थितो विष्णुनामांत्यस्थित – आदिपदेन बलादेर्नित्यत्वं स्वतन्त्रत्वमित्यादि वीत्युपसर्गार्थमन्त्यस्थितोंकारार्थं च षकारणकाराभ्यां योजयति । एवमिति । एवं वीत्युपसर्गस्य विशिष्टार्थत्वे उकारस्य ताच्छीत्यार्थत्वे विष्णुशब्देन विष्णोः सर्वस्माद्विशिष्टप्राणत्वं शीलमित्युदितम् । आततत्वं च शीलमित्युदितम् । सर्वतो विशिष्टं बलं च शीलमित्युदितम् । स यो हैतौ णकारषकारावनुसंहितमृचो वेदेत्यादि विवृणोति। तस्माद्दृक्संहितामन्वित्यादिना । ऋक्संहितामनु । प्रतिसंहिता सुवर्णद्वयसमायोगे सति अत्र पूर्वोत्तरवर्णयोः विष्णुशब्दार्थम् । विष्णोः प्राणत्वमात्मत्वं बलं च यो वेत्ति स एव विष्णोर्बलवित् । तथा विष्णोः प्राणत्वविद्भवेत् । अनेन सबलां सप्राणां संहितां वेदेत्यस्यार्थ उक्तः । आयुष्यमिति विद्यादित्यस्य तात्पर्यम् । स एव मुक्त इत्यादि । ते यद्वयमनुसंहितमृचोऽधीमह इत्यादि व्याचष्टे । संहितेत्यादिना । संहितासहितत्वेन संहितादेवतासहितत्वेन । अखिला वेदाद्यास्तन्नामार्थाः विष्णुनामार्थाः यतः । एतद्धस्म वै तद्विद्वांस आहुर्ऋषयः कावषेया इत्यादि व्याचष्टे । किमन्याध्ययनादित्यादिना । वाचि हि प्राणं जुहुमः । प्राणे वा वाचमित्येतद्व्याचष्टे । ममौनेति । वाचं जुहुमः प्राण इति शेषः । अत्र वाचि प्राणं जुहुमः एष एव विष्णुशब्दार्थ एव । तदेव विवृणोति । विष्णुनामोदित इति । संहितोपनिषदुक्तार्थमुपसंहरति । एवमिति । पूर्णस्वभावः विष्णुः ता एताः संहिता इत्यादि विवृणोति । संहिताख्यानीति । नानन्तेवासिन इत्यस्यार्थः । अन्यविद्यास्वशिष्यस्येति । इत्यनुशासनं वेदशिक्षा ॥

स यो हैतौ णकारषकारावनुसंहितमृचो वेदेत्येतद्व्याचष्टे । य इति । ऋचां संहितामन्वित्यस्यार्थः । तदर्थत्वेनेत्यादि । सबलां सप्राणां संहितां वेदेत्यस्य व्याख्यानम् । सम्पूर्णबलमिति । पदवर्णयोः पदगतवर्णयोः ते यद्वयमनुसंहितमृचोऽधीमहे तेन नो णकारावुपाप्ताविति ह्स्माहेत्येतद्व्याचष्टे । यद् वयमिति । विष्णुनामगतणकारस्य णकारो बलं षकारः प्राण आत्मेति व्याख्यां कृत्वा वीत्यस्योपसर्गस्य उकारस्य च व्याख्यानाभावे कारणमाह । वीत्युपसर्गत्वादिति । अत्रोपनिषदि । अनुसंहितमृच इत्यत्र ऋच इति पदं सर्ववाचामुपलक्षणं भाष्यार्थमुपसंहरति । अत इति । इति सिद्धम् ॥

अथैवंविधा बहुविधाः संहिताः सप्रपंचमभिधायेदानीं संहिताशब्दनिरुक्तिपूर्वकं तन्माहात्म्यमाह कृष्ण हारीतः कृष्णनामा हरितपुत्रः । अस्मै य शिष्यत्वेन पुत्रत्वेन वा सन्निहिताय । एतद्वक्ष्यमाणं वाग्ब्राह्मणं सर्ववाग्विषयं ब्राह्मणम् इव एव उप उदाहरति उपदिशति । संवत्सरः प्रजापतिः। संवत्सरनामा चतुर्मुखः प्रजाः सृष्ट्वा व्यस्रंसत स्रस्ताङ्गोऽभूत् । स श्रान्तः सन् च्छन्दोनामकभगवद्रूपैरात्मानं श्रान्तम् । स्वदेहं समदधात्समाहितं स्वस्थं दृढमकरोत् । ब्रह्मा च्छन्दोभिरात्मानं समदधाद्यत्तस्मात्संहिता । च्छन्दोनामकभगवद्रूपाणि । संधानकर्तृत्वात्संहितानामकानि । तस्यै वा एतस्यै संहितायै । तस्यैतस्य संहितानाम्नो भगवतो णकारो बलं बलवाचकः षकारः प्राण आत्मा प्रणेतृत्वपूर्णत्वात् वाचकः । य उपासक एतौ णकारषकारौ णकारषकारार्थभूतबलचेष्टापूर्णत्वानि ऋचः अनुसंहितम् ऋच इत्युपलक्षणम् । सर्ववाचां संहितामनु । यत्र वर्णद्वयसमायोगस्तत्र तत्रेत्यर्थः । वेद सर्ववाचां पूर्वोत्तरवर्णेषु णकारार्थावनुसंहितौ जानातीत्यर्थः । सः स एव संहितां सबलां सप्राणां णकारषकारार्थभूतविष्णुबलप्रणेतृत्वपूर्णत्वानि वेद । एतद्ज्ञानमायुष्यं नित्यायूरूपमोक्षसाधनमिति विद्यात् । स उपासकः यदि स णकारं ब्रवाणीति अणकारां ब्रवाणीति णकारवाच्यबलानुसन्धानपूर्वक वदामि किं तद्रहितं वा इति । यदि विचिकित्सेत् संशयं कुर्यात् तर्हि संशयं विना सणकारमेव ब्रूयात् । सषकारं ब्रवाणीति । अषकारं ब्रवाणीति । यदि विचिकित्सेत्तर्हि । असंशयं सषकारमेव षकारार्थभूतप्रणेतृत्वात्स्वविशिष्टभगवदनुसन्धानपूर्वकमेव ब्रूयात् । त एवं

जानन्तो वयमनुसंहितं संहितायुक्तत्वेन ऋचोऽधीमहे यत् यस्मान्माण्डूकेयं माण्डूकेयेन दृष्टम् । अध्यायं प्रब्रूम इति यत् तेनाध्ययनेन नोऽस्माकं णकार-षकारावुपाप्तौ तदर्थभूतो विष्णुरुपाप्तः प्राप्तः । णकारव्याख्यात्मकत्वा-त्सर्ववाचामिति ह स्माह ह्रस्वो माण्डूकेयः । अथ यः स्थविरः शाकल्योऽपी-त्याह स्म । वयमनुसंहितं संहितासहितत्वेन ऋचोऽधीमह इति यत् माण्डूके-यदृष्टमध्यायं प्रब्रूम इति यत् तेन नः णकारषकारावुपाप्तौ तदर्थो विष्णुः प्राप्त इति तदेतद्विद्वांसः कावषेया ऋषय आहुः वयं किमर्था अध्येष्यामहे णकारषकारार्थभूतविष्णवनुसन्धानं विना किमित्यधीयामहे । विष्णवनुसन्धानं विना किमपि नाधीयामह इत्यभिप्रायः । वयं किमर्था यक्ष्यामहे विष्णवनुसन्धानं विना किं प्रयोजनमपेक्ष्य यजामहे । विष्णवनुसन्धानस्यैव पुरुषार्थहेतुत्वादिति भावः । विष्णवनुसन्धानयुक्ताः वाचि वागिन्द्रियदेवतायां प्राणं प्राणदेवतां जुहुमः विष्णवनुसन्धानपूर्वकं वागिन्द्रियव्यापारमध्ययनादिकुर्म इत्यर्थः । वाचं प्राणे वा जुहुमः । प्राणाधीनां कुर्मः । मौनेन विष्णुशब्दार्थं ध्यायाम इति भावः । तयोरन्योन्यस्मिन् होममुपपादयति । यो यस्य भवः स एव तस्याप्ययः[१] । यो यस्मादुत्पद्यते स तस्मिन् लीयत इत्यर्थः । तथा च प्राणाद्वाच उत्पत्तेः वाचः प्राणे लयः प्राणव्यक्तेर्वागजन्यत्वात्तस्य तस्यां लय इत्युक्तं भवति । ता एताः संहिता अनन्तेवसिने अन्यविद्यासु शिष्यत्वरहिताय न ब्रूयात् । अन्तेवासित्वेऽप्यसंवत्सरवासिने न ब्रूयात् । अप्रवक्त्रे व्याख्या-नशक्तिशून्याय च न ब्रूयात् । इत्याचार्याः । आचार्याः । उपनिषदाचार्या महिदासादय इत्याचक्षते । एष पंथा एतत्कर्मेत्याद्युक्तार्थावधारणार्थं द्विरुक्तिः ॥ ६ ॥

एवं समापितभाष्यो भगवानचार्यवर्यो यादृग्गुणविशिष्टतया भगवन्तमन-योपनिषदा प्रतिपादितवान् तादृग्गुणविशिष्टभगवत्प्रसादप्रार्थनरूपं मङ्गलाचर-

१. विपर्ययेण तु क्रमोऽत उपपद्यते च । (ब्रह्मसूत्रम् - २/३/१४)
पूर्वं पूर्वं यतो विष्णोः सन्निधानं क्रमाधिकम् ।
सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा ॥
व्याप्तिश्चाभ्यधिका तेषामत एव न संशयः ॥ इति ब्रह्मसूत्रभाष्ये (२/३/१४)
लयो भवेद्युत्क्रमतो हि तेषां ततो हरिः प्रलये श्रीसहायः ॥ म.भा.ता.नि. ३/३२

णमन्तेऽप्याचरति । सर्वैश्चेति । वैदिकपदैः अग्न्यादिपदैर्लौकिकपदैः कुड्यकुसूलादिशब्दैः । तलरवः तलताडनोत्पन्नरवः । भगवद्ज्ञानवत्स्वस्वरूपज्ञानस्यापि पुरुषार्थहेतुत्वात्तज्ज्ञानार्थं स्वकृतभाष्यस्याप्तिमूलत्वेन प्रमाणतमत्वादत्युपादेयत्वज्ञापनार्थं च स्वस्वरूपं ज्ञापयन्स्वकृतभाष्यं भगवति समर्पयति । यस्येति । वेदवचने बळित्थेत्यादौ यस्य वायोर्देवस्यालं दिव्यानि त्रीणि रूपाण्युदितानि । वायोस्तन्मूलरूपं बट् बलात्मकम् । दर्शतं ज्ञानेन ततं पूर्णज्ञानमित्यर्थः । अवतारत्रयेऽपीत्थमेव बलाद्यात्मकतयैव निहितं निर्धारितम् । भर्गः परमात्मानं बिभर्ति गच्छति चेति । पूज्यत्वान्महत् । तस्य वायोर्देवस्य प्रथमकं रूपं रामवचोनयं रामवचांसि सीतां प्रति नयतीति सीतावचांसि रामं प्रति नयतीति वा । द्वितीयं वपुः कुरुपृतनाक्षयकारित्वात्पृक्षः । यत्तु तृतीयं वपुः मध्वः मध्वनामकं तेन मध्वेन प्रभौ प्रभुविषये इदं भाष्यं कृतम् । बळित्थेत्यादिवेदवचने रूपत्रयं कथमुक्तमित्यतस्तत्प्रमाणेन व्याचष्टे । हनशब्द इत्यादिना । साधते मतिरित्यत्र मतिशब्दार्थमाह । हनशब्द इति । हनूमानिति शब्दितः । मतिज्ञानशब्दयोः पर्यायत्वात् । ऋतस्य धेना अनयन्त ससृतः इत्येतद्व्याख्याति । रामस्येति । धेना इत्यस्यार्थः । वाच इति । ऋतस्येत्यस्य । स्वृतरूपमिति । आ शये सप्तशिवासु मातृषु इत्यस्य तात्पर्यं वक्तुं भीमशब्दार्थमाह । भृतम इति । भृताः पूर्णाः माः प्रमाणानि यस्मिन्नसौ भृतमः । सप्तशिवासु मातृष्वित्यत्र मातृशिवशब्दयोरर्थमाह । वाच इत्यादिना । माः प्रमाणभूता वाचो मातरो मापकत्वाद्ज्ञापकत्वान्मातर इत्यर्थः । तत्र मातृभूतसप्तशिवासु शयः । तद्विचारनिष्णातो यतः ततो भीमः स्मृतः । यदीमनु प्रदिवो मध्व इत्यत्र मध्वशब्दार्थमाह । मध्विति । मारुती मरुत्सम्बन्धिनी तृतीया तनुः आनन्दतीर्थः मध्वः स्यात् । एतद्ज्ञानफलमाह । इतीति । यदीमुपह्वरते साधते मतिरित्यस्यार्थमाह । साधक इति । साधत इत्यस्यार्थोऽयम् । उपह्वरत इत्यस्यार्थः । तत्समीपग इति । एवंभूतो हनूमान् प्रथमो ज्ञेयः । भीमस्तु द्वितीयः । पितोरन्नस्य बहुभुक् बहुभोगशक्तिमान् पितुमानित्यस्यार्थोऽयम् । पृतनाक्षयकारीत्यनेन पृक्ष इत्यस्यार्थः । तृतीयकस्तु पूर्णप्रज्ञ इत्यनेन दशप्रमतिमित्यस्यार्थः । दशप्रमतिपूर्णप्रमतिशब्दयोः पर्यायत्वमुपपादयति । दशेति सर्वमिति । इह दशेतिशब्देन सर्वमुद्दिष्टं

सर्वमितिशब्देन पूर्णमुच्यते । सर्वपूर्णदशशब्दाः पर्याया इत्यर्थः । ततो दशशब्दस्य पूर्णवाचित्वात्प्रमति शब्दस्य प्रज्ञावाचित्वाद्दशप्रमतिशब्देन पूर्णप्रज्ञ एवोक्तः । यदीमनु प्रदिव इत्यादि व्याचष्टे । आसमन्तादिति । तृतीयोऽसुः तृतीयावतारो मुख्यवायुः । कलियुगे जगदसत्यमप्रतिष्ठमनीश्वरं वदद्भि-र्मायिभिर्गूहितं सन्तम् । आसमन्तात्सर्वप्रकारेण पतित्वे सर्वस्वामित्वविषये गूढं हरिं मथायति मथ्नाति । सर्वशास्त्राणि विचार्य हरेः सर्वस्वामित्वं निश्चा-ययतीति भावः । अनेनाधवे गुहासन्तं मातरिश्वा मथायतीत्युक्तार्थम् । निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरय इत्येतद्विवृणोति । येनेति । तृतीयावतारेण ईशानासः समर्थाः अवतारत्रयस्य कालभेदमाह । त्रेतायामिति । एतेषां परमो विष्णुरित्यनेन प्रयत्पितुः परमान्नीयत इत्यस्य तात्पर्यमुक्तं भवति ॥

अयमेतत्सूक्तार्थः । बलित्थेति । सहसः सहोरूपस्य वायोः तन्मूलरूपम् । बट् बलात्मकम् । दर्शतं ज्ञानेन व्याप्तं च । सत् वपुषे अवताराय । इत्था इत्थम् । धायि आधायि निहितम् । भगवतेति शेषः यतः परमात्मनः स्वयमजनि तस्य भर्गः भरणगमनकर्तृत्वात् । यदीं यदेव उपह्वरते समीपे तिष्ठति साधते साधयति रामकार्याणि । मतिः हनूमन्नामकं प्रथमं रूपमित्यर्थः। येन हनुमता ऋतस्य यथार्थज्ञानस्वरूपस्य सस्रुतः अमृतस्रावयुक्ताः धेनाः वाच अनयन्त । सीतां प्रतीति शेषः । पृक्ष इति । द्वितीयं वपुः पृक्षः पृतनाक्षयकारि पितुमान् अन्नवान् बहुभुगिति भावः । नित्यः नित्यं शिवासु शोभ-नत्वाच्छिवशब्दवाच्यासु सप्तमातृषु ऋगादिसप्तप्रमाणेषु । आसमन्ताच्छये शेते तद्विचारनिरत इति भावः । अस्य वृषभस्य समर्थस्य । वायोस्तृतीयं वपुर्दोहसे ज्ञानदोहाय । दशप्रमतिं पूर्णप्रज्ञनामकम् । योषणः नार्यः । गुरुत्वाद्बहुवचनम् । जनयन्त अजनयन्त । निर्यदीमिति । बुध्नात् यदीं यस्मादेव । महितषड्गुणस्य हरेर्वर्पसो वरणीयत्वात्पालकत्वाद्वर्पोनामकान् गुणान् ईशानासः समर्थाः । सूरयो ज्ञानिनः । शवसा सुखेन । निः नितरामाक्रन्त ज्ञातवन्तः । यदीं य एव प्रदिवः प्रकृष्टप्रकाशरूपः । मध्व आनन्दतीर्थाख्यो गुहासन्तं गूहितं सन्तम् । निर्गुणोक्तिभिर्हरिम् । आधवे आसमन्तात्पतित्वे । मथायति मथ्नाति । शास्त्रेण

विचार्य निश्चाययतीति भावः । मातरि प्रमाणभूतऋगादौ श्वयति गच्छतीति मातरिश्वा वायुः । प्रयत्पितुः यद्रूपत्रयं परमात्पितुः प्रणीयते उत्तमेन हरिणा प्रेर्यन्तेऽवतारादौ । पृक्षु यः प्रश्नरूपान् वीरुधः स्तंबादीन् दंसु दन्तेषु पर्यारोहति चर्वितवत् शकलीकरोतीत्यर्थः । अस्य यज्जनुषं जन्म अवतारम् । उभा उभौ । लक्ष्मीनारायणौ । इन्वतः प्रेरयतः । घृणा श्रुचिः । कृपया शुद्धः । स आत् इत् । आभ्यामेव यविष्टः अवरोऽभवत् । आदिन्मातॄः आविशत् अनयोरेवाज्ञया मातॄराविशत् न पुनरेतस्य गर्भवासनिमित्तविकर्मणा मातृप्रवेशः । यासु आसमन्ताच्छुचिः । बाह्याभ्यन्तरशत्रुभिरपीड्यमान एव स्वसामर्थ्येनैव विवावृधे । सनायुवः पूर्व्याः अनुसारद्रुपक्रमादिभिः अरुहत् विचारितवान् । अवरासु नव्यसीषु नूतनासु भारतादिषु धावते शीघ्रमेवार्थं प्रकटीकरोति । भक्त्यतिशयेन पुनरपि भगवन्तं प्रणमति । पूर्णेति । वेधसे सृष्टिकर्त्रे विष्णवे नमः ॥

सृष्ट्याद्यष्टकमश्नुतेऽखिलजगद्यस्माद्विना तं तृणं
नेष्टे चालयितुं च यो निविशते रूपैरनेकैरिदम् ।
पूर्वार्णोत्तरवर्णयोरथ च तत्संधावनुस्मर्यते
यो बाध्वादिभिरंजसा परतमं विष्णुं भजामो वयम् ॥

आचार्यवाचामभिसन्धिमद्धा नामर्त्यसङ्घा अपि वक्तुमीशाः ।
यथावबोधाभिहितार्थभाष्येष्वस्मासु सन्तः करुणां क्रियासुः[1] ॥

## श्रीमन्महैतरेयोपनिषद्भाष्यविवरणे श्री विश्वेश्वरतीर्थविरचिते तृतीयप्रघट्टके द्वितीयोऽध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

समर्पितं मया भवेत्सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

---

१. ता मन्त्रवर्णैरनुवर्णनीयां शर्वेन्द्रपूर्वैरपि वक्तुकामे ।
संक्षिप्तवाक्ये मयि मन्दबुद्धौ सन्तो गुणाढ्याः करुणां क्रियासुः ॥
-इति सुमध्वविजये १/६

श्रीमद्राघवेन्द्रतीर्थश्रीपादविरचितः

# श्रीमन्महैतरेयोपनिषन्मन्त्रार्थः

।।श्रीमद्धनुमद्भीममध्वान्तर्गतश्रीरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः।।

बह्वृचोपनिषत्प्रोक्तनानारूपामूर्त्यात्मकं हरिम् ।
नत्वा तदुक्तमन्त्राणां करिष्येऽर्थस्य सङ्ग्रहम् ।।

विष्णौ भक्तानामभक्तानाञ्चावान्तरविभागपूर्वकं भक्तानामुपास्यविष्णोः स्थानान्याह– 'प्रजा' इति ।

[1]प्रजा ह तिस्रोऽ अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे ।
बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेश ।। १ ।।

त्रिस्रः प्रजाः पिशाचराक्षसासुराख्याः, अत्यायम् अतिक्रमं भगवति अतिक्रमं ईयुः प्राप्ताः, भगवद्विमुखा अभूवन् ते च तमः प्राप्ता इति ज्ञेयम्, ह प्रसिद्धम् । अन्याः तिस्रः, प्रजाः इत्यनुषज्यते । अन्याः तिस्रः मनुष्योत्तम-ऋषिदेवरूपाः प्रजाः नितरामभितः सर्वतः अर्कम् आजनैरर्चितत्वहेतुना अर्कनामकं विष्णुम् । 'अर्चपूजाया'मिति धातोः, विविश्रे, विविशिरे । 'इरयोरे'[2] इति सूत्रेण 'इरे' इत्यस्य रेभावः, मनसा प्रविष्टाः, तदाश्रिताः इति यावत् । तथा अन्याः प्रजाः मनुष्योत्तमरूपाः नितराम् अर्कं, प्रागुक्तव्युत्पत्त्या अग्निगतमर्काभिधं विष्णुं विविश्रे । अग्निहोत्रादिकर्मभिः अग्निगतं हरिमाराध्य शुद्धान्तःकरणास्सन्तः श्रवणादिना तज्ज्ञानं सम्पाद्य मुक्ता अभवन्नित्याद्यर्थो भाष्ये

देवाश्च ऋषयो मर्त्यसत्तमा इति ते त्रयः ।
आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ।। इत्युक्त्वा,

'अग्निस्थमाश्रितामर्त्या विष्णुमर्काभिधं हरि'मित्युक्त्या अभिजयस्य प्रतीतेः भुवनेषु लोकेष्वन्तः बृहत् तेजसा बृंहितत्वहेतुना बृहदित्युक्तम् । आदित्यस्थं

---

१. ऐ. २/१/१. (ऋ.८/१०१/१४)    २. पा.सू. ६/४१/७६

ब्रह्म ऋषीणामुपास्यतया तस्थौ ह स्थितमभूद्धि । ऋषयो हि स्वाध्यायेनादित्ये विष्णुमाश्रितास्सन्तो मुक्ता आसन्निति भावः । पवमानः संसारात् पावयित्वा महानन्दे मिनोति प्रक्षिपतीति व्युत्पत्त्या वायुस्थः पवमाननामा हरिः देवानामाश्रयभूतस्सन् हरितः दिशः आ सम्यक् प्रविष्टवान्; व्याप्तो भवतीत्यर्थः, सर्वत्र व्याप्तं पवमानस्थं विष्णुमाश्रितास्सन्तो मुक्ता अभूवन्निितिभावः ॥ १ ॥

[1]त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः ।
त्वमस्माकं तव स्मसि ॥ २ ॥

हे इन्द्र! युजा युक्तेन त्वयेत् त्वयैव सहायभूतेन, त्वत्सहायबलेनैवेति यावत्, स्पृधः शत्रून्, वयं प्रतिब्रवीमहि । हीत्यसंशयमाह । निराकुर्म इति यावत् । त्वमस्माकमसि; स्वाम्यसि वयं च तव स्मसि भृत्याः स्मः, स्म इत्यस्य 'स्मसि' इति छन्दसं रूपम् । 'इदन्तो मसिः'[2] इति सूत्रात् ॥ २ ॥

[3]अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसानऽ आवरीवर्ति भुवनेष्वन्तः ॥ ३ ॥

वायुं वायुस्थं विष्णुं च स्तौति । गोपां, गुपू रक्षणे आकार प्रत्ययो गुणश्च, गोप्तारम्, अनिपद्यमानं क्वचिदप्यतिष्ठन्तं, वायोस्सदा सञ्चारित्वात्तद्गतहरेरपि तथात्वादिति भावः, आ आसमन्तादित्यर्थे निपातोऽयम् । ततः परा च पराक्, पथिभिः मार्गैश्चरन्तं वायुं वायुस्थं विष्णुं च अपश्यं दृष्टवानस्मि । कीदृशो वायुः वायुसंस्थश्चेत्यत आह स इति । वायुः वायुगो विष्णश्च सध्रीचीश्च दिशः अवक्रतया वर्तमानाः पूर्वादिदिशः, विष्वग्वर्तमानाः दिशः कोणदिशः, द्वितीयाबहुवचनम्, वसानः 'वस आच्छादने', आच्छादयन् वर्तमानः, सर्वासु दिक्षु सर्वदा वसन्निति यावत् । भुवनेषु लोकेष्वन्तः सर्वभूतेष्वावरीवर्ति, 'वृतु वर्तने' मरुद्गतः सदा सञ्चरन् वर्तते इत्यर्थः ॥ ३ ॥

---

१. ऋ. ऐ. २/१/४ (ऋ. ८/९२/३२) २. पा.सू. ७/१/४६
३. ऐ. २/१/६ (ऋ. १/१६४/३१)

[1]अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे ।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥ ४ ॥

वायुं वायुस्थं च पुनस्तौति । हे इन्द्र, अप्रक्षितम् अक्षीणं वसु वित्तं हस्तयोर्बिभर्षि । अषाळ्हम् असह्यं सहः बलं तन्वि । तनोतेर्यणादेशः छान्दसः, श्रुतः प्रसिद्धस्त्वं दधे, लडर्थे लिट् दधासि, पुरुषव्यत्ययः । हे इन्द्र, ते तनूषु देहेषु, तनौ भूरयः अनन्ताः क्रतवः कर्तृत्वात् क्रतुनामकाः जीवाः कर्तृभिः आवृतासो न कनकावटा इव आवृतासः (वृतासः) आच्छादिताः वायुना वायुगेन च सर्वे जीवा व्याप्ता इत्यर्थः ॥ ४ ॥

[2]अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न निचिक्युरन्यम् ॥

वायोर्हि प्राणापानाख्यौ रूपविशेषौ द्वौ । तत्र प्राणः अपानेन सहितः स्वधया अनन्तरूपेण हरिणा गृभीतो गृहीतः नियत इति यावत् 'हृगृहोर्भश्छन्दसि'[3] इत्युक्तेः । प्राङेति अपाङ् चैति ऊर्ध्वमधस्ताच्च गच्छति प्राणः श्वासादिव्यापारायोर्ध्वं गच्छति, अपानस्तु विण्मूत्रव्यापारायार्वाग्गच्छति । प्राणोऽपानश्च द्वावप्यानन्दरूपहरिणा नियतौ, ऊर्ध्वाधोगमनव्यापारौ सदा कुरुतः न पराग्गच्छतः तन्नियतत्वाभावे पराग्गतिरपि कदाचिद्भवेदिति भावः ॥

किञ्च स्वधया अनुगृहीतस्सन् वायुः स्वरूपेणामर्त्यो मरणरहितः मर्त्येन मरणशीलेन देहेन सयोनिः सहित एव वर्तते । तर्हि कथं तस्यामर्त्यत्वमित्यत तद्विवृणोति । ता इति । ता तौ वायुस्वरूपतद्देहौ शश्वन्ता शाश्वतौ मोक्षपर्यन्तमेव देहस्य सहस्थितत्वात् शाश्वतत्वमिति भावेनाह- वियन्ता इति । सदृशौ विषूचीना विषूचीनौ नानागती मोक्षसमये विरुद्धगमनवन्तावित्यर्थः । तदुपपादयति नीति । अन्यं देहं निचिक्युः ददृशुः । वायुचेतनस्य भगवत्प्राप्तिमत्त्वाददर्शनं देहस्य जडतया नाशाद्दर्शनमिति भावः ॥ ५ ॥

---

१. ऐ. २/१/७ (ऋ. १/५५/८) २. ऐ. २/१/८ (ऋ.१/१६४/३८)
३. वार्तिक.

[१]चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षं सूर्यऽआत्मा जगतस्तस्थुषश्च ॥ ६ ॥

चित्रं चित्तरम्, अतिशयेन चित् चित्तरं, चित्तरमेव चित्रम्, अलोपः छान्दसः सर्वचेतनोत्तमं देवानामनीकं चेष्टकत्वात्, ईशितृत्वात् कर्तृत्वाचच अनीकम् 'अन चेष्टायाम्' 'ईश ऐश्वर्ये' 'डुकृञ् करणे' देवानां चेष्टकः ईशिता कर्ता चेत्यर्थः । अनश्चासौ ईचासौ केश्चेति विग्रहः । मित्रादेश्चक्षुःदर्शकं ज्ञानदमित्यर्थः; एतादृशं ब्रह्म उदगात् उदैत् सूर्यमण्डले स्थित्वा उदभूदित्यर्थः । सूर्यः, सूरिभिः प्राप्यत्वेन हेतुना सूर्यगतो हरिः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा आदानादिकर्ता, अन्तर्यामीति यावत् । यद्वा अत्तीत्यात्मा प्रलये संहर्तेत्यर्थः । द्यावापृथिवी अन्तरिक्षं च आप्राः आप्नोत् 'पॄ पालनपूरणयोः' प्रकाशेन पूरितवान् व्याप्तोऽभूदित्यर्थः ॥ ६ ॥

[२]बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम् ।
अनुष्टुभमनुचर्चूर्यमाणमिन्द्रं नि चिक्युः कवयो मनीषा ॥ ७ ॥

बीभत्सूनां जगद्भर्तुमिच्छूनाम् अपाम् अब्देवतानां दिव्यानां द्युस्थानीयानां सख्ये सखित्वे चरन्तं हंसं हंसरूपिणं विष्णुमाहुः सयुजं ताभिः सहैव चरन्तं चाहुः । अनुष्टुभम् अनुष्टुप्छन्दस्काम् ऋचं अनुचर्चूर्यमाणं पुनः पुनर्वदन्तम् सन्द्रं परमेश्वरं मनीषा मनीषया तृतीयाया लुक् अनेन कवयो ज्ञानिनः निचिक्युः । मेघसंस्थं हंसरूपं विष्णुमनुष्टुभमुच्चारयन्तं मुनयो ददृशुरित्यर्थः ॥ ७ ॥

[३]वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् ।
इन्द्रात्परि तन्वं ममे ॥ ८ ॥

नवाक्षरचतुष्पादा बृहतीछन्दस्का ऋक्, अष्टाक्षरचतुष्पादा अनुष्टुप् । तथा च वाचमनुष्टुप्छन्दस्काम् ऋचम् अष्टापदीं चतुरक्षराष्टपदे युक्ताम् ऋतस्पृशं

१. ऐ. २/२/४. (ऋ. १/११५/१) २. ऐ. २/३/५ (ऋ.१०/१२४/९)
३. ऐ. २/२/६ (ऋ. ८/७६/१२)

सत्यनामकविष्णुविषयां नवस्रक्तिं बृहतीत्येवकुर्वन् अक्षरनवपादबृहतीत्येव सम्पादयन् इन्द्रात् तस्यैन्द्रादितिव्याख्या, ऐन्द्रात् इन्द्राख्यविष्णुसम्बन्धि-मुख्यप्राणात् बृहत्यभिमानिदेवता तंवतनुम् अनुब्रूयां हरेः प्रतिमामहँ परिममे निर्मितवानस्मि इति मुनिराह । बृहतीदेवता मुख्यप्राणो, अनुष्टुब् देवता ह्युमादेवी, एवं पञ्चविंशोत्तरशतानुष्टुबाधिक्यं भवतीति बृहत्यभिमानि-प्राणाख्यप्रतिमा हरेरेका यथा सम्पादिता तथा बृहतीसहस्रशंसनेन सम्पादित-प्राणाख्यभगवत्प्रतिमायाः इव अनुष्टुब्देवतोमारूपभगवत्प्रतिमान्तरमपि सम्पादितं भवति । अतो बृहतीशंसनमेव कार्यमिति ॥ ८ ॥

[1]यदक्षरं पञ्चविधं समेति युजो युक्ता अभियत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवास्सर्व एकं भवन्ति ॥ ९ ॥

परमात्मनो ह्यधिदैवम्, अध्यात्मं देहाख्यं चेति रथद्वयम् । तत्राधिदैवरथे पञ्चविधं नारायणाद्यात्मना पञ्चविधमक्षरम् । 'अक्षरमम्बरान्तधृतेः'[2] इत्युक्तरीत्या चतुर्विधनाशराहित्यनिमित्तेन अक्षरपदवाच्यं यद् ब्रह्म समेति, नारायणा-दिनामकैः पञ्चविधैः स्वकीयस्त्रीरूपैः अर्धनारीपुमात्मना स्वस्मिन्नेव समेति । वामभागे स्त्रीरूपं दक्षिणभागे पुंरूपमित्येवम् अर्धनारीपुमात्मकं पञ्चविधं तिष्ठति । तदेतदित्यध्याहृततच्छब्दादिना अग्रे तत्र अन्वयः यच्छब्दस्य बोध्यः । युजः अर्धनारीपुमात्मना युजो मिलिताः युक्ताः अश्वरूपेण भगवद्रथे युक्तास्सन्तो देवाः यद् ब्रह्म अभिसंवहन्ति तदेतदिति शेषः ।

'सर्वसाधुगुणत्वात्तु वायुस्सत्यमितीर्यते' इत्युक्तेः । सत्यस्य वायोः सर्वसाधुगुणस्वरूपसत्यताप्रदं तद् ब्रह्मेति यत्र यस्मिन् स्वरूपे एव युज्यते स्त्रीपुंरूपेण युज्यते । अर्धनारीपुमाकारेण वर्तत इत्यर्थः । तत्र सर्वे देवाः ए कं भवन्ति । अर्धनारीपुमाकारस्सन्तः तदेकस्थानाः भवन्तीत्यर्थः । अत्र 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'[3] इत्यधिकरणोक्तरीत्या भगवतः स्त्रीत्वं पुंस्त्वं चेति द्वयमप्यस्तीति समर्थनादर्धभागस्थस्त्रीरूपमपि भगवत्स्वरूपमेव । देवानां तु

---

१. ऐ. २/३/१.
२. ब्रह्मसूत्रम् (१/३/१०)
३. ब्रह्मसूत्रम् (१/४/२४)

स्त्रीत्वे मानाभावेन स्वस्वभार्यया सह अर्धभागे भार्या, अर्धभागे पुमानित्येवमर्धनारीनरात्मकत्वं ध्येयम् । न तु भगवत इव भागद्वयमपि स्वात्मरूपम् ॥

एष नारायणो देवो अर्धनारीपुमात्मकः ।
सर्वे देवास्सभार्याश्च तं प्राप्य पुरुषोत्तमम् ॥
एकीभावं स्वभार्याभिरर्धनारीपुमात्मना ।
प्राप्यैवोपासते विष्णुं मुक्तास्संसारसागरात् ॥

इत्यादिवचनात् । ब्रह्मणस्तु- 'आत्मरतिरात्मक्रीड आत्ममिथुन' इति छान्दोग्यभाष्ये सप्तमे, 'भूमोपासनयोग्यस्तु साक्षाद् ब्रह्मैव मुख्यतः' इत्युक्त्वा 'तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत्' इत्युक्तत्वाच्च । स्वीयमपि रूपमस्तीत्याहुः । देवास्तत्रैकं भवन्तीति विशिष्योक्तिस्तु—

यस्मिन्स्वात्मनि युक्तस्सन् रमते स्त्रीपुमात्मना ।
मुनिगन्धर्वपित्राद्यैर्न तत्प्राप्यं कथञ्चन ॥
प्राप्नुवन्ति सुरास्सर्वे तद्रूपं जाज्वलत्सदा ।
अर्धनारीपुमाकारम्' इत्यादिस्मृत्या देवान्याप्राप्यत्वादिति ध्येयम् ॥ ९ ॥

[1]यदक्षरादक्षरमेति युक्तं युजो युक्ता अभियत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥ १० ॥

यस्मादक्षरात्, नारायणात् मूलरूपात् अक्षरं प्रादुर्भावरूपं युक्तं, स्त्रीपुंरूपयुक्तं समेत्यागच्छति । युजो युक्ताः इत्यादेः प्राग्वदर्थो ध्येयः । पुनरुक्तिः तात्पर्यार्था ॥ १० ॥

[2]यद्वाच ओमिति यच्च नेति यच्चा स्याः क्रूरं यदु चोल्बणिष्णु ॥
तद्वियूयकवयोऽन्वविन्दन् नामायत्ता समतृप्यंच्छ्रितेऽधि ॥
यस्मिन्नामायत्तासमतृप्यन् श्रितेऽधि तत्र देवाः सर्वयुजो भवन्ति ॥११॥

१. ऐ. २/३/१. २. ऐ. २/३/१.

यद्वाचः अकारस्य ओमित्यङ्गीकाररूपशब्दः, यच्चन् इति निषेधवाची वाचो विकाररूपशब्दः यच्चास्याः वाचः विकारभूतं क्रूरम् अर्थतः कठिनं शब्दजातं, यच्चास्याः विकारभूतम् उल्बणिष्णु श्रवणाप्रियं शब्दजातं तच्छब्दजातं वियूय विचार्य कवयो ज्ञानिनः, नामायत्ता नामायत्तानि; ओंकारादिनामार्थभूतानि भगवन्माहात्म्यादीनि, अन्वविन्दन् ज्ञातवन्तः । श्रिते तस्मिन् ज्ञाने परिपक्वे सति 'आपालन' इति धातोः अधि अधिकं समतृप्यन् मुक्ता अभूवन्, यस्मिन् विष्णौ नामायत्ता नामार्थभूतमाहात्म्यादीनि ज्ञात्वा तस्मिन् ज्ञाने शृते परिपक्वे सति तस्मिन् विष्णौ अधि अधिकं समतृप्यन्, तत्र देवाः सर्वयुजः मनो वाक्कायकर्मभिस्तत्रैव युक्ता भवन्ति । सर्वैर्युजः सर्वयुजः इति विग्रहः ॥ ११ ॥

[1]आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ॥१२॥

हे अश्विना अश्विनौ, आशुगतिमन्तौ आशुशब्दोपपदात् नयतेः क्विप् प्रत्ययः, उपपदान्तलोपो ह्रस्वश्च । ऋभवः सर्वदेवताः

आदित्यावसवो रुद्राः विश्वेदेवाः ऋभव इत्यपि ।
सर्वदेवसमाख्या च द्वादशाब्दादिकेष्वपि ॥ इतिस्मृतेः ।

युवयोरर्थे यं रथम् अधिदैवस्थम् अध्यात्मं शरीराख्यं च रथं चक्रुः, तेन मनसो जवीयसा वेगवता रथेन आयातम् आगच्छतं, शरीराख्यरथपक्षे तत्र सन्निधिं कुरुतमित्यर्थः । यस्य देहाख्यरथस्य मनोवाक्कर्मभिः सम्यग् योगे सति, विवस्वतो विविधवासवत्त्वहेतुना विवस्वच्छब्दितान्नारायणात् दिवः श्रीदेव्या दुहिता भारत्यभिमन्यमानं भगवदपरोक्षज्ञानं सतां जायते, तथा सुदिने शोभने उभे अहनी जीवन्मुक्त्यवस्थामुक्त्यवस्थे च ये ते रथेनेत्यन्वयः ॥ १२ ॥

[2]निमिषश्चिज्जवीयसा रथेनायातमश्विना ।
अन्ति षद्भूतु वामवः ॥ १३ ॥

---

१. ऐ. २/३/४. (ऋ. १०/३९/१२) २. ऐ. २/४/१ (ऋ.८/७३/२)

हे अश्विना अश्ववदाशुगौ, हयास्यौ, वा, जवीयसा अतिशयवेगवता रथेन आयातं, वां युष्मदीयम् अवनम् अस्माकम् अन्तिषत् समीप एव शीघ्रमेव भूतु भवतु । विकरणव्यत्ययः ॥ १३ ॥

[१]गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ।
शतं मा पुर आयसीररक्षन्न अधश्श्येनो जवसा निरदीयम् ॥ १४ ॥

गर्भे गर्भे एव सन् वर्तमानो वामदेवः एषां देवानां विश्वा विश्वानि जनिमानि जन्मानि, जनेरौणादिक इमनिच्, अहम्, अपूर्वस्य 'ओहाक् त्यागे' इत्यस्य कर्मणि डप्रत्यये रूपम् । क्रियाविशेषणम् । अत्यज्यमानम् अहेयमिति यावत् । दुःखादिहेयरहितत्वेन अन्ववेदं विदितवानभवम् । शतं शतसङ्ख्याकाः पुरः 'पॄ-पालनपूरणयोः' पूर्णाः आयसीः आयस्यः विशेषतो ज्ञानिन्यः 'अयगता' वित्यस्मात्सुप्रत्यये सिपि छान्दसवृद्धौ च रूपत्वात् । देवता इति योज्यम् । मा माम् अरक्षन् रक्षितवन्तः । श्येनः शं सुखम् अस्यास्तीति शी, ज्ञानरूपत्वात् यः, शीचासौ यश्चेति श्यः ईकारलोपः छान्दसः, सुखज्ञानरूपो विष्णुः इनः मम स्वामीति जानन् अहं, जवसा वेगेन अधः गर्भवासादधस्तात् निरदीयं गर्भवासमतीत्य निर्गतोऽस्मि इति योज्यम् ॥ १४ ॥

[२]मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ॥ १५ ॥

अभिद्रुहस्पदे, अभितः सर्वतः, द्रुहो द्रोहस्य, आस्पदे स्थाने नित्यनरके स्थातुं योग्या इति शेषः । निरामिणः, रामो रमणं रमतेर्भावे घञ्, रामोऽस्यास्तीति रामी पूर्णानन्दरूपो विष्णुः, तद्विरुद्धाः निरामिणः, यद्वा रामः रमणात्मकः विष्णुः, तद्वन्तः न भवन्तीति निरामिण विष्णौ जीवैक्यज्ञानेन तस्य नीचत्ववेदिनः इति यावत्, अत एवरामशब्दितस्य विष्णोः रिपवः, अन्नेषु भोगमात्रोपलक्षणं भोगमात्रे जागृधुः, गृधु अभिकाङ्क्षायां लिट्, आकाङ्क्षावन्तो बभूवुः ये, किञ्च येषां एतत् परं ब्रह्म नास्ति, अपरं जगच्च

१. ऐ. २/५/१. (ऋ. ४/२७/१) २. ऐ. ३/१/५ (ऋ. २/२३/१६)

नास्ति, किञ्चन एकं निर्गुणं ब्रह्म एकमेवास्ति, जगच्च अनिर्वाच्यमस्ति इतिपक्षः, एवंरूपेभ्यः स्तेनेभ्यः हे ब्रह्मणस्पते वेदपते वायो । नो अस्मान् कदाचित् मा ब्रूहि, नैव वद इति वायुं प्रति विद्याभिमानिनां प्रार्थनम् । मा ब्रूहीत्यत्र निषेधार्थकमाशब्द एव न तु माङ् ॥ १६ ॥

अथोपशमेनोपरमता मनुष्या ये धर्मिणो ब्रूहि तेभ्यस्सदा नः ।
आदेवानामोहते बि व्रयो हृदि बृहस्पते न परस्साम्नो विदुः[१] ॥१६॥

कस्मै तर्हि उपदेष्टव्या विद्येत्यतः इदमुच्यते- 'अथोपशमेने'त्यादि । प्रागुक्तेभ्यः विलक्षणाधिकारिसूचकः अथ इति निपातः । ये मनुष्याः शमेन भगवन्निष्ठया उपरताः भगवत्येव रताः धर्मिणः वर्णाश्रमोचितधर्मवन्तः ये च साम्नः, सामनाम्नो हरेः परम् उत्तमं न विदुः न जानन्ति ये च देवानां, व्रयः, वरत्वात् व्रः, नियामकत्वात् यः, व्रश्चासौ यश्चेति व्रयः परशब्दे अकारलोपः, देवानां वरं सर्वनियामकं व्रयशब्दितं ब्रह्म हृदि व्यूहते व्योहते वहन्ति तेभ्यः अस्मान् हे बृहस्पते श्रीवायो, सदा ब्रूहीति वायुं प्रतिविद्याभिमानिनं प्रार्थनम् ॥ १६ ॥

[२]प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ १७ ॥

परस्य राज्ञः प्रथ इति नाम, असौ राजा सर्वस्य जगतः स्वमुखे हवनात् हविषा हविर्नाम्नः हरेः अनुष्टुभश्च अनुष्टुब्देवतारूपस्य नृसिंहस्य हरेः मुखे हविः यत् अन्तर्णीतण्यर्थतया अयापयत् दत्तवनित्यर्थः । तथा यस्य सप्रथ इति नाम स च राजा हविषः हविर्नाम्नः अनुष्टुभस्य अनुष्टुब्देवतारूपस्य नृसिंहस्य हरेः मुखे हविर्यत् प्राग्वदर्थः, तयोः राज्ञोः यज्ञे होतृभूतो वसिष्ठः धातुः अनिरुद्धात् द्युतानात् प्रद्युम्नात् 'द्युतदीप्ताविति' धातोः, सवितुः सर्वस्य प्रसवहेतुत्वात् सवितृनामकात् वासुदेवात् विष्णोः विष्णुनामकात् सङ्कर्षणात् अनिरुद्धादिचतुर्मूर्त्यात्मकात् भगवत इति यावत्, रथन्तरं -

१. ऐ. ३/१/५ (ऋ.२/२३/१६) २. ऐ. ३/१/६ (ऋ. १०/१८१/१)

'रथमित्यानन्द उद्दिष्टः सम्भोग्यं थमुदाहृतम् ।
विष्णुभोग्यात्वन्तरिता लक्ष्मीरेव रथन्तरम्'॥

इत्युक्तदिशा रथन्तरनामिकां रथन्तरसामदेवतां श्रियम् आजभार आजहार । चतुर्मूर्त्यात्मकं देवं स्तुत्वा तेन प्रेषितश्रीदेव्या ज्ञानं लब्धवानित्यर्थः ॥ १७ ॥

[1]तेऽविन्दन् मनसा दीध्याना यजुःष्कन्नं प्रथमं देवयानम् ।
धातुर्द्युतानात् सवितुश्च विष्णो र्भरद्वाजो बृहदा चक्रे अग्नेः ॥१८॥

ते प्रागुक्ताः राजानौ वसिष्ठश्चेति त्रयः वक्ष्यमाणो भरद्वाजश्चेति चत्वारः 'यजुष्कन्नं प्रथमं देवयानं' यजुरादिशब्दचतुष्टयवाच्यं क्रमात् सङ्कर्षणप्रद्युम्नवासुदेवानिरुद्धभेदेन चतुर्मूर्त्यात्मकं देवं मनसा दीध्यानाः धारयन्तः ध्यायन्तः इति यावत् अविन्दन् व्यजानन् लब्धवन्त इति वा । भरद्वाजः आचक्रेआहूतवान् सः अध्वर्युभूतः धात्रादिशब्दितानिरुद्धप्रद्युम्नवासुदेवसङ्कर्षणाख्यचतुर्मूर्त्यात्मकात् अग्र्यत्वहेतुना अग्निनामकात् भगवतः सकाशात् बृहत् बृहन्नामकः बृहत्सोमदेवतानारायणः वरं दत्तवानित्यर्थः ॥१८ ॥

[2]अविन्दन्तेऽअतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् ।
धातुर्द्युतानात् सवितुश्च विष्णो रासूर्यादभरन् धर्ममेते ॥ १९ ॥

एवमधिदैवयज्ञे सम्यग् हविर्दानस्तुतिध्यानादिना चतुर्णां पुरुषार्थभोगमुक्त्वा अध्यात्मनि तदुच्यते । गुहायत् हृदयगुहायां स्थितं सन्निहितम् अतीवहितं यज्ञस्य 'प्रमितं यदस्ति तज्जानातीति' व्युत्पत्त्या सर्वज्ञस्य विष्णोः यत्तु धाम चतुर्मूर्त्यात्मकं नारायणाख्यं तेजः,(तत्) तद्देशस्थयजमानभूतमप्रथसप्रथनामकराजानौ होत्रध्वर्युभूतभरद्वाजौ चेति चत्वारः अविन्दन्, धात्रादिशब्दितानिरुद्धप्रद्युम्नवासुदेव सङ्कर्षणाख्यचतुर्मूर्त्यात्मकात् सूर्यात्, सूरिप्राप्यत्वहेतुना सूर्यनामकात् नारायणात् धर्मं सर्वलोकधर्षणशब्दितसंहरणहेतुना धर्मनामकं नृसिंहं ते चत्वारः आ+आभरन् आहरन् । चतुर्मूर्त्यात्मको

---

१. ऐ. ३/१/६ (ऋ.१०/१८१/३) २. ऐ. ३/१/६ (ऋ.१०/१८१/२)

नारायणः एतैश्चतुर्भिरभिष्टुतो नृसिंहः चतुर्भ्योऽभीष्टसिद्धिं दत्तवानिति तात्पर्यार्थः ॥ १९ ॥

[१]एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसा पश्यमन्तितस्तं माता रेळ्हि, स उरेळ्हि मातरम् ॥
॥ १० ॥

अत्र स इति तच्छब्देन चतुष्कपर्देति पूर्वमन्त्रेण सुपर्णपदेन प्रकृतो भगवान् परामृश्यते । स एकः सुष्ठु परमानन्दरूपतया सुपर्णपदवाच्यो रमापतिः समुद्रं क्षीरसमुद्रम् आविवेश प्रविष्टवान्, सः क्षीरसमुद्रस्थः इदं विश्वं सर्वं भुवनं जगत् विचष्टे पश्यति । तं क्षीरसागरस्थं सर्वज्ञं पाकेन परिपक्वेन मनसा अन्तितः समीपे अपश्यं दृष्टवानस्मीति ऋषिराह । माता व्यञ्जकत्वेन मातेव स्थिता सरस्वती प्राणस्थं रेळ्हि आस्वादते, प्रतिपादयति, स प्राणस्थो हरिः मातरं वाग्देवीं सरस्वतीं रेळ्हि प्रतिपाद्योऽस्ति । वाक्प्राणौ अन्योन्यं सम्बद्धौ तिष्ठतः इति भावः ॥ २० ॥

[२]अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ २१ ॥

सर्वात्तृत्वहेतुना अदितिनाम्ना हरिः द्यौः क्रीडनहेतुना द्युशब्दवाच्यस्सन् द्युस्थो द्यौरित्युच्यते । अन्तरीक्षमाणत्वहेतुना अन्तरिक्षशब्दवाच्यस्सन् अन्तरिक्षस्थोऽन्तरिक्षमुच्यते । सोऽदितिर्माननहेतुना मातृनामको मातृस्थो मातेत्युच्यते । सोऽदितिः पातृत्वहेतुना पितृनामकः पितृस्थः पितेत्युच्यते । सोऽदितिः पुत्रो नरकात् त्राणहेतुना पुत्रनामा पुत्रस्थः पुत्र इत्युच्यते । सर्वदेवेषु संस्थितोऽदितिः विश्वेदेवा इत्युच्यते । देवगन्धर्वमनुष्यपित्रसुराख्यपञ्चजनेषु स्थितः तन्नामा अदितिः पञ्चजना इत्युच्यते । जातेषु स्थितो जातनामत्वात् जातमित्युच्यते । अदितिः जनिक्रियानियामकत्वेन तत्र स्थित्वा जनित्वमित्युच्यते । जनिं तवयतीति जनित्वमिति विग्रहः । 'तव प्रकाशे' इति धातोः ॥

---

१. ऐ. ३/१/५ (ऋ.१०/११४/४) २. ऐ. ३/१/६ (ऋ.१/८९/१०)

[१]चित्रं देवानामुदगादनीकम् ॥ २२ ॥

पूर्वमेवव्याख्याता एषा ऋक् ॥ २२ ॥

[२]यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥ २३ ॥

यः सचिविदं कर्मसञ्चयवेदितारं प्रीत्यैव एकदेशस्थत्वात् सखायं हरिं तित्याज, त्यक्तवान्, यथावस्त्वस्ति तद्वैपरीत्यज्ञानीत्यर्थः । तस्य वाच्यपि वेदाध्ययनेऽपि भागः फलं नास्ति । यत् ईम् यदेव शृणोति, श्रवणं करोति, अलकम् अरकम् अरतिरूपान्धःतमःप्राप्तिसाधनमेव शृणोति, तत्कृतश्रवणमपि तमस्साधनमेव भवतीत्यर्थः । य इत्युक्ते स इति लभ्यते । स त्यागी सुकृतस्य पन्थां पन्थानं न वेद हि, न लभेत हि, स्वर्गमार्गं न प्राप्नोति हि । 'विद्लृ लाभे' इत्यस्य रूपमेतत् ।

अत्र विवेकः। भगवद्वस्तुयाथात्म्याज्ञाने एतद्विपरीतज्ञानमेकस्त्यागः । तद्भक्तद्वेषो द्वितीयः । निषिद्धविहितयोः करणाकरणे तृतीयः । अयोग्योपदेशः चतुर्थः । तत्र आद्यद्वयेन दुःखैकरूपतमःप्राप्तिः । तृतीयेन निरयप्राप्तिः । चतुर्थेन स्वर्गाप्राप्तिः ॥ २३ ॥

[३]यदन्ति यच्च दूरके भयं विन्दति मामिह ।
पवमान वि तज्जहि ॥ २४ ॥

हे पवमान, वायो, इह लोके अन्ति अन्तिके, समीपे, दूरके दूरे वा यद्भयं मां विन्दति प्राप्नोति, तद्भयं विजहि, विनाशय । 'हन हिंसागत्योः', जादेशः ॥ २४ ॥

[४]पवमानः सो अद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु नः ॥ २५ ॥

---

१. ऐ. २/२/४ (ऋ.१/११५/१) २. ऐ. ३/२/३, (ऋ.१०/७१/६)
३. ऐ. २/२/४ (ऋ. ९/६७/२१) ४. ऐ. २/२/४ (ऋ.९/६७/२२)

विचर्षणिः विशिष्टाः चर्षणयः प्रजाः यस्य सः विचर्षणिः, पवमानो वायुः, नोऽस्माकं स्वामी, यः पावयिता, सः पवित्रेण पवित्रनाम्ना हरिणा, तज्ज्ञानोपदेशेनेति यावत्, अद्य नः पुनातु पावयतु ॥ २५ ॥

[1]यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनीहि नः ॥ २६ ॥

अग्ने, अङ्गनेतृत्वात् सर्वशरीरनियामकत्वहेतोः अग्निशब्दवाच्य हे वायो, अर्चिषि अन्तरा पुरुषदेहे व्याप्ततेजोमध्ये विततं व्याप्तं पवित्र नामकं ब्रह्म तेन नः अस्माकम् अस्मान् पुनीहि ॥ २६ ॥

[2]यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः।
ब्रह्मसवैः पुनीहि नः ॥ २७ ॥

अर्चिवत्, अर्चिष्मत्, यत् ते तव, भस्मभूतं पावयित्वा त्रातीति व्युत्पत्त्या पवित्रनामकं ब्रह्म तेन पुनीहि नः । ब्रह्मसवैः ब्रह्मज्ञानाख्यसवैः नः पुनीहि । ब्रह्मज्ञानमुत्पाद्य नः पुनीहीत्यर्थः ॥ २७ ॥

[3]उभाभ्यां देव सवितः पवित्रेण सवेन च ।
मां पुनीहि विश्वतः ॥ २८ ॥

ज्ञानप्रसवहेतुना सवितः, सवितृननामकदेव, क्रीडादिगुणक हे वायो, पवित्रेण ब्रह्मणा सवेन ज्ञानेन च इत्युभाभ्यां मां विश्वतः सर्वस्मात् पुनीहि ॥ २८ ॥

[4]त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः ।
अग्ने दक्षैः पुनीहि नः ॥ २९ ॥

---

१. ऐ. २/२/४ (ऋ.९/६७/२३) २. ऐ. २/२/४. (ऋ. ९/६७/२४)
३. ऐ. २/२/४ (ऋ.९/६७/२५) ४. ऐ. २/२/४ (ऋ.९/६७/२६)

हे अग्ने सवितः देव, सौम्यरूपत्वात् सोम हे वायो, त्वं वर्षिष्ठः भक्ताभीष्टवर्षणशीलैः दक्षैः त्रिभिः धामभिः क्षीराब्ध्यादिस्थान त्रयस्थभगवद्रूपैः नः पुनीहि ॥ २९ ॥

[१]पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।
विश्वेदेवाः पुनीत मा जातवेदः पुनीहि मा ॥ ३० ॥

धिया बुध्या बुद्धिपूर्वकं देवजनप्रभृतयो मां पुनन्तु, विश्वेदेवाः मां पुनीत । पवित्रं कुरुत । हे जातवेदः अग्ने, मा मां पुनीहि ॥ ३० ॥

[२]आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते दिवा ॥ ३१ ॥

प्रत्नस्य पुरातनस्य रेतसो महारतिरूपस्य विष्णोः वासेन रमयतीति वासरं स्वसन्निधानेन सुखप्रदं ज्योतिः तेजः, आनन्दत्वात् आत् आकारवाच्यात् भगवतः एव तदनुग्रहादेवेति यावत् पश्यन्ति, उपासका देवाः दिवा दिवः परं परस्तात् यत्तेजः इध्यते दीप्यते, 'इन्धी दीप्तौ' तत्तेज इति पूर्वेणान्वयः॥ ३१ ॥

[३]यत्र ब्रह्मा पवमान छन्दस्यां वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन् इन्द्रायेन्दो परि स्रव ॥३२॥

हे पवमान वायो, ब्रह्मा मुक्तचतुर्मुखः, यत्र यस्मिन् विष्णुलोके, छन्दस्यां छन्दस्सम्बन्धिनीं वाचं वदन् व्याकुर्वन् सोमे सौम्यरूपतया सोमनामकभगवद्विषये ग्राव्णा सुतेन सोमेन, भगवन्तमिष्ट्वा तत्प्रसादेन, स्वस्य आनन्दं जनयन् महीयते, तद्भक्तनिकरैः पूज्यते, तत्र लोके हे इन्द्रो इष्टं ददातीति व्युत्पत्त्या इन्दुनामक हे वायो, इन्द्राय विष्णवे तत्समीपमिति यावत् परिस्रव मां परिस्रावय ॥ ३२ ॥

---

१. ऐ. २/२/४ (ऋ.९/६७/२७) २. ऐ. २/२/४. (ऋ. ९/६/३०)
३. ऐ. २/२/४ (ऋ.९/११३/६)

[1]यत्र ज्योतिरजस्रं यस्मिन् लोके स्वर्हितम् ।
तस्मिन् मां धेहि पवमानाऽमृते लोके अक्षित इन्द्रायेन्दो परि स्रव ॥
॥ ३३ ॥

यत्र लोके अजस्रं ज्योतिः निरन्तरं प्रकाशः, यस्मिन् लोके स्वः आनन्दरूपं विष्ण्वाख्यं ब्रह्म हितं सन्निहितमस्ति अमृते मृतिरहिते, अक्षिते नाशहीने, यस्मिन् लोके मां धेहि । इन्द्रायेत्यादिः- प्राग्वत् ॥ ३३ ॥

[2]यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ३४ ॥

यत्र यस्मिन् लोके वैवस्वतो विवस्वत्पुत्रो राजा मुक्तयमः दिवो देव्याः अवरोधनं परिवारभूताः सर्वदेव्यः यह्वतीः स्यन्दमानाः अमूः आपः गङ्गाद्याः सन्ति तत्र माममृतं कृधि मुक्तं कुरु । इन्द्रायेत्यादि प्राग्वत् ॥ ३४ ॥

[3]यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥३५॥

त्रिनाके त्रिदिवसंज्ञके यत्र लोके दिवो देव्याः सरस्वत्याः अनुकामं स्वेच्छाधीनं चरणं सञ्चारः यत्र लोकाः ब्रह्मादिनिवासगृहाः ज्योतिष्मन्तः प्रकाशवन्तो वर्तन्ते, तत्र माममृतं कृधि मुक्तं कुरु । इन्द्रायेत्यादि प्राग्वत् ॥ ३५ ॥

[4]यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥३६॥

यत्र लोके कामाः विषयाः निकामा नितरामिच्छाधीनाः सन्ति, यत्र ब्रध्नस्य सूर्यस्य विष्टपं स्थानं, स्वधा च सुखं, तृप्तिरलम्बुद्धिश्चास्ति तत्र माममृतमित्यादि ॥ ३६ ॥

---

१. ऐ. २/२/४ (ऋ.९/११३/७) २. ऐ. २/२/४. (ऋ. ९/११३/८)
३. ऐ. २/२/४ (ऋ.९/११३/९) ४. ऐ. २/२/४ (ऋ. ९/११३/१०)

[१]यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ३७ ॥

यत्र लोके भगवद्भक्तिसुखान्यानन्दाः, मोदाः भोगनिमित्तकसुखानि, अल्पभोगनिमित्तकसुखानि मुदः, भोगविशेषनिमित्तकसुखानि प्रमुदः आसते तिष्ठन्ति, यत्र कामस्येच्छायाः कामाः विषयाः आप्ताः प्राप्ताः सन्ति, तत्र माममृतं कृधीत्यादि ॥ ३७ ॥

[२]उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ३८ ॥

वयं तमसोऽज्ञानात् उद्गताः, उत्तरं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तः अपरोक्षीकुर्वन्तः देवत्रा देवविषयेऽपि देवं सूर्यं सूरिप्राप्यं सर्वोत्तमं देवम् अगन्म प्राप्ताः स्म इति सूर्यमण्डलगः स्तूयते ॥ ३८ ॥

[३]ओष्ठा पिधाना न कुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ॥ ३९ ॥
(ऐ. २/२/४/६)

ओष्ठा ओष्ठौ पिधाना न, युग्मकवाटाविव, कुली कुत्सितानि लीनानि यस्मात्सः, प्रलीनाशेषकुत्सितः इत्यर्थः, दन्तैः परिवृता दन्तान्तरालवर्तिनी, पविः पालकत्वात् सर्वस्मात् विशिष्टत्वाच्च पविः (सर्वस्यै) सर्वस्याः वाचः, ईशाना स्वामिनी इह सदसि मां चारु साधु वादयेत् ॥ ३९ ॥

[४]रात्री व्यख्यदायती पुरुत्रा देव्य१क्षभिः ।
विश्वा अधि श्रियोऽधित ॥ ४० ॥

रात्री व्यख्यदित्यष्टर्चसूक्तं गायत्रीछन्दस्कं रात्रिनामकविष्णुदुर्गोभयात्मकम् ।

---

१. ऐ. २/२/४ (ऋ.९/११३/११) २. ऐ. २/२/४. (ऋ. १/५०/१०)
३. ऐ. २/२/४ शान्तिमन्त्रः ४. ऐ. २/२/४ (ऋ. १०/१२७/१)

आयती सर्वलोकेष्वागच्छन्ती, रात्री रतिदत्वेन रात्रीत्युक्तस्त्रीदेवतारूपो विष्णुः, तत्प्रतिमाभूता रात्रिदेवता दुर्गा च देवीअक्षभिः नयनैः, पुरुत्रा बहुधा व्यख्यत् ददर्श । विश्वा अधि लोकेषु श्रिता श्रियः अधित दध्रे धृतवती ॥४०॥

[1]ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः ।
ज्योतिषा बाधते तमः ॥ ४१ ॥

देवी निवतः नीचान् उद्वतः - उच्चान् अमर्त्या अमर्त्यान् ब्रह्मादिसर्वजीवान् ओर्वप्रा आ उरु अप्राः, आसमन्तात् उरु उरुधा अप्राः अपूरयत् । ज्योतिषा ज्ञानेन तमः अज्ञानं बाधते जीवानां नाशयति ॥ ४१ ॥

[2]निरु स्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥ ४२ ॥

(तृतीया) आयती आगच्छन्ती देवी, रात्रिदेवता दुर्गादेवी भगवांश्च उषसं शुक्लवर्णम् उषोनामकं प्रमदात्मकं स्वस्वरूपं स्वसारं निरस्कृत नितरामकरोत् । तेन च रूपेण तम अप इत् उ हासते, अपहासत एव निराकरोत्येव ॥ ४२ ॥

[3]सा नो अद्य यस्या वयं नि ते यामन्नविक्ष्महि ।
वृक्षे न वसतिं वयः ॥ ४३ ॥

(चतुर्थी) अद्य अस्मिन् दिने, उपलक्षणमेतत्, सर्वदिनेषु, स्वाग्ररात्रिदेवता नोऽस्माकं स्वामिनी वर्तते इति भावः । यस्याः रात्रिदेव्याः वयश्च दासभूताः, कथं ते तव यामन् अन्नादिकं यमयत्यत्रेति यमनामके उदरे न्यविक्ष्महि प्रविष्टाःस्मः । कथं वृक्षे वसतिं नीडं वयः, 'विःपक्षिपरमात्मनो'रित्युक्तेः पक्षिणः, न इव, पक्षिणो यथा वृक्षगतनीडं प्रविशन्ति तथेति ॥ ४३ ॥

[4]नि ग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।
नि श्येनासश्चिदर्थिनः ॥ ४४ ॥

१. ऐ. २/२/४ (ऋ.१०/१२७/२) २. ऐ. २/२/४. (ऋ. १०/१२७/३)
३. ऐ. २/२/४ (ऋ.१०/१२७/४) ४. ऐ. २/२/४ (ऋ. १०/१२७/५)

(पञ्चमी) निग्रामास इति, न केवलं वयमेव त्वदुदरं प्रविष्टाः, किन्तु ग्रामासः बहुत्वहेतुना ग्रामनामकाः दैत्याः, 'आज्जसेरसुक्,'[१] ग्रामा एव ग्रामासः, न्यविक्षत न्यविशन्, पद्वन्तः पादमात्रप्रयायिनो मनुष्याश्च न्यविक्षत, श्येनासः श्येना एव श्येनासः, शः पूर्णानन्दो विष्णुः इनः स्वामीति जानन्तो देवाः चिदपि न्यविक्षत, अर्थिनः अर्थवन्तः कृतकृत्या मुक्ता अपि न्यविक्षत, अस्मदादयः सर्वेऽपि त्वद्गर्भवासिनः इति रात्रिदेवता स्तूयते । न्यविक्षत इत्यत्र विशतेः [२]'सिब्बहुलं लेटि' (पा.सू. ३/१/३४) इति सिपि सति सकारस्य षत्वे कषयोगे क्षेति रूपम् । नेर्विशः[३] (पा.सू.१/३/१७) इत्यात्मनेपदम् ।। ४४ ।।

[४]यावया वृक्यं१वृकं यवयस्तेनमूर्म्ये ।
अथा नः सुतरा भव ।। ४५ ।।

(षष्ठी) हे ऊर्म्ये ऊरीकृतप्रमाणे प्रमाणप्रतिपाद्ये इति यावत् देवि ! वृक्यं वृकस्वभावं क्रूरस्वभावम् असुरप्रकृतिं जनं मत्सकाशात् यावय निर्यापय । वृकं क्रूरत्वात् वृकनामकम् असुरं यावय, स्तेनं ब्रह्मस्तेनं महासुरं यावय उच्चाटय, अथ असुराद्युच्चाटनानन्तरं नः अस्माकं सुतरा सुखप्रदा भव ।। ४५ ।।

[५]उपमा पेपिशत् तमः कृष्णं व्यक्तमस्थित ।
उष ऋणेव यातय ।। ४६ ।।

(सप्तमी) पेपिशत् पेशलम् अज्ञानिमनोहरं कृष्णं कृष्णवर्णं तमः मामुप मत्समीपे व्यक्तमस्थित, स्थितमभूत्, (तत्तमः) हे उषः प्रकाशस्वरूपे देवि ऋणेव ऋणमिव यातय अपनय ।। ४६ ।।

[६]उप ते गा इवाकरं वृणीष्व दुहितर्दिवः ।
रात्रि स्तोमं न जिग्युषे ।। ४७ ।।

---

१. पा.सू. ७/१/५०.
२. पा.सू. (३/१/३४)
३. पा.सू. (१/३/१७)
४. ऐ. २/२/४ (ऋ. १०/१२७/६)
५. ऐ. २/२/४ (ऋ.१०/१२७/७)
६. ऐ. २/२/४ (ऋ. १०/१२७/८)

(अष्टमी) हे दिवो दुहितः ज्ञानपुत्रि ज्ञानाभिव्यङ्ग्ये ! रात्रिदेवते, तव स्तोमं स्तुतिम् उपाकरम् । अकार्षं, शब्विकरणं छान्दसम् । कथं जिग्युषे जयिने स्तोमं न स्तुतिमिव, चारुबुद्धित्वात् सामाद्यमागमाश्च(?) शत्रून् जित्वा समागताय यथा स्तुतिं कुर्वन्ति तथा उपाकरमित्यर्थः । स्तोमं वृणीष्व स्तोमश्रवणेन मयि प्रसादं कुरु । कथं गा इव, ब्राह्मणो दत्ताः गाः स्वीकृत्य दातरि यथा प्रसादं करोति तथा प्रसादं कुर्विन्ति । यद्वा ब्राह्मणाय तत्प्रीत्यर्थं गाः प्रयच्छति यथा तथा अहं त्वत्प्रीत्यर्थं स्तोत्रमुपाकरं त्वं वृणीष्वेति ॥४७॥

महाभूत्युक्तमन्त्राणां भाष्याद्युक्तार्थसङ्ग्रहः ।
राघवेन्द्रेण यतिना कृतो नित्यानुसन्धये ॥

## ॥ इति श्रीमद्राघवेन्द्रतीर्थश्रीपादविरचितः श्रीमन्महैतरेयोपनिषन्मन्त्रार्थः समाप्तः ॥

॥ श्री कृष्णार्पणमस्तु ॥

समर्पितं मया भवेत्सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

# ऐतरेयभाष्यटीकयोः व्याख्यान्तस्य प्राणाग्नि(बळित्था)सूक्तस्य पूर्णपाठः

बळित्था तद् वपुषे धायि दर्शतं
देवस्य भर्गः सहसो यतोऽजनि ।
यदीमुप ह्वरते साधते मति-
र्ऋतस्य धेना अनयन्त सस्रुतः ॥

पृक्षो वपुः पितुमान् नित्य आ शये
द्वितीयमा सप्तशिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे
दशप्रमतिं जनयन्त योषणः ॥

निर्यदीं बुध्नान्महिषस्य वर्पस
ईशानासः शवसा क्रन्त सूरयः ।
यदीमनु प्रदिवो मध्व आधवे
गुहा सन्तं मातरिश्वामथायति ॥

प्रयत् पितुः परमान्नीयते
पर्या पृक्षुधो वीरुधो दंसु रोहति ।
उभा यदस्य जनुषं यदिन्वत
आदिद् यविष्ठो अभवद् घृणा शुचिः ॥

आदिन्मातॄराविशद् यास्वा शुचि-
रहिंस्यमान उर्विया वि वावृधे ।
अनु यत् पूर्वा अरुहत् सनाजुवो
नि नव्यसीष्ववरासु धावते ॥

- ऋग्वेदसंहिता (मण्डल-१, अष्टक-२, सूक्त-१४१.)